॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

५५

छन्दःशास्त्रविभागे (१) प्रथमपुष्पम्



भट्टकेदारप्रणीतः

# वृत्तरत्नाकरः

भट्टनारायणभट्टीयव्याख्यासहितः ।

सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः ।

श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः ।

धर्मशास्त्रशास्त्रिणा 'साधोलालरिसर्च' वृत्तिभाजा
वरकलोपाख्य वैद्यनाथशास्त्रिणा

भूमिकादिभिः सम्भूय सुसम्पादितः ।

प्रकाशकः—
जयकृष्णदास-हरिदास गुप्तः—
चौखम्बा संस्कृत सीरीज आफिस,
विद्याविलास प्रेस-गोपालमंदिर के उत्तर फाटक,
बनारस सिटी ।

१९८४
51
1929

# अत्र पुस्तके सङ्कलितानां विषयाणां ग्रन्थानां च नामानि।


| सं० | नाम। | पृ० |
|---|---|---|
| १ | भूमिका। | १-४. |
| २ | सटीकसटिप्पणवृत्तरत्नाकरविषयसूची। | ५-१४. |
| ३ | वृत्तरत्नाकरः। (मूलम्) | १५-२६ |
| ४ | सटीकसटिप्पणो वृत्तरत्नाकरः। | १-१६८. |
| ५ | वृत्तरत्नाकरकारिकासूची। | १६९-१७६. |
| ६ | वृत्तरत्नाकरे प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि। | १७७. |
| ७ | वृत्तरत्नाकरटीकायां प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि। | १७७-१७८. |
| ८ | वृत्तरत्नाकरटीकायां प्रमाणत्वेन उदाहरणत्वेन प्रत्युदाहरणत्वेन चोपन्यस्तानां पद्यानामकारादिवर्णाऽनुक्रमसूची। | १७९-१८६. |
| ९ | सटीकवृत्तरत्नाकरे समुपात्तानां छन्दसामकारादिवर्णाऽनुक्रमसूचीपत्रम्। | १८७-१९६. |
| १० | वृत्तरत्नाकरटिप्पणे समुपात्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि। | १९७-१९८. |
| ११ | वृत्तरत्नाकरटिप्पणे समुपात्तानां पद्यानामकारादिवर्णाऽनुक्रमसूची। | १९९-२०६. |
| १२ | श्रुतबोधः। | २०७-२१२. |
| १३ | छन्दोमञ्जरी। | २१३-२४५. |
| १४ | सुवृत्ततिलकम्। | २४६-२६६. |

श्रीः

# भूमिका ।

इह खलु दुःखबहुले संसारे निरन्तरं निरतिशयं सुखं परिमागमाणानां जनानां सुखोपलब्ध्युपायबोधनाय परादिरूपेण भगवती श्रुतिः प्रादुर्बभूव । सा च साङ्गोपाङ्गा सरहस्या सावधानं निषेविता कामधेनुरिव सर्वमभिलषितं पूरयतीति विदितमिदं विपश्चिदपश्चिमानाम् । अक्षरात्मिका सा—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

इत्यादिलक्षणलक्षिता निखिलसंसारमूलरूपिणी निरन्तरमानन्दाभिलाषिभिः सेवनीया सेविता सेव्यते सेविष्यते च । सहृदयहृदयनिवासिनी ललितपदा नानाऽलङ्कारैरलङ्कृता तैस्तैः सहृदयहृदयसंवेदिनीभिर्भावभङ्गीभिरञ्चिता सुवृत्तशालिनी रुचिरवर्णवती नवरससम्भृता अमृताऽऽत्मकला कविवदनारविन्दावतीर्णा सा कं न खलु सचेतसमानन्दयति। अत एव सहृदयशिरोमणिभिर्मम्मटाचार्यैः—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

इत्यादीन्यस्याः प्रयोजनान्युक्तानि । गद्यपद्यभेदेन द्विविधा हि सा । तत्र पद्यशालिनी सा छन्दःशास्त्रज्ञानमन्तरा न निषेवितुं शक्यते इति तदवश्यं ज्ञेयम् । ऋगात्मिका सा च पद्यशालिन्येवेति तन्निषेवणाय छन्दःशास्त्रज्ञानमपेक्ष्यते इत्यपि विदितं विदुषाम् । अत एव छन्दसां भगवत्याः श्रुत्याः "छन्दः पादौ तु वेदस्य" इत्यादिभिस्तत्र तत्र पादत्वं प्रतिपादितम् । त्रैवर्णिकानामेव च वेदाऽध्ययनेऽधिकारः । स च वेदः साङ्ग एवाधीतः समुपकरोति । वेदाङ्गानि च षट् शिक्षादीनि । तथा च शिक्षायाम्—

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ इति ।

अत एव च्छन्दसामपरिज्ञाने प्रत्यवायः श्रूयते । तथा च श्रुतिः—
"यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण या-

जयति वाऽध्यापयति वा स स्थाणुं वर्च्छति गर्तं वा पद्यते प्रमीयते वा पापीयान् भवति यातयामान्यस्य च्छन्दांसि भवन्ति" इति ।

एवं च त्रैवर्णिकानां छन्दोज्ञानं नितरामपेक्षितमिति सिद्धम् । तदितरेषामपि लौकिकव्यवहारोपयोगाय छन्दोज्ञानमपेक्ष्यते । यथा वेदवाणी पद्यात्मिका तथा लोकवाण्यपि पद्यवती भवति । तस्मात् सर्वेषां छन्दोज्ञानमपेक्षितमित्यपि सिद्धम् । अत एव छन्दःशास्त्रे लौकिकवैदिकभेदेन द्वैविध्यं पिङ्गलादिभिः प्रतिपादितम् । इदमेव मनसि विभाव्य अद्यावधि बहुभिश्छन्दःशास्त्रविद्भिः प्रणीताश्छन्दोग्रन्थास्तत्र तत्र विलसन्ति । छन्दःशास्त्रं शिवादिक्रमेणाऽत्र समायातमिति श्रूयते । तथा हि यादवप्रकाशाऽभिधायां छन्दःसूत्रटीकायाम्—

छन्दोज्ञानमिदं भवाद्भगवतो लेभे सुराणां पति-
स्तस्माद्दुश्च्यवनस्ततः सुरगुरुर्माण्डव्यनामा ततः ॥
माण्डव्यादपि सैतवस्तत ऋषिर्यास्कस्ततः पिङ्गल-
स्तस्येदं यशसा गुरोर्भुवि धृतं प्राप्याऽस्मदाद्यैः कृतम् ॥ इति ।

यत् किमपि वा भवतु परमिदानीं छन्दोग्रन्थेषु सर्वप्रथमतया पिङ्गलमुनिप्रणीतः सूत्रात्मा छन्दोग्रन्थः समुपादीयते । तन्मूलभूताश्चाऽन्ये सर्वेऽपि च्छन्दोग्रन्थाः । पिङ्गलमुनिना हि निजपूर्वजच्छन्दःशास्त्रप्रणेतॄणां काश्यपसैतवादीनां स्वग्रन्थे समुल्लिखितानि नामानि, परमिदानीं न तेषां केषामपि कोऽपि निबन्धः समुपलभ्यते । पिङ्गलसूत्रेषु च बह्व्यष्टीका अपि सन्ति । तत्र हलायुधभट्टप्रणीता मृतसञ्जीवन्यभिधा टीका सर्वतो लब्धप्रचारा साम्प्रतं बहुशो मुद्रिता सर्वजनसुलभैव । छन्दोग्रन्थेषु च केचित्केवललक्षणबोधका निबन्धाः सूत्रादयः। केचित् केवललक्ष्यबोधका वृत्त्यादय इति विचार्य तत्र भवता महनीयकीर्तिना महामहिमशालिना छन्दोमर्मज्ञेन केदारभट्टेन सहैव लक्ष्यलक्षणप्रतिपादकः अल्पायासेन च छन्दोज्ञानाय वृत्तरत्नाकरनामा निबन्धः प्राणायि । वैदिकच्छन्दःसु त्रैवर्णिकमात्राणामेवाऽधिकारात् लौकिकच्छन्दःसु च सर्वेषामधिकारात् वैदिकच्छन्दोनिरूपणं विहाय लौकिकच्छन्दसामेवात्र निरूपणं कृतम्। सोऽयं वृत्तरत्नाकरः सर्वेष्वपि छन्दोनिबन्धेषु सातिशयं लब्धप्रचारः सर्वत्रेदानीं सटीको निष्टीकश्च बहुवारं मुद्रितः पठनपाठनादिषु मुख्यतया समाद्रियमाणस्तत्र तत्र परीक्षापाठ्यग्रन्थत्वेनाऽपि निर्धारितः सर्वत्रैव लभ्यते। अत एवाऽस्य पञ्चविंशत्यधिकाष्टीकाः श्रूयन्ते । अनेनैवाऽस्य लोकोपकारित्वमनुमातुं शक्यते । समुपलभ्यमानटीकासु भट्टनारायणभट्टप्रणीता टीकैवाऽनतिविस्तृततयाऽनत्यल्पतया च ग्रन्थरहस्यं यथावत् सरलतयाऽवबोधयन्ती

विद्यार्थिनामतीवोपकारिणीति विदुषां विदितमेव । परमद्यावधि मुम्बय्यां निर्णयसागरयन्त्रालये एव साऽप्येकवारमेव मुद्रिता बहुभिर्वर्षैरनुपलभ्यमाना श्रीयुत बाबूजयकृष्णदासगुप्तमहाशयाऽनुरोधात्साम्प्रतं सम्मुद्र्य प्रकाश्यते । टीकायां चास्यां सर्वाङ्गपरिपूर्णायामपि उदाहरणान्तरप्रतिपादनमात्ररहितायामुक्तमहाशयप्रार्थनया तत्त्रुटिपूर्त्यै उदाहरणान्तराणि निरूप्य तत्र तत्र विषमस्थलेषु सुविशदं टिप्पणं विलिख्य यथामति परिशोध्य च ग्रन्थोऽयं छन्दःशास्त्रजिज्ञासूनां तद्विदां च करकमलेषूपायनीक्रियते । तमेतं ग्रन्थं निरीक्ष्य स्वाभिलषितं प्राप्य सफलयिष्यन्ति मत्परिश्रमं तत्रभवन्तो भवन्त इति बाढं समाशासे । तथा च मुम्बय्यां मुद्रितपुस्तके ग्रन्थत्रयमासीत् । तदर्थमत्राऽपि श्रुतबोधच्छन्दोमञ्जर्यावपि संशोध्य सन्निवेशिते । किंच प्रसिद्धवृत्तानां कस्मिन् कस्मिन् रसे कुत्र कुत्र वा कस्य च्छन्दसो व्यवहारः समुचितो भवतीत्यादिनिरूपकं लघुतमं निबन्धं विद्यार्थिजनोपकारकं महाकविक्षेमेन्द्रकृतं 'सुवृत्ततिलकं' नाम छन्दोनिबन्धमत्रान्ते न्यवेशयम् । एतत्पुस्तके प्राचीनपुस्तके ( निर्णयसागरमुद्रिते ) च किं तारतम्यं, द्वयोरपि कतरदुत्तममित्यत्र न बहुलेखनाऽपेक्षा । भवतु । अत्र संशोध्य सम्मुद्रिते पुस्तके निवेशितानां ग्रन्थादीनां सूची मुखपृष्ठाऽनन्तरं सन्निवेशिताऽस्तीति तत्त एवाऽवगन्तव्यम् ।

'वृत्तरत्नाकरः' भट्टकेदारप्रणीतः । सोऽयं केदारभट्टः काश्यपसगोत्रः शैवशास्त्रवेत्ता महाविद्वान् पव्येकात्मजः इति वृत्तरत्नाकरप्रारम्भान्तिमपद्यादवसीयते । एतस्य देशकालादिविषये चाऽस्य पुस्तकस्य यथाऽवसरं प्रकाशयिष्यमाणे 'परिचये' विचारयिष्यते ।

टीकाकर्त्ता च श्रीनारायणभट्टः काशीवासी महाविद्वान् महातपस्वी नानानिबन्धप्रणेता जगद्गुरुपदभाक् काशीविश्वेश्वरसंस्थापकः प्रथमपूजासम्मानसम्मानितः कमलाकरभट्टनीलकण्ठभट्टादीनां पूर्वपुरुषो रामेश्वरभट्टात्मजो विश्वामित्रसगोत्रो महाराष्ट्रब्राह्मण इति सुप्रसिद्धम् । प्रकृतग्रन्थनिर्माणकालः स्वपूर्वपुरुषचतुष्टयनामानि स्वगोत्रं च ग्रन्थान्ते ग्रन्थकर्त्रैव प्रतिपादितं "भट्टश्रीनागनाथात्" इत्यादिना । एतद्विषयकमपि सविस्तरं यथाऽवसरं प्रकाशयिष्यत ऐतिह्यम् ।

श्रुतबोधकर्ता कालिदासः । कोऽयं कालिदासो रघुवंशादिप्रणेतैवाऽयमाहोस्विदन्य इत्यपि यथाऽवसरं विचारयिष्यते ।

छन्दोमञ्जरीकर्त्ता च गङ्गादासः । वैद्यगोपालदाससन्तोषाम्बातनयः इति ग्रन्थत एवाऽवधार्यते । कालादिविषये यथाऽवसरं विचारयिष्यते ।

सुवृत्ततिलकप्रणेता क्षेमेन्द्रो महाकविरतिप्रसिद्धः काश्मीरदेशाऽभि-

जन इत्यादि सर्वं सुप्रसिद्धम् । विस्तरेण च प्रकाशयिष्यते यथाऽवसरम् ।

एवं सुपरिष्कृत्य संशोध्य सम्मुद्रय प्रकाशितोऽयं ग्रन्थः साधुरसाधुर्वेति परीक्षका गुणग्राहिण एव विचारयन्तु । अहं तु—'आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्' इत्येव मन्ये ।

अन्ते च निजबहुधनव्ययमूरीकृत्याऽपि विद्यार्थिजनोपकाराय प्राचीनग्रन्थरत्नप्रकाशनैकतत्पराय श्रीयुत बाबू जयकृष्णदासगुप्तमहाशयाय प्रकृतग्रन्थरत्नप्रकाशनविनिमये आशीर्वादमन्तरा किं प्रदेयमिति तमनेकाभिराशीर्भिः संयोज्य, ग्रन्थस्यैतस्यैतादृशरीत्या मुद्रणे प्रदत्तसमुत्साहान् माननीय पं० गोपीनाथ कविराज एम्० ए० ( प्रिन्सिपल् गवर्नमेन्ट संस्कृतकॉलेज बनारस ) महोदयान्, नूतननिर्मितोदाहरणप्रदानादिना समुत्साहवर्धनेन च सविशेषं साहाय्यमाचरतः साहित्याचार्यखिस्तेश्रीनारायणशास्त्रिमहोदयांश्चाऽभिनन्द्य तथैव प्रकृतग्रन्थमुद्रणे प्रदत्तसमुत्साहान् पूज्यवर-साहित्योपाध्याय एम्० ए० पं० बटुकनाथशर्ममहोदयानभिनन्द्य साञ्जलिबन्धं परमेशमभिवन्द्य विरमामि लेखादस्मादिति शम् ।

काशी
सं १९८४

प्रार्थयिता—
वरकलोपाख्यः
वैद्यनाथशास्त्री

# सटीकसटिप्पणवृत्तरत्नाकरस्य विषयसूची ।


| सं० | विषयाः । | पृ० |
|---|---|---|
| | प्रथमाध्याये— | |
| १ | मङ्गलाचरणम् । ( टी० ) | १ |
| २ | टीकाकर्तुः परिचयः । ( टी० ) | ,, |
| ३ | मङ्गलाचरणम् । ( मू० ) | ,, |
| ४ | अनुबन्धचतुष्टयनिरूपणम् । | ,, |
| ५ | ग्रन्थप्रतिपाद्यनिरूपणम् । | २ |
| ६ | ग्रन्थपरिमाणनिरूपणम् । | ३ |
| ७ | छन्दःशास्त्रमूलभूतगणनिरूपणम् । | ३ |
| ८ | मादिगणानां देवतादिनिरूपणम् । | ४ |
| ९ | गणयुगफलादिनिरूपणम् । ( टी० ) | ५ |
| १० | वर्णशुद्धिकथनम् । ( टी० ) | ६ |
| ११ | मात्राच्छन्दःसूपयुक्तगणनिरूपणम् । | ७ |
| १२ | गुरुलघुनिरूपणम् । | ७ |
| १३ | पादान्तस्थविषये वृत्तिकारमतप्रदर्शनम् । ( टी० ) | ८ |
| १४ | वृत्तिकारमतखण्डनपूर्वकमुदाहरणप्रदर्शनपूर्वकं स्वमतेन वर्णानां गौरवलाघवव्यवस्था । ( टी० ) | ८ |
| १५ | गुरुलघुलेखनरीतिकथनम् । ( टी० ) | ९ |
| १६ | मतान्तरे गुरुलघुलेखनप्रकारकथनम् । ( टिप्पण ) | ९ |
| १७ | संयोगपरस्य गुरुत्वे क्वचिदपवादः । | ९ |
| १८ | तत्रैवोदाहरणप्रदर्शनम् । | ९ |
| १९ | आर्यासु पादव्यवस्थाऽभावं वदतां वृत्तिकृतां मतखण्डनम् । ( टी० ) | १० |
| २० | पादान्तवर्णविषये मतान्तरखण्डनपुरःसरं 'अप्रस्तुतस्याऽपि अर्थतो बुद्धिस्थस्य लघोरेव गुरुता विकल्प्यते' इति स्वमतस्थापनं तदुपोद्बलनाय वृत्तिकारमतप्रदर्शनं च । ( टी० ) | १० |
| २१ | लाघवगौरवविषयकसिद्धान्तप्रदर्शकस्वीयसङ्ग्रहश्लोकः । ( टी० ) | ११ |

| सं० | विषयाः । | पृ० |
|---|---|---|
| २२ | अपादान्तस्थस्य लघोः प्रह्वशब्दादौ दृश्यमानलघुत्वनिरूपणम् । ( टी० ) | ११ |
| २३ | अत्रैव विषये सरस्वतीकण्ठाभरणमतप्रदर्शनम् । ( टी० ) | ११ |
| २४ | तदनुकूलमहाकाव्यपरिदृश्यमानोदाहरणप्रदर्शनम् । (टी०) | ११ |
| २५ | अतीव्रप्रयत्ने गुरुतैव भवतीत्युदाहरणप्रदर्शनपुरःसरं प्रतिपादनम् । ( टी० ) | १२ |
| २६ | प्राकृतादौ वर्णविशेषाणां स्थलविशेषेषु च विभाषागुरुत्वनिरूपणं तदुदाहरणप्रदर्शनं च । ( टी० ) | १२ |
| २७ | प्राकृतादौ त्वरितपाठेन दीर्घादीनां लघुत्वं द्वयोस्त्रयाणां वा वर्णानां त्वरितपाठेन एकवर्णत्वं भवतीति कथनम् । ( टी० ) | १२ |
| २८ | अब्ध्यादिशब्दानां तत्तत्सङ्ख्याबोधकत्वं, पद्यचतुर्थांशस्य पादत्वं यतेर्विच्छेदसंज्ञत्वं च । | १३ |
| २९ | यतिनियमस्थाननिरूपणम् । ( टी० ) | १३ |
| ३० | तदर्थं बहुविधोदाहरणप्रत्युदाहरणनिरूपणम् । ( टी० ) | १४—१७ |
| ३१ | अन्तादिवद्भावविषये वृत्तिकारवचःसु पूर्वापरकथनविरोधप्रदर्शनेन तन्मतखण्डनम् । ( टी० ) | १७ |
| ३२ | अनुक्तयतिकेऽपि श्रुतिसौख्याय यतिः कार्येति निरूपणं तत्र कविकल्पलतामतप्रदर्शनम् । ( टी० ) | १७ |
| ३३ | शुक्लाम्बरादिमते पादान्त एव यतिरिति कथनम् । ( टी० ) | १७ |
| ३४ | भरतादीनां मते यतेरभाव एवेति कथनं तदनुकूलोदाहरणप्रदर्शनं च । ( टी० ) | १७ |
| ३५ | मतद्वयेऽपि स्वस्याऽसम्मतिसूचनम् । ( टी० ) | ८ |
| ३६ | यतेर्वृत्तस्वरूपाभावत्वकथनं तदर्थं तदुपोद्बलनाय वामनमतप्रदर्शनम् । ( टी० ) | १८ |
| ३७ | युगादिसंज्ञाकथनम् । | १८ |
| ३८ | पद्यपदार्थनिरूपणम् । ( टी० ) | १८ |
| ३९ | समार्धसमादिसंज्ञाकथनम् । | १९ |
| ४० | तद्विवरणम् । | १९ |
| ४१ | षड्विंशतिजातिनिरूपणम् । | १९ |
| ४२ | दण्डकसंज्ञाकथनम् । | १९ |
| ४३ | शेषाणां गाथात्वकथनम् । | २० |
| ४४ | षड्विंशतिजातीनां नामादिकथनम् । | २० |
| ४५ | अग्रिमाध्यायनिरूपणीयविषयकथनम् । | २१ |

सं० विषयाः । पृ०

द्वितीयाध्याये—

✓१ आर्यालक्षणम् । २४

२ आर्यासु यतिनिरूपणं तदर्थं छन्दोमाणिक्योक्तिप्रामाण्यप्रदर्शनम् । (टी०) २४

३ स्वकृतव्याख्यानस्य सूत्राऽनुग्रहहेतुप्रदर्शनपुरःसरं सामञ्जस्यप्रदर्शनं तदर्थं क्षेत्रराजोक्तिप्रामाण्यप्रदर्शनं छन्दोमाणिक्योक्तिसङ्गतिप्रदर्शनं च । (टी०) २५

४ आर्याभेदसङ्ख्याविवेचनम् । (टी०) २५

५ आर्योद्दिष्टकथनम् । (टी०) २७

६ आर्यानष्टकथनम् । (टी०) २८

७ आर्याभेदानां विपुलात्वादिकथनम् । २९

८ चपलालक्षणकथनं तद्भेदनिरूपणं । ३०

९ मुखचपलालक्षणम् । ३०

१० जघनचपलालक्षणम् । ३१

✓११ गीतिलक्षणम् । ३२

१२ उपगीतिलक्षणम् । ३३

१३ उद्गीतिलक्षणम् । ३४

✓१४ आर्यागीतिलक्षणम् । ३४

१५ व्याख्यात्रन्तरकृतव्याख्याखण्डनम् । (टी०) ३५

१६ आर्याणामशीतिप्रकारत्वकथनम् । (टी०) ३६

१७ छन्दोविचित्युक्तैकादशभेदकथनं तदुदाहरणप्रदर्शनं च । (टी०) ३६

१८ वैतालीयलक्षणं तद्भेदकथनं च । (टी०) ३८

१९ औपच्छन्दसिकलक्षणम् । ३८

२० आपातलिकालक्षणम् । ३९

२१ दक्षिणान्तिकालक्षणम् । ३९

२२ उदीच्यवृत्तिलक्षणं तद्भेदाश्च । (टी०) ४०

२३ प्राच्यवृत्तिलक्षणं तद्भेदाश्च । (टी०) ४१

२४ प्रवृत्तकलक्षणम् । ४१

२५ अपरान्तिकालक्षणम् । ४१

२६ चारुहासिनीलक्षणम् । ४२

२७ दक्षिणान्तिकान्तरोदाहरणम् । (टी०) ४२

सं० विषयाः । पृ०
२८ उत्तरान्तिकोदाहरणम् । ( टी० ) ४२
२९ उपपातलिकोदाहरणम् । ( टी० ) ४३
३० आपातलिकौपच्छन्दसिकनिरूपणम् । ३
३१ वक्त्रलक्षणं तद्भेदाश्च । ( टी० ) ४३
३२ पथ्यावक्त्रलक्षणम् । ४४
३३ विपरीतपथ्यावक्त्रलक्षणम् । ४४
३४ चपलावक्त्रलक्षणम् । ४५
३५ युग्मविपुलालक्षणम् । ४५
३६ 'एकस्यैव युग्मविपुला इति पथ्या इति च संज्ञाद्वयविकल्पः' इति स्वसिद्धान्तस्थापनं तदर्थं वृत्तिकृन्मतप्रदर्शनं तद्भेद-निरूपणं च । ( टी० ) ४५
३७ अखिलेष्वपि पादेषु सप्तमो लघुर्भवतीति सैतवमतकथनं तद्भेदाश्च । ४६
३८ भविपुलाकथनम् । ४६
३९ रविपुलाकथनम् । ४६
४० नविपुलाकथनम् । ४६
४१ तविपुलाकथनम् । ४६
४२ म-यविपुलाकथनम् । ( टी० ) ४६
४३ अत्र भविपुलादिषु पादचतुष्केऽपि तत्तद्गणयोगस्य सत्त्वं वदतां मतेन यत्रैकस्मिन्द्वयोर्वा तत्तद्गणयोगस्तत्रासां परस्पर-संसर्गेणाऽन्येऽपि भेदा भवन्तीति मतनिरूपणम् । ( टी० ) ४६
४४ अत्र विषये वृत्तिकृन्मतप्रदर्शनम् । ( टी० ) ४६
४५ भविपुलादीनां जातिव्यक्तिपक्षयोरुदाहरण-निरूपणम् । ( टी० ) ४७
४६ सविपुलायाः कविप्रयोगाभावादभावकथनम् । ४८
४७ अन्येषां मतेन 'युयुत्सेनेव' इत्यादीनां चपलापथ्यावक्त्रादि-संज्ञा भवतीति कथनम् । ( टी० ) ४८
४८ वृत्तिकृन्मते तद्भेदसङ्ख्याकथनम् । ४८
४९ अन्येषां मतकथनम् । ४८
५० सङ्कीर्णविपुलावक्त्रकथनं तदुदाहरणप्रदर्शनं च । ४८
५१ सर्वेष्वपि भेदेषु चतुर्थवर्णस्य गुरुता भवतीति साम्प्रदायि-कमतकथनम् । ४८

सं० विषयाः। पृ०
५२ अचलधृतिलक्षणम्। ४९
५३ मात्रासमकलक्षणम्। ४९
५४ सर्वेषु मात्रासमेषु सममात्रा परेण युक्ता न कार्येति साम्प्रदायिकमतकथनम्। (टी०) ४९
५५ तद्भेदकथनम्। (टी०) ५०
५६ विश्लोकलक्षणम्। ५०
५७ 'विश्लोकःपञ्चमा' इति सूत्राभिप्रायकथनम्। (टी०) ५०
५८ तदुदाहरणतद्भेदकथनम्। (टी०) ५०
५९ वानवासिकालक्षणम् ५१
६० 'द्वादशश्च' इति सूत्राभिप्रायकथनम्। ५१
६१ तदुदाहरणतद्भेदकथनम्। ५१
६२ चित्रालक्षणं तद्भेदसङ्ख्याकथनम्। (टी०) ५१
६३ उपचित्रालक्षणम्। ५२
६४ अष्टकलानन्तरं गुरुलघुयगणा भवन्तीति जयदेवमतकथनम्। तद्भेदकसङ्ख्याकथनम्। (टी०) ५३
६५ पादाकुलकलक्षणम्। ५२
६६ व्याख्यान्तरकृतव्याख्याप्रदर्शनं तत्र च स्वसिद्धान्ततदुदाहरणतत्प्रमाणप्रदर्शनं च। (टी०) ५३
६७ पादाकुलकभेदकसङ्ख्याकथनम्। ५३
६८ गुरुलघुमात्रावर्णादिज्ञानोपायकथनम्। ५४
६९ तस्यैवोदाहरणप्रदर्शनपुरःसरं निरूपणम्। (टी०) ५४
७० शिखालक्षणम्। ५५
७१ खञ्जालक्षणम्। ५६
७२ खञ्जाविषये वृत्तरत्नाकरकारसूत्रकारयोः परस्परं मतविरोधपरिहारः। (टी०) ५६
७३ अनङ्गक्रीडालक्षणम्। ५६
७४ पिङ्गलमतेऽनङ्गक्रीडायाः सौम्येति नामाऽस्तीतिकथनम्। (टी०) ५७
७५ अनङ्गक्रीडाया एव व्यत्यस्तार्धतायां ज्योतिःसंज्ञा भवतीतिकथनं तदुदाहरणप्रदर्शनं द्वयोरनयोः सामान्यतः शिखासंज्ञा पैङ्गले कथितेति कथनं च। (टी०) ५७
७६ अतिरुचिरालक्षणम्। ५७

सं० विषयाः । पृ०
७७ अतिरुचिराया एव पैङ्गले चूलिकेतिसंज्ञा 'चूलिकैकोन' इतिसूत्रस्थपाठद्वयस्याप्यर्थकथनपूर्वकं पक्षाऽन्तरे मूलाऽनुक्तोदाहरणस्य प्रदर्शनं च । ( टी० ) ५८

तृतीयाध्याये—

१ उक्तानिरूपणम् । ५८
२ सुप्रतिष्ठान्तानां पञ्चानां जातीनां सूत्रानुक्तत्वेन निर्मूलत्वमाशङ्क्य तत्परिहारकथनं तस्य समूलत्वस्थापनं च । ५९
३ अत्युक्तानिरूपणम् । ५९
४ मध्यानिरूपणम् । ५९
५ प्रतिष्ठानिरूपणम् । ६०
६ गायत्रीभेदलक्षणानि । ६०-६१.
७ उष्णिग्भेदलक्षणानि । ६१
८ उष्णिग्भेदेषु हंसमालादीनां छन्दोन्तराणां लक्षणानि । ६२
९ अनुष्टुब्भेदलक्षणानि । ६२-६४.
१० समानिकाप्रमाणिकावितानेषु गुरुलघुनियमः केषांचिन्मतेस्ति तन्मतप्रदर्शनं तदनुकूलोदाहरणप्रदर्शनं तत्राऽरुचिमुत्पाद्य स्वमतप्रदर्शनं तत्स्थापनाय सूत्रकारवृत्तिकारमतप्रदर्शनं च । ६५
११ अनुष्टुभि मूलाऽनुक्तच्छन्दोऽन्तरलक्षणकथनम् । ( टी० ) ६४
१२ बृहतीभेदलक्षणानि । ६४-६५.
१३ पङ्क्तिभेदलक्षणानि । ६५-६७.
१४ त्रिष्टुब्भेदलक्षणानि । ६७
१५ उपजातित्वं कुत्र भवति ? तद्भेदनामानि तदुदाहरणानि तेषां पौर्वापर्यविचारश्च । ( टिप्पण ) ६८-७१.
१६ उपजातिलक्षणं सोदाहरणम् । ( टी० ) ७१-७३.
१७ स्वागतारथोद्धतोद्भवोपजातिनिरूपणं, तद्भेदास्तदुदाहरणं उपजातिपदार्थविवेचनं मतान्तरखण्डनं च । ( टिप्पण ) ७२-७३.
१८ त्रिष्टुब्भेदलक्षणानि । ७३-७७.
१९ मूलाऽनुक्तत्रिष्टुब्भेदानां केषांचिल्लक्षणानि । ( टी० ) ७७
२० जगतीभेदलक्षणानि । ७८-८७.
२१ मूलानुक्तजगतीभेदानां केषांचिल्लक्षणानि । ( टी० ) ८७
२२ अतिजगतीभेदलक्षणानि । ८७-८९.

| सं० | विषयाः। | पृ० |
|---|---|---|
| २३ | मूलाऽनुक्तातिजगतीभेदानां केषांचिल्लक्षणानि। (टी०) | ८९ |
| २४ | शक्वरीभेदलक्षणानि। | ९०-९२. |
| २५ | मूलानुक्तशक्वरीभेदानां केषांचिल्लक्षणानि। (टी०) | ९२ |
| २६ | अतिशक्वरीभेदलक्षणानि। | ९३-९४. |
| २७ | मूलानुक्तातिशक्वरीभेदानां केषांचिल्लक्षणानि। | ९५ |
| २८ | अष्टिभेदानां लक्षणानि। | ९५ |
| २९ | मूलाऽनुक्ताऽष्टिभेदानां केषांचिल्लक्षणानि। (टी०) | ९६ |
| ३० | अत्यष्टिभेदलक्षणानि। | ९६-९८. |
| ३१ | मूलानुक्तात्यऽष्टिभेदानां केषांचिल्लक्षणानि। (टी०) | ९८ |
| ३२ | धृतिभेदलक्षणम्। | ९९ |
| ३३ | मूलाऽनुक्तधृतिभेदानां केषांचिल्लक्षणानि। (टी०) | ९९ |
| ३४ | अतिधृतिभेदलक्षणम्। | ९९-१००. |
| ३५ | मूलानुक्ताऽतिधृतिभेदानां केषांचिल्लक्षणानि। (टी०) | १०० |
| ३६ | कृतिभेदलक्षणानि। | १०० |
| ३७ | मूलानुक्तकृतिभेदलक्षणम्। (टी०) | १०१ |
| ३८ | प्रकृतिभेदलक्षणम्। | १०१ |
| ३९ | मूलानुक्तप्रकृतिभेदलक्षणम्। (टी०) | १०१ |
| ४० | आकृतिभेदलक्षणम्। (टी०) | १०१ |
| ४१ | मूलानुक्ताकृतिभेदलक्षणम्। | १०२ |
| ४२ | विकृतिभेदलक्षणम्। | १०२ |
| ४३ | सङ्कृतिभेदलक्षणम्। | १०३ |
| ४४ | अतिकृतिभेदलक्षणम्। | १०४ |
| ४५ | उत्कृतिभेदलक्षणम्। | १०४ |
| ४६ | चण्डवृष्टिप्रपातदण्डककथनम्। | १०५ |
| ४७ | रातमाण्डव्यव्यतिरिक्तपिङ्गलादिमते 'चण्डवृष्टिप्रपात' इति संज्ञाऽस्य दण्डकस्येति कथनम्। (टी०) | १०५ |
| ४८ | अर्णार्णवादिदण्डकलक्षणम्। | १०५ |
| ४९ | पञ्चदशदण्डकनामकथनं तत्र सोदाहरणं रीतिप्रदर्शनं च। (टी०) | १०६ |
| ५० | प्रचितकदण्डकलक्षणम्। | १०६ |
| ५१ | मूलानुक्तदण्डकान्तरलक्षणानि। | १०७ |

| सं० | विषयाः । | | पृ० |
|---|---|---|---|
| चतुर्थाऽध्याये— | | | |
| १ | अर्धसमवृत्तभेदलक्षणानि । | | १०७–११२. |
| २ | मूलानुक्तार्धसमवृत्तभेदलक्षणानि । | ( टी० ) | ११३ |
| ३ | अर्धसमपदार्थविचारः । | ( टिप्पण ) | ११३–११४. |
| पञ्चमाऽध्याये— | | | |
| १ | विषमवृत्तभेदलक्षणानि । | | ११४–११६. |
| २ | अमृतधाराविषये वृत्तिकारमतेन विरोधमुद्भाव्य सूत्रकारमतस्यानुकूल्यप्रदर्शनपुरःसरं वृत्तरत्नाकरकारोक्तिसङ्गतिप्रदर्शनम् । | ( टी० ) | ११७ |
| ३ | प्रत्यापीडोदाहरणप्रदर्शनम् । | ( टी० ) | ११७ |
| ४ | विषमवृत्तभेदलक्षणानि । | | ११८–११२. |
| ५ | अनुक्तच्छन्दसां विषमाक्षरपादादीनां च गाथात्वकथनम् । | | १२३ |
| ६ | वृत्त्यादिग्रन्थपर्यालोचनया कियतीनां गाथानामुदाहरणप्रदर्शनपुरःसरं लक्षणनिरूपणम् । | ( टी० ) | १२३-१२६. |
| ७ | महाराष्ट्रादिभाषास्थपद्योदाहरणकथनम् । | ( टी० ) | १२६-१२७. |
| ८ | प्राकृतच्छन्दःसु गाथाप्रकरणम् । | ( टी० ) | १२७-१२९. |
| ९ | दोहानिरूपणम् । | ( टी० ) | १२९-१३०. |
| १० | उत्कच्छानिरूपणम् । | ( टी० ) | १२० |
| ११ | रोलाप्रकरणम् । | ( टी० ) | १३१ |
| १२ | गन्धाप्रकरणम् । | ( टी० ) | १३१ |
| १३ | चतुष्पदाप्रकरणम् । | ( टी० ) | १३२ |
| १४ | घत्ताप्रकरणम् । | ( टी० ) | १३२ |
| १५ | घत्तानन्दप्रकरणम् । | ( टी० ) | १३२ |
| १६ | षट्पदप्रकरणम् । | ( टी० ) | १३३-१३५. |
| १७ | पज्झटिकाप्रकरणम् । | ( टी० ) | ११५ |
| १८ | अलिल्लिहप्रकरणम् । | ( टी० ) | १३६ |
| १९ | नवपदप्रकरणम् । | ( टी० ) | १३६ |
| २० | पद्मावतीप्रकरणम् । | ( टी० ) | १३६ |
| २१ | कुण्डलिकाप्रकरणम् । | ( टी० ) | १३७ |
| २२ | मदनान्तकप्रकरणम् । | ( टी० ) | १३८ |
| २३ | द्विपदीप्रकरणम् । | ( टी० ) | १३८ |

| सं० विषयाः । | | पृ० |
|---|---|---|
| २४ खञ्जाप्रकरणम् । | ( टी० ) | १३९ |
| २५ शिखाप्रकरणम् । | ( टी० ) | १३९ |
| २६ मालाप्रकरणम् । | ( टी० ) | १३९ |
| २७ चूलिकाप्रकरणम् । | ( टी० ) | १४० |
| २८ सौराष्ट्राप्रकरणम् । | ( टी० ) | १४० |
| २९ काहलिप्रकरणम् । | ( टी० ) | १४० |
| ३० मधुभारतप्रकरणम् । | ( टी० ) | १४० |
| ३१ आभीरप्रकरणम् । | ( टी० ) | १४१ |
| ३२ दण्डकाहलप्रकरणम् । | ( टी० ) | १४१ |
| ३३ दीपकप्रकरणम् । | ( टी० ) | १४१ |
| ३४ सिंहावलोकप्रकरणम् । | ( टी० ) | १४१ |

षष्ठोऽध्याये—

| | | |
|---|---|---|
| १ प्रस्तारादिषट्प्रत्ययकथनम् । | | १४२ |
| २ प्रस्ताररीतिकथनम् । | | १४२ |
| ३ उदाहरणप्रदर्शनपुरःसरं समवृत्तप्रस्तारनिरूपणम् । | (टी०) | १४३ |
| ४ अर्धसमप्रस्तारः । | ( टी० ) | १४४ |
| ५ विषमप्रस्तारः । | ( टी० ) | १४५ |
| ६ मात्राप्रस्तारः । | ( टी० ) | १४५ |
| ७ नष्टनिरूपणम् । | | १४६ |
| ८ सोदाहरणं समनष्टम् । | ( टी० ) | १४७ |
| ९ अर्धसमनष्टम् । | ( टी० ) | १४७ |
| १० विषमनष्टम् । | ( टी० ) | १४८ |
| ११ मात्रानष्टनिरूपणम् । | ( टी० ) | १४९ |
| १२ उद्दिष्टप्रकरणम् । | | १४९ |
| १३ सोदाहरणं समोद्दिष्टम् । | ( टी० ) | १४६ |
| १४ अर्धसमोद्दिष्टम् । | ( टी० ) | १५० |
| १५ विषमोद्दिष्टम् । | ( टी० ) | १५० |
| १६ सूत्रोक्तोद्दिष्टप्रकारकथनम् । | ( टी० ) | १५० |
| १७ मात्रोद्दिष्ट । | ( टी० ) | १५१ |
| १८ एकद्व्यादिलगक्रियाकथनम् । | | १५१ |
| १९ सोदाहरणं समलगक्रियाकथनम् । | ( टी० ) | १५२ |
| २० अर्धसमलगक्रियाकथनम् । | ( टी० ) | १५५ |

| सं० | विषयाः । | | पृ० |
|---|---|---|---|
| २१ | विषमलगक्रियाकथनम् । | ( टी० ) | १५५ |
| २२ | सङ्ग्रहश्लोकः । | ( टी० ) | १५५ |
| २३ | भास्कराचार्योक्तलगक्रियाप्रकारः । | ( टी० ) | १५५ |
| २४ | सूत्रकारोक्तलगक्रियाप्रकारः । (मेरुप्रस्तारः) | ( टी० ) | १५७ |
| २५ | पताकाप्रस्तारः । | ( टी० ) | १५७ |
| २६ | मात्रामेरुप्रस्तारः । | ( टी० ) | १६१ |
| २७ | मात्राखण्डमेरुः । | ( टी० ) | १६२ |
| २८ | सङ्ख्यानिरूपणम् । | | १६३ |
| २९ | मात्रामर्कटीकथनम् । | ( टिप्पण ) | १६३ |
| ३० | वर्णमर्कटीकथनम् । | ( टिप्पण ) | १६४ |
| ३१ | सूत्रोक्तसङ्ख्यानप्रकारः । | ( टी० ) | १६५ |
| ३२ | अध्वयोगकथनम् । | | १६७ |
| ३३ | वृत्तरत्नाकरसमाप्तिनिरूपणम् । | | १६७ |
| ३४ | टीकाकर्तृपूर्वपुरुषपरिचयः । | ( टी० ) | १६८ |
| ३५ | टीकाकर्तृपरिचयः । | ( टी० ) | १६८ |
| ३६ | सज्जनप्रार्थना । | ( टी० ) | १६८ |
| ३७ | टीकानिर्माणकालनिरूपणम् । | ( टी० ) | १६८ |
| ३८ | टीकासमाप्तिः । | ( टी० ) | १६८ |



॥ श्रीः ॥

केदारभट्टप्रणीतः

# वृत्तरत्नाकरः

## प्रथमोऽध्यायः ।



सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माऽच्युताऽर्चितम् ॥
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥ १ ॥
वेदाऽर्थशैवशास्त्रज्ञः पव्येकोऽभूद् द्विजोत्तमः ॥
तस्य पुत्रोऽस्ति केदारः शिवपादाऽर्चने रतः ॥२॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ॥
वृत्तरत्नाकरं नाम बालानां सुखसिद्धये ॥ ३ ॥
पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा ॥
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४ ॥
षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम् ॥
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५ ॥
म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ॥
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६ ॥
सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ॥
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ ७ ॥
ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ॥
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ ८ ॥
सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ॥
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः ॥ ९ ॥
पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः ॥
पुरःस्थितेन तेन स्याल्लघुताऽपि क्वचिद् गुरोः ॥ १० ॥
तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ॥
अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति ॥ ११ ॥
अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः ॥
ज्ञेयः पादश्चतुर्थांशो यतिर्विच्छेदसंज्ञितः ॥ १२ ॥

युक्समं विषमं चायुक्स्थानं उद्भिर्निगद्यते ॥
सममर्धसमं वृत्तं विषमं च तथापरम् ॥ १३ ॥
अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ॥
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥ १४ ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ॥
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ १५ ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ॥
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १६ ॥
आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्द्धितैः ॥
पृथक्छन्दो भवेत्पादैर्यावत्षड्विंशतिं गतम् ॥ १७ ॥
तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः ॥
शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १८ ॥
उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ॥
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ १९ ॥
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ॥
शक्वरी साऽतिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥ २० ॥
धृतिश्चाऽतिधृतिश्चैव कृतिः प्रकृतिराकृतिः ॥
विकृतिः सङ्कृतिश्चैव तथाऽतिकृतिरुत्कृतिः ॥ २१ ॥
इत्युक्ताश्छन्दसां संज्ञाः क्रमतो वच्मि साम्प्रतम् ॥
लक्षणं सर्ववृत्तानां मात्रावृत्ताऽनुपूर्वकम् ॥ २२ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे संज्ञाभिधानो नाम प्रथमोऽध्यायः ॥



## द्वितीयोऽध्यायः ।

लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ॥
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः ॥ १ ॥
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ॥
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥
त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः ॥
पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ३ ॥

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ॥
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥ ४ ॥
उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ॥
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥
आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ॥
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥
प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे च चपलायाः ॥
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७ ॥
आर्याप्रथमोदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ॥
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥ ८ ॥
आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ॥
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९ ॥
आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ॥
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥ १० ॥
आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ॥
इतरत्तद्वन्निखिलं भवति यदीयमर्द्धमुदितार्यागीतिः ॥ ११ ॥
षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ॥
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ १२ ॥
पर्यन्ते यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् ॥ १३ ॥
आपातलिका कथितेयं भाद् गुरुकावथ पूर्ववदन्यत् ॥ १४ ॥
तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥ १५ ॥
उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥ १६ ॥
पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥ १७ ॥
यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ १८ ॥
अस्य युग्मरचिताऽपरान्तिका ॥ १९ ॥
अयुग्भवा चारुहासिनी ॥ २० ॥
वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २१ ॥
युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ २२ ॥
ओजयोर्जेन वारिधेस्तत्स्य विपरीतादि ॥ २३ ॥
चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ २४ ॥
यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ २५ ॥
सैतवस्याऽखिलेष्वपि ॥ २६ ॥
भेनाऽब्धितो भाद्विपुला ॥ २७ ॥

इत्थमन्या रश्चतुर्थात् ॥ २८ ॥
नोऽम्बुधेश्चेन्नविपुला ॥ २९ ॥
तोऽब्धेस्तपूर्वान्या भवेत् ॥ ३० ॥
द्विगुणितवसुलघुरचलधृतिरिति ॥ ३१ ॥
मात्रासमकं नवमो ल्गान्तम् ॥ ३२ ॥
जो न्लावथाम्बुधेर्विश्लोकः ॥ ३३ ॥
तद्युगलाद्वानवासिका स्यात् ॥ ३४ ॥
बाणाष्टनवसु यदि लश्चित्रा ॥ ३५ ॥
उपचित्रा नवमे परयुक्ते ॥ ३६ ॥
यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ॥
अनियतवृत्तपरिमाणयुक्तं प्रथितं जगत्सु पादाकुलकम् ॥ ३७ ॥
वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा ॥
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ ३८ ॥
शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ॥
सगुरु शकलयुगलकमपि सुपरिघटितललितपदविततति भवति शिखा ॥ ३९ ॥

विनिमयविनिहितशकल-
कलितपदविततिविरचितगुणनिचया ॥
श्रुतिसुखकृदियमपि जगति त्रि
जशिर उपगतवति सति भवति खजा ॥ ४० ॥

अष्टावर्धे गा झभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता ॥
दलमपरपि वसुगुणितसलिलनिधिलघु कविरचितं
पदविततति भवति ॥ ४१ ॥
त्रिगुणनवलघुरवसितिगुरुरिति
दलयुगकृततनुरतिरुचिरा ॥ ४२ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे द्वितीयोऽध्यायः ।



## तृतीयोऽध्यायः ।

गुः श्रीः ॥ १ ॥
गौ स्त्री ॥ २ ॥
मो नारी ॥ ३ ॥
रो मृगी ॥ ४ ॥

म्गौ चेत्कन्या ॥ ५ ॥
भ्गौ गिति पङ्क्तिः ॥ ६ ॥
त्यौ स्तस्तनुमध्या ॥ ७ ॥
शशिवदना न्यौ ॥ ८ ॥
विद्युल्लेखा मो मः ॥ ९ ॥
त्सौ चेद्वसुमती ॥ १० ॥
म्सौ गः स्यान्मदलेखा ॥ ११ ॥
भौ गिति चित्रपदा गः ॥ १२ ॥
मो मो गो गो विद्युन्माला ॥ १३ ॥
माणवकं भात्तलगाः ॥ १४ ॥
म्नौ गौ हंसरुतमेतत् ॥ १५ ॥
र्जौ समानिका गलौ च ॥ १६ ॥
प्रमाणिका जरौ लगौ ॥ १७ ॥
वितानमाभ्यां यदन्यत् ॥ १८ ॥
रान्नसाविह हलमुखी ॥ १९ ॥
भुजगशिशुभृता नौ मः ॥ २० ॥
म्सौ ज्गौ शुद्धविराडिदं मतम् ॥ २१ ॥
म्नौ ज्गौ चेति पणवनामकम् ॥ २२ ॥
र्जौ रगौ मयूरसारिणी स्यात् ॥ ३३ ॥
भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ २४ ॥
मत्ता ज्ञेया मभसगयुक्ता ॥ २५ ॥
नरजगैर्भवेन्मनोरमा ॥ २६ ॥
त्ज्रौ ज्गौ गुरुणेयमुपस्थिता ॥ २७ ॥
स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ २८ ॥
उपेन्द्रवज्रा जतजास्ततो गौ ॥ २९ ॥
अनन्तरोदीरितलक्ष्मभाजौ ॥
पादौ यदीयावुपजातयस्ताः ॥ ३० ॥
इत्थं किलान्यास्वपि मिश्रितासु ॥
स्मरन्ति जातिष्विदमेव नाम ॥ ३१ ॥
नजजलगैर्गदिता सुमुखी ॥ ३२ ॥
दोधकवृत्तमिदं भभभाद्गु गौ ॥ ३३ ॥
शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥ ३४ ॥
वातोर्मीयं कथिता म्भौ तगौ गः ॥ ३५ ॥

बाणरसैः स्याद्धतनगगैः श्रीः ॥ ३६ ॥

म्भौ न्लौ गः स्याद् भ्रमरविलसितम् ॥ ३७ ॥

रान्नराविह रथोद्धता लगौ ॥ ३८ ॥

स्वागतेति रनभाद् गुरुयुग्मम् ॥ ३९ ॥

ननसगगुरुरचिता वृन्ता ॥ ४० ॥

ननरलगुरुभिश्च भद्रिका ॥ ४१ ॥

श्येनिका रजौ रलौ गुरुर्यदा ॥ ४२ ॥

मौक्तिकमाला यदि भतनाद् गौ ॥ ४३ ॥

उपस्थितमिदं ज्सौ ताद् गकारौ ॥ ४४ ॥

चन्द्रवर्त्म निगदन्ति रनभसैः ॥ ४५ ॥

जतौ तु वंशस्थमुदीरितं जरौ ॥ ४६ ॥

स्यादिन्द्रवंशा ततजै रसंयुतैः ॥ ४७ ॥

इह तोटकमम्बुधिसैः प्रथितम् ॥ ४८ ॥

द्रुतविलम्बितमाह नभौ भरौ ॥ ४९ ॥

मुनिशरविरतिर्नौ म्यौ पुटोऽयम् ॥ ५० ॥

प्रमुदितवदना भवेन्नौ च रौ ॥ ५१ ॥

नयसहितौ न्यौ कुसुमविचित्रा ॥ ५२ ॥

रसैर्जसजसा जलोद्धतगतिः ॥ ५३ ॥

चतुर्जगणं वद मौक्तिकदाम ॥ ५४ ॥

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥ ५५ ॥

रैश्चतुर्भिर्युता स्रग्विणी सम्मता ॥ ५६ ॥

भुवि भवेन्नभजरैः प्रियम्वदा ॥ ५७ ॥

त्यौ त्यौ मणिमाला च्छिन्ना गुहवक्त्रैः ॥ ५८ ॥

धीरैरभाणि ललिता तभौ जरौ ॥ ५९ ॥

प्रमिताक्षरा सजससैरुदिता ॥ ६० ॥

ननभरसहिता महितोज्ज्वला ॥ ६१ ॥

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६२ ॥

अब्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ ॥ ६३ ॥

इह नवमालिका नजभयैः स्यात् ॥ ६४ ॥

स्वरशरविरतिर्ननौ रौ प्रभा ॥ ६५ ॥

भवति नजावथ मालती जरौ ॥ ६६ ॥

जभौ जरौ वदति पञ्चचामरम् ॥ ६७ ॥

अभिनवतामरसं नजजाद्यः ॥ ६८ ॥

तुरगरसयतिर्नौ ततौ गः क्षमा ॥ ६९ ॥
म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥ ७० ॥
चतुर्ग्रहैरतिरुचिरा जभस्जगाः ॥ ७१ ॥
वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ७२ ॥
( उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत् ) ॥ ७३ ॥
सजसा जगौ भवति मञ्जुभाषिणी ॥ ७४ ॥
ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ॥ ७५ ॥
म्तौ न्सौ गावक्षग्रहविरतिरसम्बाधा ॥ ७६ ॥
ननरसलघुगैः स्वरैरपराजिता ॥ ७७ ॥
ननभनलघुगैः प्रहरणकलिता ॥ ७८ ॥
उक्ता वसन्ततिलका तभजा जगौ गः ॥ ७९ ॥
सिंहोन्नतेयमुदिता मुनिकाश्यपेन ॥ ८० ॥
उद्धर्षिणीयमुदिता मुनिसैतवेन ॥ ८१ ॥
इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ८२ ॥
द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥ ८३ ॥
द्विहतहयलघुरथ गिति शशिकला ॥ ८४ ॥
स्रगिति भवति रसनवकयतिरियम् ॥ ८५ ॥
वसुहययतिरिह मणिगुणनिकरः ॥ ८६ ॥
ननमयययुतेयं मालिनी भोगिलोकैः ॥ ८७ ॥
भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८८ ॥
सजना नयौ शरदशयतिरियमेला ॥ ८९ ॥
म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥ ९० ॥
भ्रत्रिनगैः स्वराश्वमृषभगजविलसितम् ॥ ९१ ॥
नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥ ९२ ॥
रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ९३ ॥
जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ९४ ॥
दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ९५ ॥
रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ ९६ ॥
मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद् गुरू चेत् ॥ ९७ ॥
हयदशभिर्नजौ भजजला गुरु नर्कुटकम् ॥ ९८ ॥
मुनिगुहकार्णवैः कृतयति वद कोकिलकम् ॥ ९९ ॥
स्याद् भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ ॥ १०० ॥
सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ १०१ ॥

अनुष्टुप् का लक्षण वृत्तरत्नाकर—२०८ पृष्ठ पर

ज्ञेया सप्ताश्वषड्भिर्मरभनय-
युता म्लौ गः सुवदना ॥ १०२ ॥
त्री रजौ गलौ भवेदिहेद्वशेन लक्षणेन वृत्तनाम ॥ १०३ ॥
म्रभ्नैर्यानां त्रयेण त्रिमुनि-
यतियुता स्रग्धरा कीर्तितेयम् ॥ १०४ ॥
भ्रौ नरना रनावथ गुरुर्दिगर्क-
विरमं हि भद्रकमिति ॥ १०५ ॥
यदिह नजौ भजौ भजभलगा-
स्तदश्वललितं हरार्कयतिमत् ॥ १०६ ॥
मत्ताक्रीडा मौ त्लौ नौ नल्गिति
भवति वसुशरदशयतियुता ॥ १०७ ॥
भूतमुनीनैर्यतिरिह भतनाः स्भौ
भनयाश्च यदि भवति तन्वी १०८ ॥
क्रौञ्चपदा भ्मौ स्भौ ननना न्गा-
विषुशरवसुमुनिविरतिरिह भवेत् ॥ १०९ ॥
वस्वीशाश्वच्छेदोपेतं ममतनयुगनर-
सलगैर्भुजङ्गविजृम्भितम् ॥ ११० ॥
मो नाः षट् सगगिति यदि
नवरसरसशरयतियुतमपवाहाख्यम् ॥ १११ ॥
यदि ह नयुगलं ततः सप्तरेफा-
स्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥ ११२ ॥
प्रतिचरणविवृद्धरेफाः स्युरर्णार्णव-
व्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥ ११३ ॥
प्रचितकसमभिधो धीरधीभिः स्मृतो
दण्डको नद्वयादुत्तरः सप्तभिर्यैः ॥ ११४ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे तृतीयोऽध्यायः ॥

त्रुप— पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयात् एतत्पद्यस्य लक्षणम्।

# चतुर्थोऽध्यायः।



विषमे यदि सौ सलगा दले
भौ युजि भाद् गुरुकावुपचित्रम् ॥ १ ॥
भत्रयमोजगतं गुरुणी चे-
द्युजि च नजौ ज्ययुतौ द्रुतमध्या ॥ २ ॥
सयुगात्सगुरू विषमे चे-
द्भाविह वेगवती युजि भाद्गौ ॥ ३ ॥
ओजे तपरौ जरौ गुरुश्चे-
न्म्सौ ज्गौ भद्रविराड् भवेदनोजे ॥ ४ ॥
असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः ॥ ५ ॥
आख्यानकी तौ जगुरू ग ओजे
जतावनोजे जगुरू गुरुश्चेत् ॥ ६ ॥
जतौ जगौ गो विषमे समे चे-
त्तौ ज्गौ ग एषा विपरीतपूर्वा ॥ ७ ॥
सयुगात्सलघू विषमे गुरु-
र्युजि नभौ भरकौ हरिणप्लुता ॥ ८ ॥
अयुजि ननरला गुरुः समे-
न्जमपरवक्त्रमिदं ततो जरौ ॥ ९ ॥
अयुजि नयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा ॥ १० ॥
वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः ॥
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥ ११ ॥
स्यादयुग्मके रजौ रयौ समे चे-
ज्जरौ जरौ गुरुर्यवात्परा मतीयम् ॥ १२ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे चतुर्थोऽध्यायः।

# पञ्चमोऽध्यायः ।



मुखपादोऽष्टभिर्वर्णैः
परे स्युर्मकरालयैः क्रमाद् वृद्धैः ॥
सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यं
तदुदितममलमतिभिः पदचतुरूर्ध्वाभिधं वृत्तम् ॥ १ ॥
प्रथममुदितवृत्ते
विरचितविषमचरणभाजि ॥
गुरुकयुगलनिधन इह सहित आङा
लघुविरचितपदविततियतिरिति भवति पीडः ॥ २ ॥
प्रथममितरचरणसमुत्थं
श्रयति स यदि लक्ष्म ॥
इरतदितरगदितमपि यदि च तुर्यं
चरणयुगलकमविकृतमपरमिति कलिका सा ॥ ३ ।
द्विगुरुयुतसकलचरणान्ता
मुखचरणगतमनुभवति च तृतीयः ॥
अपरमिह हि लक्ष्म
प्रकृतमखिलमपि यदिदमनुभवति लवली सा ॥ ४ ॥
प्रथममधिवसति यदि तुर्यं, चरमचरणपदमवसितगुरुयुग्मम् ॥
निखिलमपरमुपरिगतमिति ललितपदयुक्ता, तदिदममृधारा ॥ ५ ॥
सजसादिमे सलघुकौ च
नसजगुरुकैरथोद्गता ॥
त्र्यङ्घ्रिगतभनजला गयुताः
सजसा जगौ चरणमेकतः पठेत् ॥ ६ ॥
चरणत्रयं व्रजति लक्ष्म
यदि सकलमुद्गतागतम् ॥
नौ भगौ भवति सौरभकं
चरणे यदीह भवतस्तृतीयके ॥ ७ ॥
नयुगं सकारयुगलं च
भवति चरणे तृतीयके ॥
तदुदितमुरुमतिभिर्ललितं
यदि शेषमस्य खलु पूर्वतुल्यकम् ॥

भसौ उभौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्य-
त्रितयं सनजरगास्ततो नलौ सः ॥
त्रिनपरिकलितजयौ
प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ९ ॥
नौ पादेऽथ तृतीयके सनौ नसयुक्तौ
प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम् ॥
त्रितयमपरमपि पूर्वसदृशमिह भवति
प्रततमतिभिरिति गदितं लघु वृत्तम ॥ १० ॥
अस्मिन्नेव तृतीयके यदा तजराः स्युः
प्रथमे च विरतिरार्षभं ब्रुवन्ति ॥
तच्छुद्धविराट् पुरः स्थितं
त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥ ११ ॥
विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ॥
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ १२ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे पञ्चमोऽध्यायः ।

## षष्ठोऽध्यायः ।



प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ॥
सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १ ॥
पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ॥
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ २ ॥
ऊने दद्याद् गुरूनेव यावत्सर्वलघुर्भवेत् ॥
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥ ३ ॥
नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे च लः ॥
विषमे चैकमाधाय स्यादर्धेऽर्धे गुरुर्भवेत् ॥ ४ ॥
उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत् ॥
लघुस्था ये च तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ५ ॥
वर्णान्वृत्तभवान्सैकानौत्तराधर्यतः स्थितान् ॥
एकादिक्रमतश्चैतानुपर्युपरि निक्षिपेत् ॥ ६ ॥

उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः ॥
उपर्याद्याद् गुरोरेकमेकद्व्यादिलगक्रिया ॥ ७ ॥
लगक्रियाङ्कसन्दोहे भवेत्सङ्ख्या विमिश्रिते ॥
उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥ ८ ॥
सङ्ख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ॥
वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम् ॥ ९ ॥

वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधे ॥
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त-
श्छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥ १० ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे षष्ठोऽध्यायः ।

समाप्तश्चायं ग्रन्थः



श्रीः

श्रीनारायणभट्टरचितया व्याख्यया सहितः ।

# वृत्तरत्नाकरः

## प्रथमोऽध्यायः

नत्वा गणेशं वाग्देवीं पिङ्गलं मातरं गुरुम् ॥
अन्यानपि च भाष्यादिकर्तॄंश्छन्दोविशारदान् ॥
श्रीभट्टरामेश्वरसूरिसूनुर्नारायणः स्वामनुरुध्य बुद्धिम् ॥
सङ्क्षेपवृत्त्या विवृतिं सुवृत्तरत्नाकरे व्यक्ततया तनोति ॥

विशिष्टशिष्टाऽऽचारमूलभूत "स्वस्ति न इन्द्रो वृद्धश्रवाः" इत्यादिवैदिकलिङ्गकल्पितश्रुतिप्रमाणकविशिष्टेष्टदेवतानमस्कारजनितनिर्विघ्नतादिः स्वनामकीर्तनपूर्वकं स्वग्रन्थस्य ग्रन्थान्तरैरगतार्थतां च सूचयन् सप्रयोजनं कर्तव्यं सामान्यज्ञानपूर्वकविशेषजिज्ञासुप्रवृत्तिसिद्ध्यर्थं सामान्यतः प्रतिजानीते सुखेत्यादिश्लोकत्रयेण—

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माऽच्युताऽर्चितम् ॥
गौरीविनायकोपेतं शङ्करं लोकशङ्करम् ॥ १ ॥
वेदा(१)ऽर्थशैवशास्त्रज्ञः पव्येकोऽभूद्द्विजोत्तमः ॥
तस्य पुत्रोऽस्ति केदारः शिवपादाऽर्चने रतः ॥ २ ॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम् ॥
वृत्तरत्नाकरं नाम बालानां सुखसिद्धये ॥ ३ ॥

ब्रह्माऽच्युताभ्यां = विधातृविष्णुभ्याम् । अर्चितं = पूजितम् । गौर्या पार्वत्या, विनायकेन = गणाधिपेन चोपेतम् । लोकानां = चतुर्दशभुवनानां, भूरादीनां सप्तानां वा । शङ्करं = सुखकर्तारम् । एवंविधं शङ्करं महादेवम् । सुखसन्तानसिद्ध्यर्थं प्रणामजनिताऽविघ्नतादिसम्भूताऽव्याकुलीभावबुद्धि-

(१) अत्र पञ्चिकाकारमते 'वेदान्तशैवशास्त्रज्ञः' इति पाठः ।

वैभवादिजनितसुखपरम्पराप्राप्त्यर्थम्। नत्वा, तेन केदारेणेदं छन्दः क्रियते इति तृतीयश्लोकेनाऽन्वयः। वेदानामृगादीनाम्। अर्थम्, शैवशास्त्राणि च रुद्रयामलादीनि जानातीत्येवंविधः पव्ये(२)कसंज्ञो द्विजोत्तमो ब्राह्मणोत्तमोऽभूत्। तस्य पुत्रः केदारनामा शिवचरणारविन्दपूजनतत्परोऽस्ति। लक्ष्येणोदाहरणेन मात्रावर्णाऽन्यतरनियतात्मकेन छन्दसा, लक्षणेन च तन्नियमकथनात्मकेन छन्दसा तदभिन्नेन युक्तम्। लक्ष्यमेव लक्षणमिति विग्रहः। वृत्तरत्नानामाकरः खनिर्यत्र तत्। यद्वा तेषामाकरः समूहो यत्र।

आकरो निवहोत्पत्तिस्थानश्रेष्ठेषु कथ्यते।

इति विश्वप्रकाशोक्तेः। एतयैवाऽन्वर्थसंज्ञया नाम प्रसिद्धम्। छन्दः=तत्प्रतिपादकत्वाल्लक्षितं तच्छास्त्रम्। बालानां=छन्दःशास्त्राऽज्ञानाम्। सुखेनाऽल्पोपायेन सिद्धये छन्दोज्ञानार्थं क्रियते इत्यर्थः। सुखपदस्य प्रथमप्रयोगादेतच्छ्रावयितॄणां श्रोतॄणां च सुखाऽतिशयः सूचितः। यद्वा बालप्रतिपत्तेः प्रयोजनत्वेऽपि स्वप्रयोजनत्वाऽभावादेतद्ग्रन्थजनितबालव्युत्पत्तिजनितोपकाराऽदृष्टेन जनिष्यमाणस्वर्गादिसुखपरम्परैव स्वेष्टा स्वग्रन्थप्रयोजनत्वेनाऽनेन निर्दिश्यते। ब्रह्मविष्णुगौरीविनायककीर्तनेन च मङ्गलाऽन्तरं तदनु स्मृतिरूपं सचितम्। शङ्करमित्यत्र शंशब्दस्याऽव्ययत्वाद्विभक्त्यन्तत्वाऽभावात् "सुपो धातुप्रातिपदिकयोः" (पा० सू० २-४-७१) इति न भवति। द्विजोत्तमग्रहणेन च ब्राह्मणकर्तृत्वादेतस्य ग्रन्थस्य श्रवणे दोषाऽभावः सूचितः। लक्ष्येत्यादिना लक्ष्येभ्यः काव्यादिभ्यः केवललक्षणेभ्यश्च सूत्रादिभ्यो भिन्नलक्ष्यलक्षणेभ्यश्च वृत्त्यादिभ्योऽतिशयः सूचितः॥ १॥ २॥ ३॥

एवं सामान्यतो ग्रन्थकरणं प्रतिज्ञाय पूर्वाऽऽचार्योक्तिमूलकतया स्वकल्पितताशङ्काजनितश्रोत्रनादरं निराकर्तुं प्रतिपाद्यमर्थं विशेषतः प्रतिजानीते—

पिङ्गलादिभिराचार्यैर्यदुक्तं लौकिकं द्विधा॥
मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते॥ ४॥

पिङ्गलेन=सूत्रकर्त्रा आदिपदाद्भाष्यकारादिभिश्च। आचार्यैस्तथैव वचनैः। यल्लौकिकं छन्दो मात्रावर्णविभेदेन=इदं मात्राच्छन्दः आर्यादि, इदं वर्णछन्दः समान्यादि, इतिभेदेन। द्विधा=द्विप्रकारमुक्तं तच्छन्दः। इह ग्रन्थे। कथ्यते इत्यर्थः। लौकिकशब्देन वेदवेदाङ्गाऽनधिकारिणा-

(१) 'पट्टकेक' इति पाठः पञ्चिकायाम्।

मात्रैवर्णिकानामप्यस्मिन् ग्रन्थेऽधिकार इति दर्शयति । वर्णग्रहणेन च "मात्राच्छन्दो, गणच्छन्दः" इति कैश्चिदुक्तो द्वेधा विभागः पराकृतः। तादृशविभागे श्लोकाक्षराणां श्र्यादीनामसङ्ग्रहाऽऽपत्तेः। वर्णच्छन्दस्त्वेन विभागे च गणच्छन्दसामपि सङ्ग्रहादिति भावः । अन्ये तु गणमात्राऽक्षरच्छन्दस्त्वेन त्रैविध्यमाहुः । यदुक्तम्—

आदौ तावद्गणच्छन्दो मात्राच्छन्दस्ततः परम् ।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ॥ इति ।

गणच्छन्द आर्यादि, मात्राच्छन्दो वैतालीयादि, अक्षरच्छन्दः समान्यादीति । तदप्यनेन पराकृतम् । गणच्छन्दसामपि मात्राच्छन्दःसु सङ्ग्रहात् ॥ ४ ॥

अन्यकर्तृकसम्भावितच्छन्दोऽन्तरप्रक्षेपनिक्षेपनिराकरणाय ग्रन्थं परिमाणतः परिच्छिनत्ति—

षडध्यायनिबद्धस्य च्छन्दसोऽस्य परिस्फुटम् ।
प्रमाणमपि विज्ञेयं षट्त्रिंशदधिकं शतम् ॥ ५ ॥

परि समन्तात्साकल्येन स्फुटं प्रकटं यथा स्यात्तथा षड्भिरध्यायैर्निबद्धस्य घटितस्याऽस्य च्छन्दसश्छन्दोग्रन्थस्य वृत्तरत्नाकराख्यस्य षट्त्रिंशदधिकं षट्त्रिंशत्सङ्ख्याधिकं द्वात्रिंशदक्षराणामनुष्टुप्छन्दसां श्लोकानां शतं १३६ परिमाणं ज्ञेयम् । अनुष्टुप्श्लोकपरिमाणमेवात्र गृह्यते । ग्रन्थगणनायां लोके तस्यैव प्रसिद्धत्वात् । एतेनाल्पतरग्रन्थपाठे प्रयासाभावाद्विस्तीर्णभाष्यवृत्त्यादिग्रन्थप्रयासनैरपेक्ष्येणैव प्रसिद्धसकलच्छन्दोज्ञानसिद्धेर्बुभुत्सुभिरयमेव ग्रन्थोऽभ्यसनीय इति सूचितम् ॥५

इदानीं सकलवाग्व्यापित्वेन मादीन्गणान्स्तुवँल्लक्षणकथनार्थमुद्दिशति—

म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः ।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना ॥ ६ ॥

मगण-यगण-रगण-सगण-तगण-जगण-भगण-नगण-गुरुभिर्लान्तैर्लघुयुक्तैरेभिर्दशभिर्गणाष्टकगुरुलघुरूपैरक्षरैः समस्तं वाङ्मयं वाग्जालं व्याप्तम् । अस्तीति शेषः । अत्रोपमा विष्णुना त्रैलोक्यं यथा व्याप्तं तद्वत् । अत्र स्वरोच्चारणं सौकर्यार्थम् । एवमुत्तरत्रापि ।

वक्ष्यमाणत्र्यक्षरप्रस्तारक्रमोपपन्नक्रमनिर्देशकसूत्रानुरोधेनाऽयं गणक्रम उक्तः सूत्राणि तु "धी श्री स्त्री म्" (पिं. सू. २-१) वरा "सा य्",

(पिं. सू.२-२) "का गुहा ग्", (पिं. सू.२-३) "वसुधा स्", (पिं. सू.२-४) "सा ते क्व त्", (पिं. सू. २-५) "कदा स ज्", (पिं. सू.२-६) "किं वद भ्", (पिं. सू.२-७) "न हसन्", (पिं. सू.२-८) "गृ ल्" (पिं. सू.२-९) "गन्ते" (पिं. सू.२-१०) इति ॥ ६ ॥

क्रमेण गणांल्लक्षयति—

सर्वगुर्मो मुखान्तलौ यरावन्तगलौ सतौ ।
ग्मध्याद्यौ ज्भौ त्रिलो नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः ॥ ७ ॥

अत्र छन्दःशास्त्रेऽष्टौ त्रिकास्त्र्यक्षरा गणा भवन्ति । चतुरक्षरा गणा मा भूवन्निति त्रिका इत्युक्तम् । परिमाणे कन् । तानाह—सर्वेति । सर्वे गवो गुरवो यस्मिन्नसौ सर्वगुः । 'नामैकदेशे नामग्रहणम्' इति न्यायेन गुशब्दो गुरुवाची । एवं लशब्दो लघुवाची । एवं सर्वत्र । मो=मगणः । मुखे आदावन्तर्मध्ये लो लघुर्ययोस्तौ य-रौ=यगण-रगणौ । अन्ते गलौ गुरुलघू ययोस्तौ क्रमेण स-तौ सगण-तगणौ । ग्=गुरुर्मध्य आद्यश्च ययोस्तौ ज्-भौ जगण-भगणौ । त्रिलस्त्रिलघुर्नो नगणः । एतेषां प्रस्तारो यथा—

| मः | यः | रः | सः | तः | जः | भः | नः |
|---|---|---|---|---|---|---|---|
| SSS, | ISS, | SIS, | IIS, | SSI, | ISI, | SII, | III, |

एतेषां क्रमनियमश्च प्रस्तारे प्रकटीभविष्यति । अन्यत्रापि मादीनां स्वरूपमुक्तम्—

S IIS IISI ISS
मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥ इति ।

अन्यैस्तु देवताफलस्वरूपाण्येषामुक्तानि—

मो भूमिस्त्रिगुरुः श्रियं दिशति, यो वृद्धिं जलं चादिलो,
रोऽग्निर्मध्यलघुर्विनाशमनिलो देशाटनं सोऽन्त्यगः ॥
तो व्योमान्तलघुर्धनापहरणं, जोऽर्को रुजं मध्यगो,
भश्चन्द्रो यश उज्ज्वलं मुखगुरु,र्नो नाक आयुस्त्रिलः ॥ इति ।

इदं च फलं काव्यनायकस्य तत्कर्तुः पठितुर्वा यथायोग्यं व्यस्तं समुच्चितं वा ज्ञेयम् । यत्र नायकादिभिः प्राचीनो देवतादिः स्वकल्पितो वा तत्र कर्तुः श्रोतॄणां चेत्यादि । क्वचित्तु देवतामात्रमवादि—

पृथ्वीजलशिखिवाता गगनं सूर्यश्च चन्द्रमा नाकः ।
प्रस्तारक्रमवशतो देवा ज्ञेया यथासङ्ख्यम् ॥ इति ।

## गणदेवतादिकोष्ठकम् ।

| गणनाम | मगण | यगण | रगण | सगण | तगण | जगण | भगण | नगण |
|---|---|---|---|---|---|---|---|---|
| स्वरूपम् | ऽऽऽ | ।ऽऽ | ऽ।ऽ | ।।ऽ | ऽऽ। | ।ऽ। | ऽ।। | ।।। |
| देवता | पृथ्वी | जलम् | अग्निः | वायुः | गगनम् | सूर्यः | चन्द्रः | नाकः |
| फलम् | श्रीः | वृद्धिः | विनाशः | भ्रमणम् | धननाशः | रोगः | सुयशः | आयुः |
| मित्रामित्रादिसंज्ञा | मित्रम् | भृत्यः | शत्रुः | शत्रुः | उदासीनः | उदासीनः | भृत्यः | मित्रम् |

अथ यदि दैवाद् दुष्टफलो गणः काव्यादौ कृतः, तदा तद्रक्षणार्थं द्वितीयो गणः शोध्यः । तत्र मगण-नगणौ मित्रसंज्ञौ, भगण-य-गणौ भृत्यौ, ज-ता-वुदासीनौ, र-सावरी नीचौ च । तदुक्तम्—

म-नौ मित्रे भ-यौ भृत्यावुदासीनौ ज-तौ स्मृतौ ।
र-सावरी नीचसंज्ञौ द्वावेतौ मनीषिभिः ॥ इति ।

तथा च यदि मित्रगणान्मित्रगणस्तदा समृद्ध्यादि फलम्, मित्रगणाद् भृत्यगणे जयादिशुभम्, मित्रादुदासीने शून्यकम्, मित्राच्छत्रौ बन्धुपीडा, भृत्यान्मित्रे तु सर्वकार्यसिद्धिः, भृत्याद् भृत्ये सर्वो लाभः, भृत्यादुदासीने धननाशः, भृत्याद्वैरिणि शोकः, उदासीनान्मित्रे किंचिदेव कार्यसिद्धिः, उदासीनाद् भृत्ये सर्वे वशाः, उदासीनादुदासीने न शुभं न चाशुभम्, उदासीनाच्छत्रौ स्वजनवैरम्, शत्रोर्मित्रे शून्यम्, शत्रोर्भृत्ये गृहिणीनाशः, शत्रोरुदासीने स्वकुलक्षयः, शत्रोः शत्रौ काव्यनायकनाशो भवति । इति गणयुगफलम् । तदुक्तम्—

मित्रान्मित्रादयः स्युर्यदि धनमुदयं शून्यकं बन्धुपीडां
भृत्यान्मित्रादयश्चेद् धृतिमधिकगुणं हानिशोकौ च कुर्युः ॥
औदास्यार्थाश्च मित्रादय इह कुसुखं धैर्यमीर्ष्यां स्ववैरं
शत्रोर्मित्रादयश्चेद् भ्रममथ गृहिणीनाशमाधिं विनाशम् ॥ इति ।

तथा—

मित्रान्मित्रं विधत्ते प्रचुरधनमथो मित्रतो भृत्यसंज्ञः
स्थैर्यं मित्रादुदासो न किमपि च फलं मित्रतः शत्रुसंज्ञः ।
बन्धोः पीडामथो स्याद्यदि खलु नियतं भृत्यतो मित्रसंज्ञः
सर्वं कार्यं च भृत्याद् भृतगण इह चेदायतिः सर्वलोके ॥

भृत्याच्चेत्स्यादुदासो धनविगममथो भृत्यतः शत्रुसंज्ञः
शोकं कुर्यादुदासाद्यदि भवति तदा मित्रसंज्ञोऽल्पकार्यम् ॥
तस्माद् भृत्यः प्रभुत्वं तत इह सततं स्यादुदासो विनाशं
तस्माच्छत्रुः स्ववैरं विविधगुणहरं सर्वसत्कार्यनाशम् ॥
शत्रोर्मित्रं च शून्यं यदि भवति ततो भृत्यसंज्ञो गृहिण्या
नाशं तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम् ॥
शत्रोः शत्रुर्भवेच्चेद्द्विगणसुसहितो नायकस्यैव नाशं ।
देशोद्वासं विधत्ते कथयति च फलं पिङ्गलो नागराजः ॥ इति ।

अत एव किरात-माघ-नैषधीयेषु दुष्टफलात्प्युदासीनाज्जगणादुदासीनस्य तगणस्य सत्त्वान्न शुभं न चाशुभमिति दोषाभावः ।

अथ गणशुद्धिप्रसङ्गाद्वर्णशुद्धिरुच्यते । तच्छुद्धौ हि नायकादीनां सुखं भवति तदुक्तम्—

अक्षरे परिशुद्धे तु नायको भूतिमृच्छति । इति ।

अत्र ॠ-ङ-झ-ञ-ट-ठ-ड-ढ-ण-प-फ-ब-भ-म-र-ल-व-ष-ह-लान्संयुक्ताक्षराणि च विहाय शेषाक्षराणि शुभफलानीति सङ्क्षेपः । तदुक्तं भामहेन—

अवर्णात्सम्पत्तिर्भवति मुदिवर्णाद्धनशता-
न्युवर्णादख्यातिः सरभसमृवर्णाद्धरहितात् ॥
तथा ह्येचः सौख्यं ङ-ञ-ण-रहितादक्षरगणात्
पदादौ विन्यासाद् भ-र-ब-ह-ल-हाहाविरहितात् ॥

तथा—

कः खो गो घश्च लक्ष्मीं वितरति, वियशो ङस्तथा चः सुखं, छः
प्रीतिं, जो मित्रलाभं, भयमरणकरौ झ-ञौ, ट-ठौ खेददुःखे ॥
डः शोभां, ढो विशोभां, भ्रमणमथ च णस्तः सुखं, थश्च युद्धं
दो धः सौख्यं, मुदं नः, सुखभयमरणक्लेशदुःखं पवर्गः ॥
यो लक्ष्मीं, रश्च दाहं, व्यसनमथ ल-वौ, शः, सुखं षश्च खेदं,
सः सौख्यं, हश्च खेदं, विलयमपि च लः, क्षः समृद्धिं करोति ॥
संयुक्तं चेह न स्यात्सुखमरणपटुर्वर्णविन्यासयोगः
पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम् ॥ इति ।

तथा दुःखदारिद्र्यवाचका दुष्टाः शब्दाः काव्यादौ न प्रयोज्याः । अयं च प्रयोगनिषेधः काव्यादौ मुक्तकश्लोके चादौ ज्ञेयः । देवतादिवाचके शब्दे तु गणविचारेऽक्षरविचारे वा दोषाऽभावः ।

तदुक्तं भामहेनैव—

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वा ॥ इति ।

तथा च माघ-किरातयोर्जगणसंयोगयोः प्रयोगेऽपि श्रीशब्दप्रयोगाद्दोषाभाव इत्यलं भूयसा प्रसक्तेन । प्रकृतमनुसरामः ॥ ७ ॥

इदानीं मात्राच्छन्दःसूपयोगिनो गणानाह—

ज्ञेयाः सर्वान्तमध्यादिगुरवोऽत्र चतुष्कलाः ।
गणाश्चतुर्लघूपेताः पञ्चार्यादिषु संस्थिताः ॥ ८ ॥

अत्र शास्त्रे आर्यादिषु छन्दःसु स्थिताश्चतुष्कलाश्चतुर्मात्राः पञ्च गणा ज्ञेयाः । प्राकट्याय स्वरूपतस्तानाह—सर्वेति । सर्वत्रान्ते मध्ये आदौ च गुरुर्येषां ते तथा । कथम्भूताः चतुर्लघुना गणेनोपेता युक्ताः । तत्र चतुर्मात्रिकत्वात्सर्वगुरुर्द्विगुरुर्लभ्यते । यथा—

| सर्वगुरुः | अन्त्यगुरुः | मध्यगुरुः | आदिगुरुः | चतुर्लघुः |
|---|---|---|---|---|
| SS | IIS | ISI | SII | IIII |
| १ | २ | ३ | ४ | ५ |

अयं गणक्रम आर्यागीत्योश्छन्दसोरुपयोगीति तत्रैव वक्ष्यते । पञ्चकलादयस्तु प्राकृतप्रक्रमे वक्ष्यन्ते, संस्कृतेऽनुपयोगात् ॥ ८ ॥

गणाँल्लक्षयित्वा गुरुं लक्षयति—

सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः ।
वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः ॥९॥

असौ वर्णो ग् गुरुर्ज्ञेयः । कोऽसावित्यपेक्षायामाह—सानुस्वार इति । अनुस्वारेण युक्तः अं-कं-इत्यादिः, विसर्गान्तः अः-कः-इत्यादिः, दीर्घः आ-का इत्यादिः । इदं प्लुतस्याप्युपलक्षणम् । युक्तपरो युक्तः संयुक्तः परो यस्य सः । संयोगे परभूते यः पूर्वः सोऽपि गुरुरित्यर्थः । यथा विष्णुरित्यादौ विशब्दादिः । पादान्ते श्लोकचरणान्ते वर्तमानो लघुर्गुरुर्वा भवति । लघुत्वेऽपेक्षिते लघुकार्यं, गुरावपेक्षिते गुरु कार्यं करोतीत्यर्थः । अयं च व्यवस्थितविकल्पः । तेन "अथ वासवस्य वचनेन"( कि० १२-१ ) (१)इत्यादावुद्गतादिपादान्तस्य लघुतैव ।

---

(१) सम्पूर्णः श्लोकस्त्वित्थम्—

अथ वासवस्य वचनेन
रुचिरवदनस्त्रिलोचनम् ॥
क्लान्तिरहितमभिराधयितुं
विधिवत्तपांसि विदधे धनञ्जयः ॥ (कि० १२-१)

'तस्याः खुरन्यासपवित्रपांसुम्' ( रघु० २-२ )(१)इत्यादौ च गुरुतैव। युक्तपरश्चेति व्यञ्जनोपध्मानीयजिह्वामूलीयपराणामुपलक्षणम् । तथा च—'तनुवाग्विभवोऽपि सन्' (रघु.१-९)(२)'मन्दः कवियशःप्रार्थी' (रघु.१-३)(३)इत्येवमादिषु सकारस्य, जिह्वामूलीयोपध्मानीयपदे च दकार-शकारयोर्गुरुत्वं सिद्धं भवति। इतरथा नकारस्य पादान्तत्वात्सकारस्य न प्राप्नोति, जिह्वामूलीयोपध्मानीययोश्च संयोगत्वाभावाद्दकार-शकारयोर्न प्राप्नोति। तदुक्तम्—

दीर्घं संयोगपरं तथा प्लुतं व्यञ्जनान्तमूष्मान्तम्।
सानुस्वारं च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम्॥ (पिं०सू०१-४) इति।

व्यञ्जनपरस्य गुरुत्वाल्लघ्वन्तपादेषु समान्यादिषु व्यञ्जनान्तः पादो न कार्यः। ननु "संयोगे गुरु" (पा.सू.१-४-११) "दीर्घं च" (पा.सू.१-४-१२) इति वदता पाणिन्याचार्येण पादान्तस्थादीनां गुरुसंज्ञायामनुक्तत्वात्तद्विरोध इति चेत्, मैवम्। 'कुण्डा' 'हुण्डा' इत्यादिषु "गुरोश्च हलः" (पा.सू.३-३-१०३) इत्यकारप्रत्ययस्य, 'ईहाञ्चक्रे', 'ऊहाञ्चक्रे', इत्यादिषु च "इजादेश्च गुरुमतोऽनृच्छः (पा.सू.३-१-३६)इत्याम्प्रत्ययस्य सिद्धयर्थं स्वशास्त्रे संयोगपरदीर्घयोर्गुरुत्वं पाणिनिः प्रत्यज्ञासीत्। अन्येषु तु स्वशास्त्रे प्रयोजनाभावान्नोचे न त्वभावादिति न किंचिदेतत्। वृत्तिकारस्तु 'गन्ते'(पि.सू.२-१०)इतिसूत्रे वाशब्दाऽश्रवणात्सर्वत्र पादान्तस्थस्य लोगुर्भवतीति व्याचख्यौ तदयुक्तम्। गुरुलघुभ्यां लघुभिरेव च समाप्तयोः समानीगीत्यार्ययोर्व्यभिचारात्। अथ तत्र लघुसमाप्तिविधायकशास्त्रेण विशेषशास्त्रेण सामान्यस्याऽस्य बाध इति मतम्, तदपि

---

(१) सम्पूर्णः लोकस्त्वित्थम्—
तस्याः खुरन्यासपवित्रपांसु-
मपांसुलानां धुरि कीर्तनीया॥
मार्गं मनुष्येश्वरधर्मपत्नी
श्रुतेरिवाऽर्थं स्मृतिरन्वगच्छत्॥ (रघु.२-२)

(२) सम्पूर्णः श्लोक एवम्—
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्॥
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः॥ (रघु.१-९)

(३) पूर्णः श्लोक एवम्—
मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्॥
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः॥ (रघु.१-३)

न । सिद्धेन हि लघुना समाप्तिर्विधीयते न तु समाप्तिस्थस्य लघुत्वं येन बाधः स्यात् । "गन्ते" (पि.सू.२-१०) इति सूत्रं त्वन्ते पदान्ते स्थितो लघुः क्वचिद् गुरुरिति क्वाचित्कत्वाभिप्रायं व्याख्येयम् । तेन न तद्विरोध इत्यलं प्रपञ्चेन । प्रकृतमनुसरामः । स च प्रस्तारे वक्रः नागराक्षरेऽकारप्रश्लेष(ऽ)चिह्नवज्ज्ञेयो लेख्यः । पूर्वोक्तेभ्यः सानुस्वारादिभ्योऽन्यः ल् लघुः । कोऽसावन्यः मात्रिको मात्रारूपः । एतेन गुरोर्द्विमात्रत्वमुक्तं भवति । स प्रस्तारे कर्तव्ये ऋजू रेखाकारः (।) कार्यः ॥९॥ (१)

संयोगपरस्य गुरुत्वे क्वचिदपवादमाह—

पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः ।
पुरःस्थितेन तेन स्याल्लघुताऽपि क्वचिद्गुरोः ॥ १० ॥

इह च्छन्दःशास्त्रे पादादौ चरणादौ वर्णस्य वर्णान्तरेण संयोगः क्रमसंज्ञकः । पूर्वाचार्यैरुक्त इति शेषः । तेन पादादिसंयोगेन पुरःस्थितेन क्वचिदपेक्षितविषये संयोगपरत्वाद् गुरोरपि लघुता स्यात् । 'वा पादान्ते' (वृ.र.१-९) इत्यत्र पादान्ते लघोर्गुरुत्वं विकल्पितम् । इह तु गुरोर्लघुत्वमिति न पौनरुक्त्यमिति भावो वक्ष्यते ॥ १० ॥

गुरोर्लघुतायामुदाहरणं सप्रतिज्ञमाह इदमस्योदाहरणम्—

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि ।
अल्पव्ययेन सुन्दरि ! ग्राम्यजनो मिष्टमश्नाति ॥ ११ ॥

अस्य पूर्वश्लोकार्थस्य । अत्र ग्राम्यनागरिकवरागमे ग्राम्यवरे साभिलाषां चतुरवधूं निन्दागर्भस्तुत्या निवारयन्ती सख्याह—हे सुन्दरि ! ग्राम्यजनो ग्रामीणो जनोऽल्पव्ययेन मिष्टं रसवदशनमश्नाति भुङ्क्ते किं तत् तरुणं कोमलं सर्षपानां शाकम्, नवानां तण्डुलानामोदनं वाऽपर्युषितौदनं वा, पिच्छिलानि बद्धानि दधीनीति अल्पद्रव्यो मिष्टाभासभोजी ग्राम्यजनोऽचतुरोऽयम् । त्वं च सुन्दरी अतोऽमुं परित्यज्य नागरिके साभिलाषा भवेत्यत्र ध्वन्यम् । अत्र सुन्दरीत्यत्र संयोगपरत्वाद्गुरुत्वे सति तृतीये पादे त्रयोदश मात्रता माभूदिति लघुत्वं प्रतिज्ञायते । तथा च द्वादशमात्रतैवेति भावः । क्वचिदिति व्यवस्थितविकल्पार्थम् । तेन सुन्दरीत्यत्र लघुतैव ।

(१) अन्ये तु (‿) गुरुरेवं (–) लघुरेवं लेख्यः । तथा च वाणीभूषणे—
गुरुस्तु द्विकलो ज्ञेयो गजदन्तसमाऽऽकृतिः ॥
लघुस्तदन्यः शुद्धोऽसावेकमात्रः प्रकीर्तितः ॥ इति

गुणिनामपि निजरूपप्रतिपत्तिः परत एव सम्भवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ (वास०)
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य(१) ।

इत्यादौ गुरुतैव । आर्यामुदाहरन्त आर्यासु पादव्यवस्थाभावं वदन्तो वृत्तिकृतः पराकृताः । अत एव

त्रिभिस्त्रिभिर्गणैः पादावार्यादेर्विषमौ स्मृतौ । इति,

"यस्याः पादे प्रथमे" (श्रु० ४) (२) इत्यादि चाभियुक्तैरुक्तं, पथ्याभिप्रायं वा, तत्र पादव्यवस्थाया वक्ष्यमाणत्वात् ।

ननु 'वा पादान्ते' (वृ० र० १-९) इत्यत्र वर्णमात्रस्य वा पादान्तस्थस्य गुरुता विकल्प्यते, गुरोरेव वा नित्यप्राप्ता सा विकल्प्यते, लघोरेव वा? नाद्यः, पादान्तवर्णमात्रस्य तेनैव गुरुताविकल्पे पक्षे लघुत्वस्यापि सिद्धत्वात्पादादावित्यस्य वैयर्थ्यप्रसङ्गात्, लघ्वंशेऽप्राप्तविकल्पः, गुर्वंशे प्राप्तविकल्प इति विरुद्धार्थद्वयकृतवाक्यभेदप्रसङ्गाच्च । न द्वितीयः, तेनैव पाक्षिकलघुतायाः सिद्धौ पुनर्विधानवैयर्थ्यात्, 'तरुणम्' (वृ० र० १-११) इत्युदाहरण एव द्वितीयचतुर्थपादान्तयोर्लघ्वोर्गुरुत्वाभावे च्छन्दोभङ्गप्रसङ्गाच्च । न तृतीयः, लघोस्तत्राप्रस्तुतत्वात्, असंयोगपरस्यापादान्तगुरोरक्रमपरत्वात्पाक्षिकलघुत्वाभावप्रसङ्गाच्चेति चेत्, अत्र पादान्तवर्णमात्रमुद्दिश्य विकल्पितं गुरुत्वं तेन विधीयत इति विधेयोद्देश्ययोरेकैकावच्छेदादर्थद्वयस्यार्थसिद्धत्वाद्वाक्यभेदाभावः पौरुषेयत्वाद्वा स न दोषः । पादादाविति च तस्यैव विषयं प्रदर्शयद्विवरणम् । तरुणमित्यादिषु गुरोर्लघुतायां तृतीयपाद उदाहरणम्, लघोर्गुरुतायां च द्वितीयचतुर्थपादयोरुदाहरणमित्यापातत उत्तरं भवति॥ वस्तुतस्त्वप्रस्तुतस्याप्यर्थतो बुद्धिस्थस्य लघोरेव गुरुता तेन विकल्प्यते । पादान्तगुरोस्तु लघुता संयोगपरस्यैवेत्यनेनैवोच्यते । अक्रमपरस्य तु पादान्तगुरोर्लघुता नेष्टैव । अत एव "गन्ते" (पि. सू. २-१०) इति सूत्रे "गृ लू" (पि. सू. २-६) इति पूर्वसूत्राद् गृग्रहणमनुवर्त्य गृशब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते वर्तमानस्य गुरुसंज्ञाऽतिदिश्यते इति वृत्तिकारेणोक्तम् । इदं च गु-

(१) अस्योत्तरार्धं यथा—
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ इति ।

(२) पूर्णं पद्यं यथा—
यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥ इति ।

रोर्लघुत्वं संयोगनिमित्तकगुरोरेव, न दीर्घादेः । अत्र सोदाहरणो मामकः सङ्ग्रहश्लोकः—

युक्तपरत्वनिमित्तकप्रान्तगुरोरेव वेष्यते लघुता ।
पादान्तस्थलघोरिह गुरुता वेद्यस्य जानीहि ॥ इत्यलं प्रपञ्चेन ।

इदं चोपलक्षणं प्रशब्दे ह्रशब्दे च परतोऽपादान्तस्थस्यापि लघुतायाः कविप्रयोगे दर्शनात् । तथा च कुमारसम्भवे—"गृहीतप्रत्युद्गमनीयवस्त्रा" ( कु. ७-११ ) (१)इति प्रशब्दे परतस्तस्य लघुता दृष्टा । माघे च--"प्राप्य नाभिह्रदमज्जनमाशु" ( शि. व. १०-६० ) (२) इति । अन्यत्रापि—"तव ह्रियापह्रियो मम ह्रीरभूत्" इति ह्रशब्दे परतो लघुता दृष्टा । अन्ये तु संयोगमात्रे परभूते लघुत्वमतीवतीव्रप्रयत्नतयेत्याहुः । अत एव सरस्वतीकण्ठाभरण उक्तम्—

यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् ।
न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ॥ (सर. १-१२३)

तथा च कविप्रयोगाः । रामायणे—

कृतार्थाश्च कृतार्थानां मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ इति ।

एवं तदार्या नृपवीरसिंह !
सीता वचः प्राह विषादयुक्तम् ॥
एतच्च श्रुत्वा गदितो मया त्वं
सीतोपलम्भे प्रकुरुष्व बुद्धिम् ॥ इति च ।

तव ह्रियाऽपह्रियो मम ह्रीरभू-
च्छुशिगृहेऽपि ह्रतं न धृता ततः ।
बहुलभ्रामरमेचकतामसं

---

(१) तथा च सम्पूर्णः श्लोकः—

सा मङ्गलस्नानविशुद्धगात्री
गृहीतप्रत्युद्गमनीयवस्त्रा ॥
निर्वृत्तपर्जन्यजलाऽभिषेका
प्रफुल्लकाशा वसुधेव रेजे ॥ ( कु० ७-११ )

(२) पूर्णः श्लोकस्त्वित्थम्—

प्राप्य नाभिह्रदमज्जनमाशु
प्रस्थितं निवसनग्रहणाय ॥
औपनीविकमरुन्ध किल स्त्री
वल्लभस्य करमात्मकराभ्याम् ॥ (शि० १०-६०)

मम प्रिये ! क्व समेष्यति नो पुनः ॥ इति च ।

अन्यत्र च-"धनं प्रदानेन श्रुतेन कर्णौ" इत्यादि च । प्राकृतेऽपि—

जह ण्हाउं ओइण्णे अब्भन्त(?)मुल्हासिअमंसुअद्धन्तम् ।
तह अ ण्हाआसि तुमं सच्छे गोलाणईतूहे ॥
यथा स्नातुमवतीर्णे आर्द्रीभूतमुल्लसितमंशुकार्धान्तम् ।
तथा च स्नातासि त्वं स्वच्छे गोदानदीतीर्थे ॥ इति ।

अत्र द्वितीयैकादशत्रयोविंशतिवर्णानां संयोगपरत्वाद् गुरुत्वेऽपि ण्ह-ल्हादिसंयोगस्यातीवतीव्रप्रयत्नोच्चारणेन पूर्वस्य लघुतायां न च्छन्दोभङ्गो भवति। इदं च महाकविप्रयोगदर्शने भवति, न तु स्वेच्छया। अत एवाहुः—

क्वचिदपि संयुक्तपरो वर्णो लघुरत्र दर्शनेन यथा ।
परिह्रसति चित्तधैर्यं दारकटाक्षेषु निर्वृत्तम् ॥ इति ।

तीव्रप्रयत्ने तु गुरुतैव । "अथ प्रजानामधिपः प्रभाते" ( रघु. २-२ ) (१) इत्यादौ । तथा इं-हिं-उं-हुं-काराणामेकारौकारयोश्च केवलयोः सव्यञ्जनयोर्वा प्राकृतादिभाषासु विभाषा गुरुता भवति । तदुक्तम्—

इ-हि-कारौ बिन्दुयुतौ ए-ओ शुद्धौ च वर्णमिलितौ च ।
रहयोर्व्यञ्जनयोगे सविभाषं सर्वमेव लघु ॥ इति ।

अत्र इ-हि-कारावित्युपलक्षणम् । इं-हिं-ए-ओ एतेषूदाहरणम्—

माणिणि ! माणह काइं फलमेओ जे चरणमिलु कन्त ।
सहजे भुअङ्गमु जइ णमइ तह किं करिअ मणिमन्त ॥
मानिनि ! मानैः किं फलमेष यश्चरणमिलितः कान्तः ।
सहजेन भुजङ्गमो यदि नमति तत्र किं क्रियते मणिमन्त्रैः ॥

अत्र इं-हिं-ए-ओ इत्येतेषां गुरुतायां दोहाच्छन्दसोऽधिकमात्रताऽऽपद्येत । रहव्यञ्जनसंयोगे तूदाहृतम् । तथा प्राकृतादिषु दीर्घस्यापि त्वरितपाठे लघुता । तथा द्वयोस्त्रयाणां वा वर्णानां त्वरितपाठे एकवर्णता भवति । तदुक्तम्—

दीर्घाक्षरमपि जिह्वा ह्रस्वं चेत्पठति तदपि भवति लघु ।
द्वौ वा त्रीनथ वर्णानेकं जानीहि शीघ्रपठनाच्च ॥ इति ।

---

(१) पूर्णः श्लोकस्त्वित्थम्—

अथ प्रजानामधिपः प्रभाते
जायाप्रतिग्राहितगन्धमाल्याम् ॥
वनाय पीतप्रतिबद्धवत्सां
यशोधनो धेनुमृषेर्मुमोच ॥ (रघु० २-१)

अत्रोदाहरणमूह्यम् । अयं प्राकृतविचारः पञ्चमाध्यायान्तवक्ष्यमाणप्राकृतच्छन्दःसुप्रयोगात्कृत इत्यलं बहुना ॥ ११ ॥

परिभाषान्तराण्याह—

अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः ।
ज्ञेयः पादश्चतुर्थांशो यतिर्विच्छेदसंज्ञितः ॥ १२ ॥

लोकतो लोकव्यवहारादब्ध्यादीनां संज्ञाः सङ्क्षेपेण संज्ञया ज्ञायन्ते इति संज्ञाः संज्ञीभूताः । चतुरादिसङ्ख्या इति यावत् । ज्ञेया यतिनियमेषु। तद्यथा—अब्धयश्चत्वारः, भूतानि पञ्च, रसाः षट् । आदिपदादश्वा मुनयश्च सप्त, वसवो नागाश्चाष्टौ, ग्रहा नव, दिशो दश, रुद्रा एकादश, आदित्या द्वादश, इत्येवमादि ज्ञेयम् । अब्ध्यादिशब्दाः स्वपर्यायाणां स्वार्थसङ्ख्यासमानसङ्ख्यार्थानां चाप्युपलक्षकाः । तेन समुद्रवेदादयोऽपि लोकतो ज्ञेयाः । तथा छन्दःशास्त्रत्वाच्छन्दसश्चतुर्थो भागः पादो ज्ञेयः पादादिव्यवहारेषु । अंशः समचतुर्थांशोऽत्र न ग्राह्यः । किं तु यावान्यत्रोक्तः । तथा च समानां विषमाणां चोद्गतादीनां पादाः सङ्गृहीता भवन्ति । पादशब्दः स्वपर्यायाणामङ्घ्रिचरणादिशब्दानामुपलक्षकः । तथा यतिर्यतिशब्दो विच्छेदे विरामे संज्ञितः परिभाषितः संज्ञाकृतो ज्ञेयः । 'संज्ञिता' इति पाठे यतिशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता ज्ञेयेति च विपरिणतानुषङ्गः । इयं च यतिस्तृतीयान्तेष्वब्ध्यादिनिर्देशेषूपतिष्ठते । साकाङ्क्षत्वात् । अब्ध्यादिसङ्ख्येष्वक्षरेषु यतिः स्यादित्यर्थः । इयं च यतिः श्रुतिसौकर्यार्थं नियतस्थानेषु कार्या । यतिनियमस्थानानि च वृद्धैः सङ्गृहीतानि—

यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः ।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥
पूर्वान्तवत्स्वरः सन्धौ क्वचिदेव परादिवत् ।
एष्टव्यो यतिचिन्तायां यणादेशः परादिवत् ॥
नित्यं प्राक्पदसम्बद्धाश्चादयः प्राक्पदान्तवत् ।
परेण नित्यसम्बद्धाः प्रादयश्च परादिवत् ॥ इति ।

एषामर्थ उदाहरणेन स्पष्टीक्रियते । "यतिः सर्वत्र पादान्ते" इत्यस्योदाहरणम्—

अत्र मे सखि ! शिखण्डमण्डने
पुण्डरीककमनीयलोचने ।

श्यामतामरसदामकोमले
रामनामनि मनो मनोरमे ॥ (प्र० रा० २-२३) इत्यादि ।

प्रत्युदाहरणं तु—

नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे । इत्यादि ।

"श्लोकार्धे तु विशेषतः" इत्यस्योदाहरणं पूर्वोदाहरणे "दधीनि। अल्पव्ययेन" ( वृ० र० १-११ ) इत्यत्र। सन्धिर्न भवति स्पष्टविभक्तिकता च भवतीति विशेषः । सन्धौ प्रत्युदाहरणम्—

श्यामा कामाकुला रामा वामा भोगाय चाप्यतेऽ—।
नेकजन्मसु पुण्यानां निचयो न चितो यदि ॥

अत्र पूर्वरूपकरणम् । स्पष्टविभक्तिकतायां प्रत्युदाहरणम्—

सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी—।
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम् ।

अत्र समासकरणम् । "समुद्रादौ" इत्यत्रोदाहरणम्—"तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी" (मे० १-२ )(१) इति । अत्र मन्दाक्रान्तायां चतुर्षु स्पष्टविभक्तिकता । ततः षट्स्वव्यक्तविभक्तिकता । 'पादान्ते' इत्यस्यापि विशेषणं "व्यक्ताव्यक्तविभक्तिके" इति । तत्रोभयोदाहरणम्—

स्यन्दने गरुडकेतुलाञ्छने
कुण्डिनेशतनयाधिरोपिता ।
केन चिन्नवतमालकोमल-
श्यामलेन पुरुषेण नीयते ॥

क्वचिदिति । समुद्रादौ या यतिः सा पदमध्येऽपि क्वचिद्भवति । यदि पदस्य यत्यपेक्षया पूर्वपरभागावेकवर्णौ न भवत इत्यर्थः । अत्रोदाहरणम्—"पर्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशौ" इति । समुद्रादावित्युक्तेः पादान्तयतिः पदमध्ये न भवति । प्रत्युदाहरणम्—

"प्रणमत भवबन्धक्लेशनाशाय नारा-
यणचरणसरोजद्वन्द्वमानन्दहेतुम्" ।

पूर्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दोषाय । सा च धातुनामप्रत्ययाऽव्ययभागभेदेन चतुर्धा । तत्र क्रमेणोदाहरणानि—"एतासां राजति

---

(१) सम्पूर्णः श्लोकस्त्वित्थम्—

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः ॥
आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ ( मे० १-२ )

सुमनसां दाम कण्ठावलम्बि", "स्वीकुर्वन्ति हि सुधियः प्रकुर्वते च", "दुःसोढो दाशरथिमहिमा राक्षसानां बभूव", "सुरासुरशिरोनिघृष्टचरणारविन्दः शिवः", "स्खलति सुरवधूकल्पासु रामासु को न", "भुवि सुरगुरुदेशीयाः कियन्तो न सन्ति", "कलिवशविवशः सम्प्रत्ययं जीवलोकः" "रामेशं वा प्रतिदिनमुताहो रमेशं भजामः" । एवमन्यान्यपि सङ्कीर्णान्युदाहरणानि ज्ञेयानि । "पूर्वान्तवत्स्वरः सन्धौ" इत्यस्यार्थः योऽयं पूर्वपरयोरेकादेशः स्वरः सन्धौ सवर्णदीर्घादिः, स प्रायः पूर्वान्तवत्कचिदेव परादिवच्च द्रष्टव्य इति । अत एव "अन्तादिवच्च" ( पा० सू० ६-१-८५ ) इति पाणिनिः सस्मार । पूर्वान्तवद्भावे यथा—"कस्ते दारिद्र्यदावानल ! वदतु यशो वावदूकोऽपि दाने" "स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा" ( मे. १-५१ )(१)

परादिवद्भावे यथा—"अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना" (वेणी० ३-९) (२) अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद्भवति । तद्भक्तत्वात् ।

यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ । इति ।

पूर्वान्तवत्स्वरः सन्धावित्यादेरपि शेषः । तेन—"अस्या वक्त्राब्जमवजितपूर्णेन्दुशोभं विभाति" इत्यादौ यतिर्दुष्यति । तत्रापि पूर्वभागस्यैवैकवर्णतायां दोषः न तूत्तरस्य । तदर्थमेव स्वरसन्धावनेनापवादकरणात् । यणादेशः परादिवदित्यत्रोदाहरणम्—"सप्ताकूपारपारप्रथितपृथुयशस्यर्थिसार्थे कृतार्थे" । व्यञ्जनस्यापि परादिवद्भाव इष्यते ।यथा--"इत्यौत्सुक्या-

---

(१) सम्पूर्णः श्लोकस्त्वित्थम्—

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ॥
संसर्पन्त्या सपदि भवतः स्रोतसि च्छायया

ऽसौ
स्यादस्थानोपगतयमुनासङ्गमेवाऽभिरामा ॥ (मे० १-५१)

(२) सम्पूर्णः श्लोक एवम्—

किं भीमाद् गुरुदक्षिणां गुरुगदां भीमप्रियः प्राप्तवान्
अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ॥
गोविन्देन सुदर्शनस्य निशितं धारापथं प्रापितः
शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥(वेणी० ३-९)

दपरिगणयन्गुह्यकस्तं ययाचे"( मे०१-५)(१) इति। "नित्यं प्राक् पदसम्बद्धा" इति। तेभ्यः पूर्वा यतिर्न कार्येत्यर्थः। यथा—"बाले भूपतिमौलिलालितपदद्वन्द्वत्ववृद्धेऽपि च"। आदिपदात् "रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा"। प्रत्युदाहरणं तु—

नमः शिवाय कृष्णाय च दानवविनाशिने।

"नित्यं प्राक्पदसम्बद्धा" इति किम्? "तथाऽऽद्रियन्ते न बुधाः सुधामपि" ( नै० १-१ )(२)। चादय इति किम्?

सम्पत्तिः सैव रमणीसखैर्या भुज्यते भुवि।

अत्र समासन्तटच्प्रत्ययान्तसखिशब्दस्य नित्यं प्राक्पदसम्बद्धत्वेऽपि यतिर्न दुष्यति। "परेण नित्यसम्बद्धा" इति। परादिति तेभ्यः परा यतिर्न भवतीत्यर्थः। "प्रस्मृतः किमथवा पठितो नु" (नै० ५-१२१) (३) आदिपदात् "निजगृहे जयिनं तिसृणां पुराम्" परेण नित्यसम्बद्धा इति किम्? कर्मप्रवचनीयेभ्यः पराऽपि यतिर्भवत्विति। यथा—

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि।

प्रादय इति किम्?

"राक्षसाधिपबलं प्रणाशया-
श्चक्रतू रघुवरौ वरौ रणे"।

अयं त्वनेकाक्षराणां चादीनां प्रादीनां चादिवद्भावः पादान्तयतावे-

---

(१) पूर्णः श्लोक एवम्—

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः॥
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्ता हि प्रकृतिकृपणाश्चेतनाऽचेतनेषु॥ (मे० १--५ )

(२) पूर्णः श्लोक एवम्—

निपीय यस्य क्षितिरक्षिणः कथा--
स्तथाऽऽद्रियन्ते न बुधाः सुधामपि॥
नलः सितच्छत्रितकीर्तिमण्डलः
स राशिरासीन्महसां महोज्ज्वलः॥ ( नै० १-१ )

(३) पूर्णः श्लोक एवम्—

नाक्षराणि पठता किमपाठि
प्रस्मृतः किमथवा पठितोऽपि॥
इत्थमर्थिजनसंशयदोला-
खेलनं खलु चकार नकारः॥ ( न० ५-१२१ )

वेष्यते । एकाक्षराणां तु पादान्तयतौ पादमध्ये समुद्रादियतौ च । तदुक्तं कविकल्पलतायाम्—

एकस्वरोपसर्गेण विच्छेदः श्रुतिसौख्यकृत् । इति ।

पादान्ते यतौ प्रत्युदाहरणं तत्रैवोक्तम्—

यथा—पिनाकपाणिं प्रणमामि स्मरशासनम् । इति ।

पादमध्ययतौ प्रत्युदाहरणम्–"विष्णुं रुद्रं च खलु भजतां नैव संसारबन्धः" अनेकाक्षराणां तु पादमध्ये चामीकरादिष्विव पूर्वापरभागयोरेकवर्णत्वाद्यतिरिष्टैव । तत्र चादीनां यथा—"प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्" (मे० २–३२) (१)इत्यादि । प्रादीनां यथा—"दूरारूढप्रमोदं हसितमिव परिस्पृष्टमाशासखीभिः"। अत्र "नित्यं प्राक्पदसम्बद्धा" इत्यत्र च"स्वादु स्वच्छं च सलिलमिदं प्रीतये कस्य न स्यात्" इति । "नित्यं प्राक्पदसम्बद्धा इति किम् ? "मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः" ( मे० १–३८ ) (२) इति । "परेण नित्यसम्बद्धा" इत्यत्र च "दुःखं मे प्रक्षिपति हृदये दुःसहस्तद्वियोगः" इत्यादि वृत्तिकारैः समुद्रादियतिरुदाहृता । अन्ते च अयं तु पादान्तयतावन्तादिवद्भाव इष्यते, न तु पादमध्ययतौ" इत्यादि स्वयमेवोक्तं तद्विचारणीयम् । तथा—

अनुक्तयतिकेऽप्येवं कार्या श्रुतिसखा यतिः ।

तदुक्तं कविकल्पलतायाम्—

एवं यथा यथोद्वेगः सुधियां नोपजायते ।
तथा तथा मधुरतानिमित्तं यतिरिष्यते ॥

शुक्लाम्बरादयस्तु पादान्त एव यतिमाहुः । भरतादयस्तु यतिमेव नेच्छन्ति । अत एव कविप्रयोगाः । तत्र भर्तृहरेः—

लभेत सिकतासु तैलमपि यत्नतः पीडयन्

---

(१) पूर्णः श्लोक इत्थम्—

रुद्धाऽपाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ॥
त्वय्यासन्ने नयनमुपरिस्यन्दि शङ्के मृगाक्ष्या
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ ( मे० २–३२ )

(२) पूर्णः श्लोक एवम्—

तां कस्यां चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात्खिन्नविद्युत्कलत्रः ॥
दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः॥ (मे० १–३८)

पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ॥
कदाचिदपि पर्यटञ्शशविषाणमासादये-
न्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ (नी०श०५) इति ।

जयदेवस्यापि—"भावं श्रृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि" (गी०गो०१२-१२)(१) इति । तदुभयं बहुविरोधाच्चिन्त्यम् । इयं च यतिर्वृत्तस्वरूपाद्भिन्नाऽपि गुणालङ्काराद्यपेक्षयान्तरङ्गाङ्गत्वात्सूत्रकारादिभिर्लक्षणमध्ये निबद्धा, न तु वृत्तस्वरूपतया । मात्रागुरुलघुनियमनं हि वृत्तलक्षणं, विरामात्मकत्वं च यतेः । अत एव वामनेन काव्यालङ्कारसूत्रेषु "न वृत्तदोषात्पृथग्यतिदोषो वृत्तस्य यत्यात्मकत्वात्" (वा०सू० २-२-५) इत्याशङ्क्य "न लक्ष्मणः पृथक्त्वात्" (वा०सू०२-२-६) इति परिहृतमित्यलम् ॥ १२ ॥

परिभाषान्तरमाह—

युक्समं विषमं चायुक्स्थानं सद्भिर्निगद्यते ॥

समं द्वितीयचतुर्थादिस्थानं युगिति सद्भिर्निगद्यते कथ्यते । विषमं चैक आदि स्थानं सद्भिरयुक् निगद्यते । चकारात्समस्य युग्मानोजसंज्ञे विषमस्य युग्मौजसंज्ञे इत्यादि ज्ञेयम् ।

पदैः पादाख्यैर्घटितं पद्यम् । तद् द्विविधम्-जातिर्वृत्तं चेति । जातिनियतमात्रिका । वृत्तं नियतगुरुलघुविन्यासम् । तत्र जातिरार्यादि । वृत्तमुक्तादि समार्धसमविषमात्मकम् । तदुक्तम्—

पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा ।
वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेत् ॥ इति ।

इत्येतत्सर्वं मनसि निधाय वृत्तस्य भेदानाह—

सममर्धसमं वृत्तं विषमं च तथापरम् ॥ १३ ॥

समाख्यमर्धसमाख्यं विषमाख्यं चेति त्रिधा वृत्तमित्यर्थः ॥ १३ ॥

त्रिविधस्यापि वृत्तस्याऽन्वर्थसंज्ञामाश्रित्य क्रमेण स्वरूपमाह श्लोक-

---

(१) पूर्णः श्लोक एवम्—
साध्वी माध्वीक ! चिन्ता न भवति भवतः शर्करे ! कर्कशासि
द्राक्षे ! द्रक्ष्यन्ति के त्वाममृत ! मृतमसि क्षीर ! नीरं रसस्ते ॥
माकन्द ! क्रन्द कान्ताऽधर ! धर न तुलां गच्छ यच्छन्ति यावत्
भावं श्रृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि॥ (गी०१२-१२)

त्रयेण—

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः ॥
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते ॥ १४ ॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत् ॥
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते ॥ १५ ॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम् ॥
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः ॥ १६ ॥

यस्याङ्घ्रयः पादाश्चत्वारोऽपि तुल्येन लक्षणेन लक्षिता युक्ताः, तच्छन्दःशास्त्रविशारदाश्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं वदन्ति । द्वितीयश्चरणस्तुर्यवच्चतुर्थवत् । तथा चार्धं समं यस्य तदर्धसममित्यन्वर्थसंज्ञा । यस्य पादचतुष्टयेऽपि परस्परं लक्ष्म लक्षणं भिद्यते तद्विषममाहुः, विगतं समं यस्मादिति व्युत्पत्तेः । तत्र समं पथ्यादि, अर्धसमं द्रुतमध्यादि, विषमं पदचतुरूर्ध्वादि ॥ १४ । १५ । १६ ॥

तत्र समवृत्तभेदानाह—

आरभ्यैकाक्षरात्पादादेकैकाक्षरवर्द्धितैः ॥
पृथक्छन्दो भवेत्पादैर्यावत्षड्विंशतिं गतम् ॥ १७ ॥

एकाक्षरं पादमारभ्यैकेनाक्षरेण कविना वर्धितैः पादैः कृत्वा पृथग्भिन्नं भिन्नं छन्द उक्तादि भवेत् । वृद्ध्यवधिमाह—यावदिति । यावत्षड्विंशति २६ षड्विंशतिसङ्ख्याकं पादं प्रति गतं गमनं भवति । षड्विंशत्यक्षरपादपर्यन्तं वृद्धिर्भवतीत्यर्थः ॥ १७ ॥

अधिकाक्षरपादस्य छन्दसः संज्ञामाह—

तदूर्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्तिताः ।

षड्विंशत्यक्षरपादाच्छन्दस ऊर्ध्वं सप्तविंशत्याद्यक्षरपादं छन्दश्चण्डवृष्ट्यादिदण्डकसंज्ञं भवति । सप्तविंशत्यक्षरादेकैकेन रगणादिना वृद्धिः, न त्वेकैकाक्षरेण । आदिपदादर्णवादिः ॥

इह शास्त्रे विशेषलक्षणेनाऽलक्षितस्य छन्दसः कविभिश्च ग्रथ्यमानस्य

सामान्यसंज्ञामाह—

शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः ॥ १८ ॥

शेषं विशेषनिरूपितादन्यत्। तदेवाह—त्रिभिरिति । क्वचित्त्रिभिः, क्वचित्षड्भिः, चकाराद्दशभिर्विलक्षणगुरुलघुक्रमवद्भिर्न्यूनाधिकाक्षरैश्च चरणैर्युक्ता यास्ता गाथा ज्ञेया इत्यर्थः ॥ १८ ॥

पूर्वोक्तानामेकाक्षरपादमारभ्य षड्विंशत्यक्षरपादावधिकानां छन्दसां सामान्यतो जातिसंज्ञा आह—

उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका ॥
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ १९ ॥
त्रिष्टुप् च जगती चैव तथाऽतिजगती मता ॥
शक्वरी साऽतिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते ॥२०॥
धृतिश्चाऽतिधृतिश्चैव कृतिः प्रकृतिराकृतिः ॥
विकृतिः सङ्कृतिश्चैव तथाऽतिकृतिरुत्कृतिः ॥२१॥

एकाक्षरपादा 'उक्ता' नाम। इयं च जातिसंज्ञा। अवान्तरसंज्ञास्तु वक्ष्यन्ते। एवमितरत्रापि द्व्यक्षरपादा 'अत्युक्ता'। एवं शेषा अपि ज्ञेयाः। अन्या सुपूर्विका, अनन्तरोक्ता प्रतिष्ठैव, सुपूर्वा सती सुप्रतिष्ठा नामाऽन्या जातिरित्यर्थः। साऽतिपूर्वेति। सा शक्वर्यतिपूर्वा । अतिशक्वरीत्यर्थः। ननु सूत्रकारेण समच्छन्दसां गायत्र्यादीनामेवोक्तत्वादुक्तात्युक्तेरुत्सूत्रत्वमिति चेन्न। "द्विकौ ग्लौ" (पिं०सू०) इत्यादिसूत्रोक्तैकाक्षरादिप्रस्तारस्य तत्संज्ञायां ज्ञापकत्वात्। कविभिः प्रायेऽणाप्रयुक्तत्वात्तेषां लक्षणावसरेऽनुक्तिरिति भावः। ताः—१ उक्ता, २ अत्युक्ता, ३ मध्या, ४ प्रतिष्ठा, ५सुप्रतिष्ठा, ६ गायत्री, ७ उष्णिक्, ८ अनुष्टुप्, ९ बृहती, १० पङ्क्तिः, ११ त्रिष्टुप्, १२ जगती, १३ अतिजगती, १४ शक्वरी, १५ अतिशक्वरी, १६ अष्टिः, १७ अत्यष्टिः, १८ धृतिः, १९ अतिधृतिः २० कृतिः, २१ प्रकृतिः, २२ आकृतिः, २३ विकृतिः, २४ सङ्कृतिः, २५ अतिकृतिः, २६ उत्कृतिः। अत्र प्रतिपादमेकैकाक्षरवृद्धौ सकले छन्दसि चतुरक्षरा वृद्धिर्भवति । तत्रोक्ता चतुरक्षरा। अत्युक्ताऽष्टाक्षरा। एवमुत्तरत्रापि । उत्कृतिश्चतुरधिकशताक्षरा ॥ १९ । २० । २१ ॥

## उक्तादिभेदज्ञानोपयोगि कोष्ठकम् ।

| क्रमाङ्कः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| जाति-नाम | उक्ता | अत्युक्ता | मध्या | प्रति-ष्ठा | सुप्र-तिष्ठा | गाय-त्री | उष्णि-क् | अनु-ष्टुप् | बृहती |
| अक्षरसङ्ख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| जातिभेद सङ्ख्या | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ | २५६ | ५१२ |
| सम्पूर्णा अक्षर-सङ्ख्या | ४ | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ३६ |

## तदग्रिमम् ।

| क्रमाङ्कः | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ |
|---|---|---|---|---|---|---|---|---|
| जाति-नाम | पङ्क्तिः | त्रिष्टुप् | जगती | अति-जगती | शक्करी | अतिश-क्करी | अष्टिः | अत्यष्टिः |
| अक्षरसङ्ख्या | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ |
| जा.भे.सं. | १०२४ | २०४८ | ४०९६ | ८१९२ | १६३८४ | ३२७६८ | ६५५३६ | १३१०७२ |
| सम्पूर्णा अक्षरसङ्ख्या | ४० | ४४ | ४८ | ५२ | ५६ | ६० | ६४ | ६८ |

तदग्रिमम् ।

| क्रमाङ्कः | १८ | १९ | २० | २१ | २२ | २३ |
|---|---|---|---|---|---|---|
| जाति-नाम | धृतिः | अतिधृ-तिः | कृतिः | प्रकृतिः | आकृतिः | विकृतिः |
| अ०सं० | १८ | १९ | २० | २१ | २२ | २३ |
| जा.भे.सं. | २६२१४४ | ५२४२८८ | १०४८५७६ | २०९७१५२ | ४१९४३०४ | ८३८८६०८ |
| सं.अ.सं. | ७२ | ७६ | ८० | ८४ | ८८ | ९२ |

तदग्रिमम् ।

| क्रमाङ्कः | २४ | २५ | २६ |
|---|---|---|---|
| जातिनाम | सङ्कृतिः | अतिकृतिः | उत्कृतिः |
| अ० सं० | २४ | २५ | २६ |
| जा.भे.सं. | १६७७७२१६ | ३३५५४४३२ | ६७१०८८६४ |
| सं.अ. सं. | ९६ | १०० | १०४ |

उक्तानुवादपूर्वकं वक्तव्यमाह—

इत्युक्ताश्छन्दसां संज्ञाः क्रमतो वच्मि साम्प्रतम् ॥
लक्षणं सर्ववृत्तानां मात्रावृत्ताऽनुपूर्वकम् ॥ २२ ॥

इति श्रीकेदारभट्टविरचिते वृत्तरत्नाकरे संज्ञा-
भिधानो नाम प्रथमोऽध्यायः ॥

छन्दसामित्यमुना प्रकारेण जातिसंज्ञा उक्ताः । साम्प्रतमिदानीं मात्रा-वृत्ताऽनुपूर्वकं मात्रावृत्तमादितः कृत्वा सर्वेषां वृत्तादीनामुक्तानां क्रमशः क्रमेण लक्षणं वच्मि वदामीति योजना । प्रथमं मात्रावृत्तमुच्यते । तत उद्देशक्रमेण वर्णवृत्तमुच्यत इत्यर्थः ॥ २२ ॥

इति श्रीमद्विद्वन्मुकुटमाणिक्यश्रीमद्भट्टरामेश्वरसूनुनारा-
यणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां परि-
भाषाऽध्यायः प्रथमः ।

---

## द्वितीयोऽध्यायः ।

अथ मात्रावृत्तानि विवक्षुः प्रथममार्यां लक्षयति—लक्ष्मतदिति-द्वयेन ।

लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ॥
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः ॥ १ ॥(१)

---

(१) षष्ठजगणवत्या आर्याया उदाहरणान्तरं यथा मम (वरकल-वैद्यनाथस्य)—

अं.गु. १ नलघू २ स.गु. ३ नलघ ४ स.गु. ५ ज. ६ स.गु. ७ गु. ८

अरुणा-रुणकिर-णाली—ललितत—मं सा—मरस्य—माप—न्नम् ॥
। । ऽ, । । । ।, ऽ ऽ, । । । ।, ऽ ऽ, । ऽ ।, ऽ ऽ, ऽ,

स.गु. १ स.गु. २ अं.गु. ३ स.गु. ४ स.गु. ५ ल. ६ स.गु. ७ गु. ८

तत्त्वाऽ- तीतं किमपि स्थानं शैवं स—दा पा—तु ॥
ऽ ऽ, ऽ ऽ, । । ऽ, ऽ ऽ, ऽ ऽ, ।, ऽ ऽ, ।,

षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदानियमः ॥
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥ (१)

आर्यायाः प्रथमेऽर्धे एतन्नियतं सार्वत्रिकं लक्ष्म लक्षणं ज्ञेयम् । किं तत् । सप्तसङ्ख्याका गोपेता गुरुणा युक्ता गणाश्चतुर्मात्राः पूर्वोक्ताः । गुरूपेतत्वोक्तथा यद्यपि "स्वरा अर्धं चार्यार्धम्" (पिं०सू० ) इति सूत्रे अर्धं चेति ग्रहणात्सार्धाः सप्त गणा भवन्तीति सामान्यत उक्तम्, तथाप्यर्धगणस्थाने एको गुरुरेवान्ते कार्यः, न तु लद्वयमिति सूचितम् । इहार्यार्धे । विषमे प्रथमतृतीयादौ । स्थाने जो जगणो मध्यगुरुर्गणो न कार्यः । षष्ठस्त्वयं जगणः कार्यः । नलघू वा कार्यौ । नश्च लघुश्चेति नलघू । चतुर्लघुर्वा गणः कार्य इत्यर्थः । अन्ये तु स्वेच्छया ज्ञेयाः । षष्ठे इति । द्वितीयलादित्यतः परं पूर्वमिति शेषः । षष्ठे न्ले षष्ठस्थाने चतुर्लघौ गणे कृते सति द्वितीयलात्तस्यैव षष्ठस्य चतुर्लघोर्गणस्य द्वितीयलघोः पूर्वं प्रथमलघ्वनन्तरं सयतिपदनियमो यतिसहितं पदं नियमेन समाप्यत इत्यर्थः । 'न्ले' इति प्रथमाद्विवचनं वा । ततश्च षष्ठे स्थाने यदि न्ले नलघू स्याताम्, तदा द्वितीयलात्पूर्वं यतिरित्यर्थः । परके न्ल, न-ले षष्ठापेक्षया परस्मिन्सप्तमे चतुर्लघौ कृते सति, मुखलात्सप्तमस्य प्रथमलघोः पूर्वं षष्ठगणान्ते सयति पदं नियम्यते । चरमे द्वितीये पुनरर्धे पञ्चमके न्ले चतुर्लघौ तस्मान्मुखलघोः पूर्वम्, अर्थाच्चतुर्थान्ते, पदं समाप्यत इत्यनुषङ्गेण पूर्वपदाध्याहारेण च योज्यम् । इहेति । इहार्याचरमार्धे षष्ठो गणो लो लघुरेव भवति । न चतुर्मात्रिक इति पूर्वार्धाद्विशेषः । उत्तरार्धे एतावन्मात्रं विशेषं वदताऽन्यत्पूर्वार्धलक्षणमेव भवतीति द्योतितम् । यतिनियमं छन्दोमाणिक्यकारोऽप्याह—

पूर्वार्धे षष्ठो जः खो वा खे चास्य लघुनि भवति यतिः ।
षष्ठः खपरोऽत्र यतिस्तुर्योऽप्यथ भवति चरमदले ॥ इति ।

---

(१) षष्ठनलघुपक्षे आर्योदाहरणं यथा छन्दोमञ्जर्याम्—

| स.गु. १ | ज. २ | स.गु. ३ | स.गु. ४ | अं.गु. ५ | नलघू.६ | अं.गु.७ | गु. ८ |
|---|---|---|---|---|---|---|---|
| वृन्दा— | वने स— | लीलं | वल्गु— | द्रुमका— | एडमिहित— | तनुय— | ष्टिः ॥ |
| ऽऽ, | ।ऽ।, | ऽऽ, | ऽऽ, | ।।ऽ, | ।।।।, | ।।ऽ, | ऽ, |

| आ.गु.१ | आ.गु.२ | स.गु. ३ | स.गु. ४ | नलघू५ | ल. ६ | स.गु. ७ | गु. ८ |
|---|---|---|---|---|---|---|---|
| स्मेरमु— | खार्पित— | वेणुः | कृष्णो | यदि मन— | सि | कः स्व— | र्गः ॥ |
| ऽ।।, | ऽ।।, | ऽऽ, | ऽऽ, | ।।।।, | ।, | ऽऽ, | ऽ, |

अस्यार्थः—ख इति चतुर्लघोर्गणस्य संज्ञा । पूर्वार्धे षष्ठो गणो जगणः खो वा कार्यः । खे तु षष्ठे गणे, अस्य लघुनि तदीयप्रथमलघ्वन्ते यतिर्भवति । यदि षष्ठः खपरः = खश्चतुर्लघुः परो यस्य स तथा सप्तमश्चतुर्लघुः स्यादित्यर्थः । तदात्र षष्ठान्ते वा यतिः । चरमदले = द्वितीयार्धे यदि तुर्यश्चतुर्थः खपरस्तत्रापि चतुर्थान्ते यतिरिति । यद्वा मूले पञ्चम्यौ ल्यब्लोपे । तेन द्वितीयलमादाय सयतिपदनियमः, सयतिकपदप्रारम्भनियम इत्यादिरर्थः । उभयथापि लक्ष्येऽविसंवाद एव । किं त्वेतस्मिन्व्याख्याने "न्लौ चेत्पदं द्वितीयादि" ( पिं.सू. ४–१८ ) "सप्तमः प्रथमादि" ( पिं.सू. ४–१९ ) इति सूत्रानुग्रहो भवति । पूर्वपदाध्याहारश्च कर्तव्यो न भवति । अत एव क्षेत्रराज आह—

षष्ठे द्वितीयमादाय लमेवारभ्यते पदम् ।
सप्तमे न्ले पुनर्मुख्यं पूर्वार्धेऽसौ यतिः स्मृता ॥
पदमारभ्यते नित्यं गृहीत्वा प्रथमं लघु ।
पञ्चमे न्ले बुधैरेवं चरमार्धे स्मृता यतिः ॥ इति ।

छन्दोमाणिक्यं त्वार्यसूत्रार्थकथनेनापि सङ्गच्छते । अत्र यतिमात्रे नियते सति चामीकरादिवत्पूर्वापरभागयोरनेकाक्षरत्वे पदमध्ये यतिर्मा भूदिति पदस्यापि नियम उक्तः । तत्र स्पष्टास्पष्टविभक्तिकत्वयोर्न विशेषः । अत्र प्रथमाऽऽर्या षष्ठजगणपक्षे सामान्यलक्षणोदाहरणम् । षष्ठस्य चतुर्लघुत्वे पूर्वार्धद्विविधयतौ च द्वितीयाऽऽर्यापूर्वार्धमुदाहरणम् । उत्तरार्धयतेस्तल्लक्षणस्य तदुत्तरार्धमिति विवेकः । अत्र विषमे जगणनिषेधात्प्रत्येकं चत्वारो विकल्पाः । यथा—

[१]ऽऽ, [२]।।ऽ, [३]ऽ।।, [४]।।।। इति । समस्थाने तु जगणस्याऽनिषेधात्प्रत्येकं पञ्च। यथा–[१]ऽऽ, [२]।।ऽ, [३]।ऽ।, [४]ऽ।।, [५]।।।।, इति । ततश्च पूर्वार्धे प्रथमे भेदाः ४, द्वितीये ५, तृतीये ४, चतुर्थे ५, पञ्चमे ४, षष्ठे २ जन्लयोरेव विकल्पनात् । सप्तमे ४, अष्टमे गुरुरेकः । एतेषामन्योन्यगुणने द्वादश सहस्राणि, अष्टौ शतानि पूर्वार्धभेदाः । उत्तरार्धे तु षष्ठे लघुनियमनात्तदतिरिक्तं सर्वं पूर्ववदेव । (१) तथा चान्योन्यगुणने षट्सहस्राणि चत्वारिशतानि भेदा उत्तरार्धे । उभयविकल्पानां परस्परगुणनेऽष्टौ कोटय एकोनविंशतिर्लक्षाणि

---

(१) तथा हि—प्रथमे भेदाः ४ द्वितीये ५ तृतीये ४ चतुर्थे ५ पञ्चमे ४ षष्ठे लघुरेकः सप्तमे ४ अष्टमे गुरुरेकः । एवं च ४×५×४×५×४×४ परस्परगुणने षट् सहस्राणि चत्वारि शतानि उत्तरार्धभेदाः ।

विंशतिः सहस्राणि । इयमार्याणां भेदसङ्ख्या । अङ्कतोऽपि ८१९२०००० । तदुक्तम्—

जगणविहीना विषमे चत्वारः, पञ्च युजि, चतुर्मात्राः ।
षष्ठे द्वाविति च गणास्तथाऽङ्कतः प्रथमदलसङ्ख्या ॥

एवमपरार्धसङ्ख्या षष्ठे स्याल्लघुनि चैकस्मिन् ।
आर्यासङ्ख्योभयदलसङ्ख्याघाताद्विनिर्दिष्टा ॥ इति ॥ २ ॥

अत्रैव प्रसङ्गादार्यासु नष्टोद्दिष्टे उच्येते—

लोके प्रसिद्धनामा सीमा विद्याविनोदविभवानाम् ।
जयतीह शुद्धचरितो रामेशाख्यो गुरुः काश्याम् ॥

यदा कश्चिज्जिज्ञासेतेयमार्या कतिथेति, तदास्या गणान्स्थापयेत् । गणाधश्चतुः पञ्चादिकं सङ्ख्याविकल्पं यथासङ्ख्यं स्थापयेत् । तत उपान्त्यमन्त्येन हत्वेष्टाद्विकल्पादधस्तनाञ्शेषान्विकल्पसङ्ख्यापूरकान्विकल्पानपनीय शेषया सङ्ख्यया तदाद्यं गणविकल्पाङ्कं हत्वा इष्टविकल्पाधस्तनविकल्पान्राशेरपनीय शेषाङ्कं पूर्वपूर्वेण गुणयित्वेष्टविकल्पाधस्तनविकल्पाङ्कं पातयेत् । एवं यावदाद्यगणं कुर्यात् । शेषसङ्ख्ययाऽऽर्यासङ्ख्यां जानीयात् । अत्र सर्वगुर्वन्तगुरुमध्यगुर्वादिगुरुसर्वलघुक्रमेणावस्थानेऽधस्तनत्वं ज्ञेयम् । अत्र न्यासः—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ गु. |
| लोके | प्रसिद्ध- | नामा | सीमा | विद्या- | विनोद- | विभवा- | नाम् ॥ |
| ऽ ऽ, | । ऽ ।, | ऽ ऽ, | ऽ ऽ, | ऽ ऽ, | । ऽ ।, | ऽ । ।, | ऽ, |
| ४ | ५ | ४ | ५ | ४ | २ | ४ | १ |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ गु. |
| जयती- | ह शुद्ध- | चरितो | रामे- | शाख्यो | गु- | रुः का- | श्याम् ॥ |
| । । ऽ, | । ऽ ।, | । । ऽ, | ऽ ऽ, | ऽ ऽ, | । , | ऽ ऽ, | ऽ, |
| ४ | ५ | ४ | ५ | ४ | १ | ४ | १ |

अत्रान्ते न्यस्तस्याऽर्धगणस्य विकल्पाभावादधस्तनकाङ्कस्य द्वितीयाऽर्धे सप्तमाधस्तनैश्चतुर्भिर्गुणने जाताश्चत्वारः । सप्तमस्येष्टस्य सर्वगुरुत्वात्तस्याधस्तनान् ज (।ऽ।) गणव्यतिरिक्तानन्तगुर्वादिगुरुसर्वलघूंस्त्रींश्चतुर्षु पातयेत् । शेष एकः । षष्ठस्य लघुमात्ररूपत्वाद्विकल्पाऽभावः । पञ्चमाधस्थचतुर्भिरेकगुणने तत्राऽपि पूर्ववत्त्रयाणां त्यागे शेषस्यैकस्य चतुर्थाधस्थपञ्चभिर्हतौ चतुर्षु पातितेषु शेषस्यैकस्य तृतीयाधस्थैश्चतुर्भिर्हतौ शेषयोर्द्वयोस्त्यागे शेषद्वयस्य द्वितीयस्थैः पञ्चभिर्हतौ द्वये त्यक्ते शेषा अष्टौ । तेषां प्रथमस्थैश्चतुर्भिर्हतौ जगणातिरिक्ते द्वये त्यक्ते त्रिंशत् । एवमुत्तरार्धम् । पूर्वार्धान्त्यगणार्धं त्वविकल्पम् । सप्तमस्थैश्चतुर्भिस्त्रिंशतो द्वये पातिते शतमष्टादशाधिकम् । तस्य षष्ठस्थाभ्यां द्वाभ्यां हतौ एकस्य त्यागे पञ्चत्रिंशदधिकं शतद्वयं शिष्टम् । तस्य पञ्चमस्थैश्चतुर्भिर्हतौ त्रिषु पातितेषु शिष्टा सप्तत्रिंशदधिका नवशती । तस्यां चतुर्थस्थैः पञ्चभिर्हतायां चतुर्णां त्यागे एकाशीत्यधिकानि षट्चत्वारिंशच्छतानि । तेषु तृतीयस्थैश्चतुर्भिर्हतेषु त्रिषु पातितेषु अष्टादशसहस्राणि एकविंशत्यधिकानि सप्तशतानि च । तेषां द्वितीयस्थैः पञ्चभिर्हतौ द्वयोरपाये सहस्राणां त्रिनवतिस्त्र्यधिकाषट्शती च । तस्यां प्रथमस्थैश्चतुर्भिर्हतायां त्रयत्यागे सिद्धोऽङ्को लक्षत्रयं चतुःसप्ततिः सहस्राणां नवाधिकानि चत्वारि शतानि च । अङ्कतोऽपि ३७४४०९ । एतावत्सङ्ख्येयं पूर्वोक्ताऽऽर्या भवति । तदुक्तम्—

गणानुद्दिष्टगाथायाः संस्थाप्य तदधो लिखेत् ।
चतुःपञ्चादिकां सङ्ख्यां स्थानस्थानोचितां ततः ॥
हत्वा हत्वाद्यमन्त्येन चोपरिस्थगणादधः ।
पृथग्घातगणेभ्योऽथ गणसङ्ख्यां विकल्पयेत् ॥
हताद्धार्योचिता तावद्यावदाद्याङ्कसम्भवः ।
तत्सङ्ख्यामुद्दिशेद्गाथामुद्दिष्टप्रत्यये बुधः ॥ इति ।

इत्यार्योद्दिष्टविधिः ॥

अथ तन्नष्टम् । यदा लक्षत्रयं चतुःसप्ततिसहस्राणि चत्वारि शतानि नव चेत्येतत्सङ्ख्याऽऽर्या कीदृगिति जिज्ञासा, तदा नष्टाङ्कं लिखित्वा आदिभूतगणविकल्पैर्भागं हरेत् । भागे हृते योऽङ्कः शिष्टस्तत्सम्मितं तद्गणविकल्पेषु गणं लिखेत् । भागहारे यल्लब्धं तत्सैकं कृत्वा पुनः पुनरुत्तरगणविकल्पैर्भागे हृते भाज्यशेषसङ्ख्याको गणस्तत्तद्गणविकल्पेषु पूर्वस्थापितगणानन्तरं स्थाप्यः । इत्येवं यावत्पूर्ति कार्यम् । यत्र तु गणविकल्प एव शिष्यते, तत्र तत्सङ्ख्य एव गणो ग्राह्यः । परं लब्धं सकं न कार्यम् । शिष्टं पूर्ववत् । तद्यथा–प्रथमगणस्य चतुर्विकल्पत्वाच्चतुर्भिः

पूर्वोक्ते नष्टाङ्के हृते लब्धं त्रिनवतिसहस्राणि द्व्यधिकानि षट्शतानि च शेष एकाङ्क इति। प्रथमगणविकल्पेषु प्रथमः सर्वगुरुः स्थाप्यः। लब्धे सैके कृते द्वितीयगणस्य पञ्चविकल्पत्वात्तैर्भक्ते लब्धं सहस्राण्यष्टादश विंशत्यधिकसप्तशती च शेषास्त्रय इति। तद्विकल्पेषु तृतीयो मध्यगुरुः स्थाप्यः। लब्धे सैके तृतीयस्य चतुर्विकल्पत्वात्तैर्भक्ते लब्धमशीत्यधिकषट्चत्वारिंशच्छती शेष एक इति। तद्विकल्पेष्वाद्यः सर्वगुरुः कार्यः। लब्धे सैके चतुर्थः पञ्चविकल्प इति पञ्चभिर्भागे लब्धं नवशती षट्त्रिंशदधिका शेष एक इति। तद्विकल्पेष्वाद्यः सर्वगुरुः स्थाप्यः। लब्धे सके पञ्चमस्य चत्वारो विकल्पा इति तैर्भक्ते लब्धं चतुस्त्रिंशदधिकं शतद्वयं शेष एक इति। तद्विकल्पेषु सर्वगुरुः स्थाप्यः। लब्धे सैके षष्ठस्य जगणन्लयोरेव विकल्पाद् द्वाभ्यां भक्ते लब्धं सप्ताधिकं शतं शेष एक इति। तद्विकल्पयोराद्यो मध्यगुरुः स्थाप्यः। लब्धे सैके सप्तमस्य चत्वारो विकल्पा इति, तैर्भक्ते लब्धं एकोनत्रिंशत् शेषं द्वयमिति। तद्विकल्पेषु द्वितीयोऽन्तगुरुः। ततः सर्वार्यानियतं गुरुं न्यसेत्। एवं पूर्वार्धं स्थितम्। ततो लब्धे सैके आर्योत्तरार्धादिगणश्चतुर्विकल्प इति चतुर्भिर्भक्ते लब्धं सप्त शेषं द्वयमिति। द्वितीयविकल्पोऽन्तगुरुः। लब्धे सैके द्वितीयस्य पञ्च विकल्पा इति तैर्भक्ते लब्धमेकः शेषं त्रय इति। तृतीयविकल्पो मध्यगुरुः। लब्धे सैके तृतीयश्चतुर्विकल्प इति चतुर्भिर्भक्ते लब्धं शून्यं शेषं द्वे इति। द्वितीयविकल्पोऽन्तगुरुः। लब्धे शून्ये सैके चतुर्थः पञ्चविकल्प इति पञ्चभिर्भागे लब्धं शून्यं शेष एक इति। प्रथमविकल्पः सर्वगुरुः। लब्धे सैके पञ्चमश्चतुर्विकल्प इति तैर्भक्ते लब्धं शून्यमवशेष एक इति। प्रथमः सर्वगुरुः। अन्त एको गुरुर्लैर्ख्यो नियतत्वात्। एवं सत्येतादृशीयमिति पूर्वोक्तामेवार्यां वदेत्। तदुक्तम्—

नष्टाङ्के प्रथमे भक्ते गणाङ्कैश्चतुरादिकैः।
शेषसङ्ख्यो गणो ज्ञेयो लब्धं कुर्यात्सरूपकम्।
पुनर्भजेत्पुनर्लब्धं सरूपं शेषसङ्ख्यया।
गणान्दद्याद्धृते शेषे गाथायाः प्राग्गणक्रमः॥ इति।

एवमार्यान्तरेषु गीत्यादिषु च ज्ञेयम्। इत्यार्यानष्टविधिः॥

अथ कांश्चिदार्याविशेषानाह—

त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः।
पथ्येति नाम तस्याः प्रकीर्तितं नागराजेन॥ ३॥ (१)

(१) अत्रोदाहरणान्तरं यथा सामुद्रिकतिलके—

आद्येषु त्रिष्वंशकेषु चतुर्मात्रिकेषु त्रिषु गणेषु यस्या दलयोरर्धयोः पादो दृश्यते कविप्रयोगेषु तस्या आर्याया नागश्रेष्ठेन पिङ्गलेन पथ्येति नाम प्रकीर्तितमुक्तम्। "त्रिषु गणेषु पादः पथ्याद्ये च" (पिं. सू. ४-२२) इति सूत्रे इत्यर्थः। सर्वत्रात्र ऋषिनामनिर्देशः समूलताप्रदर्शनार्थः, न त्वन्यतमत्वप्रदर्शनार्थः। इदमेवात्रोदाहरणम्। एवमुत्तरत्राऽपि ॥ ३ ॥

सँलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥४॥ (१)

यस्या = आर्याया आद्यं गणत्रयं लङ्घयित्वा परतो यत्र क्वचिद् द्वयोः शकलयोरर्धयोर्व्यस्तयोः समस्तयोर्वा पादयोर्यतिः स्यात्, तामार्यामित्येवंप्रकारतया पिङ्गलनागो विपुलां समाख्याति कथयति। "विपुलान्या" (पिं. सू. ४-२३) इति सूत्रे इतिशब्दं प्रकारवचनमङ्गीकृत्य व्याख्येयम्। तेन इतिनाऽनुक्तत्वाद्विपुलामिति कर्मणि द्वितीयाया न विरोधः। प्रकारवाचिनेतिशब्देन चपलादीनामपि गणत्रयानन्तरविरामत्वप्रकारे सति विपुलात्वमपि भवतीति सङ्कीर्णभेदा अपि सङ्गृहीताः। इयं च त्रिविधा। पूर्वार्धे एव त्रिगणानन्तरविरामा मुखविपुला, उत्तरार्धे एव तादृग्जघनविपुला, उभयोरर्धयोस्तादृगुभयविपुलेति। इयमेव महाविपुलाऽपि। तत्र "षष्ठे" (वृ. २-२) इत्यादिर्मूलस्थाद्या। द्वितीया

---

| १ | २ | ३ | ४ | ५ | ६ | ७ | गु. |
|---|---|---|---|---|---|---|---|
| करमू— | ले यव— | माला— | द्विपरि— | क्षेपा | मनोह— | रा य— | स्य ॥ |
| ।।ऽ, | ऽ।।, | ऽऽ, | ।।ऽ, | ऽऽ, | ।ऽ।, | ऽऽ, | ऽ, |

| १ | २ | ३ | ४ | ५ | ६ | ७ | गु. |
|---|---|---|---|---|---|---|---|
| मनुजः | स राज— | मन्त्री | विपुलम— | तिर्जा— | य— | ते धन— | वान् ॥ |
| ।।ऽ, | ।ऽ।, | ऽऽ, | ।।।।, | ऽऽ, | ।, | ऽ।।, | ऽ, |

(१) अत्रोदाहरणान्तरं यथा छन्दोवृत्तौ—

| १ | २ | ३ | ४ | ५ | ६ | ७ | गु. |
|---|---|---|---|---|---|---|---|
| या स्त्री | कुचकल— | शनित— | म्बमण्ड— | ल जा— | यते म— | हाविपु— | ला ॥ |
| ऽऽ, | ।।।।, | ।।ऽ, | ।ऽ।, | ऽऽ, | ।ऽ।, | ऽ।।, | ऽ, |

| १ | २ | ३ | ४ | ५ | ६ | ७ | गु. |
|---|---|---|---|---|---|---|---|
| गम्भी— | रनाभ— | रतिदी— | र्घलोच— | ना भव— | ति | सा सुभ | गा ॥ |
| ऽऽ, | ।ऽ।, | ।।ऽ, | ।ऽ। | ऽ।।, | ।, | ऽ।।, | ऽ, |

ममैव यथा—

करुणाविषये करुणां करुणावरुणालयाशु मयि धेहि ।
राघव ! करुणाशीलवतां विषमा न मनसो वृत्तिः ॥

तृतीया मूलस्यैव ॥ ४ ॥

उभयार्धयोर्जकारौ द्वितीयतुर्यौ गमध्यगौ यस्याः ॥
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥ (१)

यस्यां द्वयोरर्धयोर्व्यस्तयोः समस्तयोर्वा द्वितीयतुर्यौ गणौ पश्चात्पुरःस्थितगुरुमध्यगतौ जगणौ स्याताम्, साऽऽर्या चपला । एतदुक्तं भवति—प्रथमो गणो द्विगुरुरन्त्यगुरुर्वा, तृतीयो द्विगुरुः, पञ्चमो द्विगुरुरादिगुरुर्वा, द्वितीयचतुर्थौ मध्यगुरू इति नियतमस्यामिति । अत्राद्यार्धे प्रथमे द्वौ विकल्पौ ( ऽऽ, ।।ऽ ), द्वितीये एकः ( ।ऽ। ), तृतीयेऽप्येकः ( ऽऽ ), चतुर्थेऽप्येकः ( ।ऽ। ), पञ्चमे द्वौ ( ऽऽ, ऽ।। ), षष्ठे द्वौ ( ।ऽ।, ।।।। ), सप्तमे चत्वारः ( ऽऽ, ।।ऽ, ऽ।।, ।।।। ), अष्टमे गुरुरेव । अन्योन्यगुणने द्वात्रिंशत् । उत्तरार्धे षष्ठस्य लघुमात्रत्वात्षोडश । उभयार्धविकल्पानामन्योन्यगुणने द्वादशाऽधिका पञ्चशती विकल्पानाम्, अङ्कतोऽपि ५१२ ॥५॥

मुखविपुलादीनां सूत्रकारानुक्तत्वात्स्वयं स्फुटतया लक्षणाऽनुक्तावपि चपलाभेदौ सूत्रोक्तत्वाल्लक्षयति—

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ॥
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥ (२)

---

( १ ) अत्रोदाहरणान्तरं यथा मम—

| स. गु. १ | ज० २ | स. गु. ३ | ज० ४ | स. गु. ५ | ज० ६ | न्‌ल ७ | ८ गु. |
|---|---|---|---|---|---|---|---|
| बाला— | कंकोटि— | वर्णं | त्रिलोक- | -सौन्द- | -र्यसार- | घटितमि- | व ॥ |
| ऽ ऽ, | । ऽ ।, | ऽ ऽ, | । ऽ ।, | ऽ ऽ, | । ऽ ।, | । । । ।, | ऽ, |

| स० १ | ज० २ | स. गु. ३ | ज० ४ | स. गु. ५ | ल० ६ | भ० ७ | गु. ८ |
|---|---|---|---|---|---|---|---|
| करुणै— | कसाग— | रं त— | न्महो म— | माल | म्ब— | नं जय— | ति ॥ |
| । । ऽ, | । ऽ ।, | ऽ ऽ, | । ऽ ।, | ऽ ऽ, | ।, | ऽ । ।, | ऽ, |

( २ ) अत्रोदाहरणान्तरं यथा ममैव—

| स. गु. १ | ज० २ | स. गु. ३ | ज० ४ | स. गु. ५ | ज० ६ | स० ७ | ८ गु. |
|---|---|---|---|---|---|---|---|
| विश्व— | प्रकाश— | हेतुः | स्वतन्त्र— | भूता | यतस्त्व- | मसि | काऽपि ॥ |
| ऽ ऽ, | । ऽ ।, | ऽ ऽ, | । ऽ ।, | ऽ ऽ, | । ऽ ।, | । । ऽ, | ऽ, |

यस्या आर्याया आद्यं प्रथमं दलमर्धं चपलानिष्ठं लक्ष्म लक्षणं भजेत । शेषे द्वितीयार्धे पूर्वजं सामान्यार्याभवं लक्ष्म यस्याः सा तथा सा मुनिना = पिङ्गलेन मुखचपलोक्ता । अत्र चपलापूर्वार्धविकल्पानां द्वात्रिंशतामार्याऽपरार्धविकल्पानां चतुःषष्टिशतरूपाणां परस्परताडनेन द्वौ लक्षौ चत्वारि सहस्राणि अष्टौ शतानि च विकल्पा भवन्ति । अङ्कतोऽपि २०४८०० ॥ ६ ॥

प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे च चपलायाः ॥
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७ ॥ (१)

प्राक्प्रतिपादितं पूर्वोक्तं लक्ष्म सामान्यलक्षणं प्रथमार्धे भवति । प्रथमेतरे द्वितीयार्धे चपलाया लक्षणं भवति, साऽऽर्या विशुद्धा विवेकचतुरा धीर्बुद्धिर्येषां तैः पिङ्गलादिभिर्जघनचपलोक्ता । अत्राऽपि चपलायामिवोत्तरार्धविकल्पाः षोडश । पूर्वार्धे त्वष्टशताधिकद्वादशसहस्रसङ्ख्या आर्यापूर्वार्धविकल्पा अविकृता एव । परस्परं गुणने द्वौ लक्षौ चत्वारः सहस्रा अष्टौ शतानि विकल्पाः । अङ्कतोऽपि २०४८०० । उभयार्धयोश्चपलालक्षणयोगे महाचपला । सा च प्रथमैव मूले । अत्र चैका पथ्या विपुलाभेदत्रयं चेति चत्वारो भेदाः । पुनश्चैत एव प्रत्येकं चपलाभेदत्रयेण सम्पन्नाः सन्तो द्वादश एवं मिलित्वा षोडशाऽऽर्याभेदाः स्थूलदृशां भवन्ति । एषां भेदानां मध्येऽनुक्तोदाहरणानि स्वबुद्ध्या ग्रन्थान्तराच्चात्राऽवगन्तव्यानि । अस्माभिस्तूक्तप्रायत्वाद् ग्रन्थविस्तरभयाच्च नोक्तानि ॥ ७ ॥ (२)

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायामार्याप्रकरणम् ।

---

स० १   ज० २   स. गु. ३   स. गु. ४   स. गु. ५   ल० ६   स. गु. ७   गु० ८

शरणं   ततः   प्रपद्य   त्वामे—वाऽहं   ज—   गन्मा—   तः ॥

। । ऽ,   । ऽ,   । ऽ ऽ,   ऽ ऽ,   ऽ ऽ,   ।,   ऽ ऽ,   ऽ,

(१) अत्रोदाहरणान्तरं यथा छन्दोवृत्तौ—

स. गु. १   भ० २   स. गु. ३   भ० ४   स० ५   ज० ६   स. गु. ७   गु० ८

यस्या—दस्यक—निष्ठा न स्पृश—ति मही—मनामि—का वाऽ—पि ॥

ऽ ऽ,   ऽ । ।,   ऽ ऽ, ऽ । ।,   । । ऽ, । ऽ ।,   ऽ ऽ,   ऽ,

स. गु. १   ज० २   स. गु. ३   ज० ४   स. गु. ५   ल० ६   न्ल ७   गु० ८

सा स—र्वधूर्त्त—भोग्या   भवेद—वश्यं   ज—घनचप—   ला ॥

ऽ ऽ,   । ऽ ।,   ऽ ऽ,   । ऽ ।,   ऽ ऽ,   ।,   । । । ।,   ऽ,

(२) ते च भेदा नामतो यथा—

अथार्यालक्षणज्ञानपूर्वकज्ञेयस्वरूपत्वात्कैश्चिदार्याभेदत्वाङ्गीकाराद्गीती-र्लक्षयति—

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ॥
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥८॥ (१)

तदाशब्दोऽत्राध्याहार्यो यदिशब्दयोगाय । तथा च यद्यार्याप्रथमार्धोक्तं लक्षणमुभयोरर्धयोः कथमपि विकल्पितषष्ठजगणचतुर्लघुगणान्यतमप्रकाराश्रयणेनापि भवेत्, तदा कृतयतिशोभां कृता यत्या विच्छेदात्मिकया शोभा श्रुतिसौभाग्यं यस्यास्ताम् । एतेनार्योक्तो यस्तल्लक्षणविशेषे सति विरामविशेषः सोऽप्यस्यां भवतीति दर्शितम् । भुजङ्गेशः = पिङ्गलस्तां गीतिं गीतवानुक्तवान् । "आद्यर्धसमा गीतिः" (पिं. सू. ४-२८) इति सूत्रेणेत्यर्थः । ततश्चात्र द्वितीयार्धेऽपि पूर्णाः सगुरवः सप्त गणाः । न तु षष्ठे लघुमात्रमित्यादि ज्ञेयम् । इयमेका पथ्या, तिस्रो विपुलाः, द्वादश चपलाः । एतत्पूर्वोक्तत्वात्षोडशधा । तत्र पथ्यागीतिर्मूले । अन्याः स्वयमुदाहार्याः । अत्राद्यार्धमार्यावत् । द्वादश सहस्राण्यष्टौ शतानि च विकल्पाः । उत्तरार्धेऽपि तावन्त एव । परस्परहतौ कोट्यः षोडशाऽष्टनियुतानि चत्वारिंशत्सहस्राणि च विकल्पाः । अङ्कतोऽपि १६३८४०००० ।

---

| | |
|---|---|
| १ पथ्यार्या । | २ मुखविपुलार्या । |
| ३ जघनविपुलार्या । | ४ उभयविपुलार्या । |
| ५ मुखचपलापथ्यार्या । | ६ मुखचपलामुखविपुलार्या । |
| ७ मुखचपलाजघनविपुलार्या । | ८ मुखचपलोभयविपुलार्या । |
| ९ जघनचपलापथ्यार्या । | १० जघनचपलामुखविपुलार्या । |
| ११ जघनचपलाजघनविपुलार्या । | १२ जघनचपलोभयविपुलार्या । |
| १३ महाचपलापथ्यार्या । | १४ महाचपलामुखविपुलार्या । |
| १५ महाचपलाजघनविपुलार्या । | १६ महाचपलोभयविपुलार्या । |

( १ ) अत्रोदाहरणान्तरं यथा मम—

स. गु. १ स. गु. २ स. गु. ३ स. गु. ४ स. गु. ५ ज० ६ स. गु. ७ गु० ८

याचे वाचे! तुभ्यं दीनो हीनो गुणैर- हं नू नम् ॥
ऽऽ, ऽऽ, ऽऽ, ऽऽ, ऽऽ, ।ऽ।, ऽऽ, ऽ,

ल्ल १ ल्ल २ स.गु.३ स.गु.४ स.गु.५ ज० ६ स० ७ गु० ८

निजतन-य इति वि-चार्य--प्रम्णा मामे—कवार—मपि प—श्य ॥
।।।।, ।।।।, ऽऽ, ऽऽ, ऽऽ, ।ऽ।, ।ऽऽ, ऽ,

पथ्यागीत्यादिषु चतुर्षु भेदेष्वियं सङ्ख्या ज्ञेया । द्वादशसु चपलागीतिषु पूर्वापरार्धविकल्पघाते सङ्ख्या स्वयमूह्या ॥८॥ (१)

आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् ॥
यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥ ९ ॥(२)

अत्रापि तदेति शेषः । यद्यार्याद्वितीयार्धे यदुक्तं लक्षणं षष्ठलघ्वादि, तदुभयोरर्धयोः स्यात् । तदोपगीतिं पिङ्गलः "अन्त्येनोपगीतिः" ( पिं० सू० ४–७६) इत्यत्राहेत्यर्थः । अस्यां पूर्वार्धे षट्सहस्राणि चत्वारि शतानि विकल्पाः । उत्तरार्धेऽपि तावन्त एव । अन्योन्यघाते चतस्रः कोट्यो नव लक्षाः षष्टिः सहस्राणां विकल्पाः । अङ्कतोऽपि ४०९६०००० ॥९॥(३)

---

( १ ) गीतेः षोडशभेदानां नामानि यथा—

१ गीतिपथ्यार्या । २ गीतिमुखविपुलार्या ।
३ गीतिजघनविपुलार्या । ४ गीत्युभयविपुलार्या ।
५ मुखचपलागीतिपथ्यार्या । ६ मुखचपलागीतिमुखविपुलार्या ।
७ मुखचपलागीतिजघनविपुलार्या । ८ मुखचपलागीत्युभयविपुलार्या ।
९ जघनचपलागीतिपथ्यार्या । १० जघनचपलागीतिमुखविपुलार्या ।
११जघनचपलागीतिजघनविपुलार्या । १२जघनचपलागीत्युभयविपुलार्या ।
१३ महाचपलागीतिपथ्यार्या । १४ महाचपलागीतिमुखविपुलार्या ।
१५ महाचपलागीतिजघनविपुलार्या । १६ महाचपलागीत्युभयविपुलार्या ।

(२) अत्रोदाहरणान्तरं यथा छन्दोवृत्तौ—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स.गु. १ | आ.गु.२ | आ.गु.३ | स.गु. ४ | स.गु. ५ | ल. ६ | आ.गु. ७ | गु. ८ |
| गान्ध— | र्वं मक— | रध्वज— | देव— | स्यास्त्रं | ज— | गद्विज— | यि ॥ |
| ऽ ऽ, | ऽ । ।, | ऽ । ।, | ऽऽ, | ऽ ऽ, | ।, | ऽ । ।, | ऽ. |
| ल्लौ १ | आ.गु. २ | आ.गु. ३ | अं.गु.४ | स.गु. ५ | ल. ६ | स.गु. ७ | गु. ८ |
| इतिसम— | वेक्ष्य मु— | मुक्षुभि— | रुपगी— | तिस्त्य— | ज्य— | ते दे— | शः ॥ |
| । । । ।, | ऽ । ।, | ऽ । ।, | । । ऽ, | ऽ ऽ, | ।, | ऽ ऽ, | ऽ. |

(३) उपगीतेः षोडशभेदानां नामानि यथा—

१ उपगीतिपथ्यार्या । २ उपगीतिमुखविपुलार्या ।
३ उपगीतिजघनविपुलार्या । ४ उपगीत्युभयविपुलार्या ।
५ मुखचपलोपगीतिपथ्यार्या । ६ मुखचपलोपगीतिमुखविपुलार्या ।
७ मुखचपलोपगीतिजघनविपुलार्या । ८ मुखचपलोपगीत्युभयविपुलार्या ।
९ जघनचपलोपगीतिपथ्यार्या । १० जघनचपलोपगीतिमुखविपुलार्या ।

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः ॥
सोद्गीतिः किल गदिता तद्वद्यत्यंशभेदसंयुक्ता ॥ १० ॥(१)

आर्यार्धद्वयं यस्या व्यत्ययेन विपर्यासेन यत्पूर्वार्धं तदुत्तरार्धम्, यदुत्तरार्धं तदत्र पूर्वार्धमित्येवंरूपेण रचितम्, सा किलेति प्रसिद्धा। उद्गीतिरुक्ता। तेनैव तद्वदिति पथ्याद्यार्याभेदवदेव यत्या विरामेण योंऽशभेदः पादभेदस्तेन युक्तेत्यर्थः। अत्रार्यावद्विकल्पसङ्ख्या। यथा—८१९२०००० ॥ १० ॥(२)

आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम् ॥
इतरत्तद्वन्निखिलं भवति यदीय[illegible]मुदि[illegible]र्यागीतिः ॥ ११ ॥(३)

---

११ जघनचपलोपगीतिजघनविपुलार्या।
१२ जघनचपलोपगीत्युभयविपुलार्या।
१३ महाचपलोपगीतिपथ्यार्या। १४ महाचपलोपगीतिमुखविपुलार्या।
१५ महाचपलोपगीतिजघनविपुलार्या। १६ महाचपलोपगीत्युभयविपुलार्या।

(१) अत्रोदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

स. गु. १ ज. २ भ. ३ स. गु. ४ स. गु. ५ ल. ६ स. गु. ७ गु. ८
नारा— यणस्य सन्तत— मुद्गी— तिः सं— स्मृ— तिर्भ— कथा ॥
ऽ ऽ, । ऽ ।, ऽ । ।, ऽ ऽ, ऽ ऽ, ।, ऽ ऽ, ऽ.

स. गु. १ स. गु. २ स. गु. ३ भ. ४ स. गु. ५ ज. ६ भ. ७ गु. ८
अर्चा—यामा— सक्ति—र्दुस्तर—संसा— रसाग—रे तर— णिः ॥
ऽ ऽ, ऽ ऽ, ऽ ऽ, ऽ । ।, ऽ ऽ, । ऽ ।, ऽ । ।, ऽ.

(२) उद्गीतेः षोडशभेदानां नामानि यथा—

१ उद्गीतिपथ्यार्या। २ उद्गीतिमुखविपुलार्या।
३ उद्गीतिजघनविपुलार्या। ४ उद्गीत्युभयविपुलार्या।
५ मुखचपलोद्गीतिपथ्यार्या। ६ मुखचपलोद्गीतिमुखविपुलार्या।
७ मुखचपलोद्गीतिजघनविपुलार्या। ८ मुखचपलोद्गीत्युभयविपुलार्या।
९ जघनचपलोद्गीतिपथ्यार्या। १० जघनचपलोद्गीतिमुखविपुलार्या।
११ जघनचपलोद्गीतिजघनविपुलार्या। १२ जघनचपलोद्गीत्युभयविपुलार्या।
१३ महाचपलोद्गीतिपथ्यार्या। १४ महाचपलोद्गीतिमुखविपुलार्या।
१५ महाचपलोद्गीतिजघनविपुलार्या। १६ महाचपलोद्गीत्युभयविपुलार्या।

(३) अत्रोदाहरणान्तरं यथा—

आर्यापूर्वार्धं यद्येकेनाधिकेन गुरुणा निधने अन्ते युक्तं स्यात् । इतरच्च द्वितीयं समस्तं यदीयमर्धं तद्वत्पूर्वार्धवदियमार्यागीतिरिरिति मुनिनोक्ता। आर्यायां हि पूर्वार्धे सगुरुकाः सप्त गणाः। इह तु पूर्णा अष्टौ गणा अर्धद्वयेऽपि भवन्ति। अन्तिमस्तु गणो द्विगुरुरेव । अन्यत्सर्वमार्यापूर्वार्धतुल्यमेवेति भावः। अत्रार्या पूर्वार्धविकल्पानामष्टमगणे विकल्पाभावात्परस्परताडने जातोऽङ्को द्वादशसहस्राण्यष्टौ शतानि च पूर्वार्धे। उत्तरार्धेऽपि तावदेव। अन्योन्यहतौ जाता मुख्यगीतिवद् भेदसङ्ख्या। अङ्कतोऽपि १६३८४०००० ।(१)

केचित्त्वत्रोत्तरार्धेऽर्धशब्दमपठित्वा इतरदार्याया एवोत्तरार्धं तद्वदन्तेऽधिकैकगुरुयुक्तं स्यात्साऽऽर्यागीतिरिरिति। आर्यापूर्वार्धमित्यत्र समस्तमप्यार्याशब्दं षष्ठ्यन्तं समासान्निष्कृष्टमनुषज्य पूर्वार्धस्याष्टगणत्वेन द्वात्रिंश-

---

न्लौ १ न्लौ २ स. गु. ३ स. गु. ४ स. गु. ५ ज. ६ स. गु. ७ स. ८

अजमज—रममर—मेकं प्रत्यक्—चैत—न्यमीश्व—रं ब्र—ह्म परम् ॥

।।।।, ।।।।, ऽऽ, ऽऽ, ऽऽ, ।ऽ।, ऽऽ, ।।ऽ.

स. गु. १ स. गु. २ स. ३ स. ४ स. गु. ५ ज. ६ स. गु. ७ स. गु. ८

आत्मा—नं भा—वयती भवमु—क्तिः स्या—दितीय—मार्या—गीतिः ॥

ऽऽ, ऽऽ, ।।ऽ, ।।ऽ, ऽऽ, ।ऽ।, ऽऽ ऽऽ.

(१) आर्यागीतेः षोडशभेदानां नामानि यथा—

१ आर्यागीतिपथ्यार्या। २ आर्यागीतिमुखविपुलार्या।
३ आर्यागीतिजघनविपुलार्या। ४ आर्यागीत्युभयविपुलार्या।
५ मुखचपलार्यागीतिपथ्यार्या।
६ मुखचपलार्यागीतिमुखविपुलार्या।
७ मुखचपलार्यागीतिजघनविपुलार्या।
८ मुखचपलार्यागीत्युभयविपुलार्या।
९ जघनचपलार्यागीतिपथ्यार्या।
१० जघनचपलार्यागीतिमुखविपुलार्या।
११ जघनचपलार्यागीतिजघनविपुलार्या।
१२ जघनचपलार्यागीत्युभयविपुलार्या।
१३ महाचपलार्यागीतिपथ्यार्या।
१४ महाचपलार्यागीतिजघनविपुलार्या।
१५ महाचपलार्यागीतिजघनविपुलार्या।
१६ महाचपलार्यागीत्युभयविपुलार्या।

न्मात्रताम्, उत्तरार्धस्यैकोनत्रिंशन्मात्रतां चाभिप्रेत्य व्याचक्षते। भवतु नामैतद्व्याख्याकौशलम्, किं तु बहूनामसम्मतम्, सूत्राननुगुणं च, "अर्धे वसुगण आर्यागीतिः" (पिं० सू० ४-३१) इति हि सामान्यतोऽर्धे वसुगणेऽष्टगणे सतीति। यद्वा द्वे अप्यर्धे यद्यष्टगणे स्यातामिति सूत्रकार आह। कैश्चित्त्वियं सङ्गीतिरिति संज्ञिता। अपरैः स्कन्धकमिति। गीतीनामप्यार्यापूर्वकत्वादार्यात्वमस्त्येव। एताश्चतस्रोऽपि गीतयः प्रत्येकं पथ्यादिपूर्वोक्तषोडशप्रकारार्यासम्भिन्नतया षोडशेति मिलिताश्चतुःषष्टिः पूर्वाश्च षोडशार्या इति मिलित्वाऽशीतिः। तदुक्तं हलायुधेन—

एकैव भवति पथ्या तिस्रो विपुलास्ततश्चतस्रस्ताः।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात्।
साकल्येनार्याणामशीतिरेवं विकल्पाः स्युः॥ इति।

छन्दोविचितौ त्वेकादशाऽपरे गीतिभेदाः प्रदर्शिताः। ते यथा, आर्यैव दलद्वयेऽप्यधिकैकगुरुयुता सङ्गीतिः। ममैव यथा—

आगमविद्यैकनिधिर्विबुधेन्द्रशतैरधीतनिगमविलासः।
रामेश्वरभट्टगुरुर्जयति पिता मे पितामहतुल्यः॥ (१)

पूर्वार्ध एवाधिकैकगुरुयुक् सुगीतिर्नाम। पितामहगुरुरिति पठित्वा पूर्वमेवोदाहरणम् (२)। यद्युत्तरार्ध एव तादृक्तदा प्रगीतिर्नाम। 'अधीतनिगमार्थः' इति पठित्वा प्रथममेवोदाहार्यम् (३)। सुगीतिरेव व्यत्यस्तार्धानुगीतिः। सुगीत्युदाहरणमेव व्यत्यस्तार्धं ज्ञेयम् (४)। प्रगीतिरेव व्यत्यस्तार्धा मञ्जुगीतिः। प्रगीत्युदाहरणं व्यत्यस्तार्धमत्रोदाहरणम् (५)। यद्युपगीतिरर्धद्वयेऽप्यधिकैकगुरुयुक् स्यात्तदा विगीतिः। ममैव यथा—

विषयान्विषधरविषमान्संसृतिमपि नीरसां ज्ञातवतः।
संसारसारभूते दशरथबाले मतिः स्थैर्यमियात्॥ (६)॥

यद्युद्गीतिर्द्वयोरप्यर्धयोरधिकगुरुयुक्ता तदा चारुगीतिः। अत्र पूर्वोक्तं सङ्गीत्युदाहरणमेव विपर्यस्तार्धं ज्ञेयम् (७)। आर्यागीतेरेवैकगुरुहीनोत्तरार्धतायां वल्लरीत्वम्। ममैव यथा—

पीनोन्नतकुचकलशा पीवरजघनोरुभारमन्थरयाता।
पश्यन्ती प्रणयदृशा तरुणी कं वा न चालयेत्पुरुषम्॥ (८)।

तस्या एव पूर्वार्ध एव तथात्वे ललितेतिसंज्ञा अर्धयोर्व्यत्यासेनाऽनन्तरमेवोदाहरणम् (९) उपगीतिरेवाद्यार्धेऽधिकैकगुरुयुता प्रमदा-

नाम । ममैव यथा—

यस्य विलासवतीनां केलिकलाकौशले रतिविरतिः ।
मैथुनमात्ररसज्ञः शृङ्गविहीनः पुमान्स पशुः ॥ (१०) ।

सैवोत्तरार्धेऽधिकैकगुरुयुता चन्द्रिका नाम । व्यत्यस्तार्धं पूर्वमेवोदाहरणम् (११) । एतासामपि पूर्वोक्तपथ्यादिषोडशार्याणां सम्भिन्नतया प्रत्येकं षोडशधात्वे सति सङ्ख्या १७६ । एतासामुदाहरणानि स्वयमूह्यानि । विस्तरभयात्तु नोच्यन्ते । पूर्वोक्तानां चतुर्विधगीतीनां च तथैव षोडशधात्वे सङ्ख्या ६४ । ऐक्ये गीतिसङ्ख्या २४० । पूर्वोक्तषोडशशुद्धार्याभेदैक्ये सङ्ख्या २५६ ॥ ११ ॥

## इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां गीतिप्रकरणम् ॥

---

मात्राच्छन्दसां प्रकृतत्वाद्वैतालीयप्रकरणमारभते—

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ॥
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥१२॥(१)

वैतालीये छन्दसि विषमे, अर्थात्पादे, प्रथमे तृतीये च षट् कला मात्राः स्युः । समे पादे द्वितीये चतुर्थे चाष्टौ कलाः स्युः । अन्ते उक्तानां कलानामन्ते परस्ताद् रलौ रगणलघू गुरुश्च भवतीति वैतालीयस्वरूपपरिच्छेदः । एतदुक्तं भवति विषमे पादे चतुर्दश, समे च षोडश मात्राः कार्याः । तन्मध्येऽन्तिमा अष्टौ मात्रा रेफलघुगुरुभिः कार्या इति । विषमे पश्चात्षट् समेऽष्टौ अवशिष्यन्ते, तासां निवेशने नियमविशेषमाह—ताश्चेति । समे ताः षट् कला निरन्तराः नो न स्युः केवलाः षट् लघव एव न कार्याः, किं तु गुरुमिश्रा इत्यर्थः । समे विशेषोक्त्या विषमे स्वरुचिः ।

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

षण्मात्राः र. ल. गु. अष्टौमात्राः र. ल. गु.
क्षुत्क्षीणश–रीरस— ञ्च— या व्यक्तीभूतशि–रोऽस्थिप—ञ्ज राः ॥
ऽ ऽ । ।, ऽ । ऽ; ।, ऽ, ऽ ऽ ऽ । ।, ऽ । ऽ, ।, ऽ.
ष. मा. र. ल. गु. अ. मा. र. ल. गु.
कैशैः परु–षैस्तवा—ऽर— यो वैतालीयत–नुं वित— न्व— ते ॥
ऽ ऽ । ।, ऽ । ऽ, ।, ऽ, ऽ ऽ ऽ । ।, ऽ । ऽ, ।, ऽ.

अत्राऽवशिष्टासु षट्स्वष्टसु च कलासु समा कला द्वितीया चतुर्थी षष्ठी च परया तृतीयपञ्चमसप्तमकलयाश्रिता मिलिता न भवति, द्वितीयतृतीयकलादीनामेकेन गुरुणोपादानं न कार्यमित्याशयः । अत्र विषमपादयोराद्यासु षण्मात्रास्वष्टौ विकल्पाः । यथा—SSS; ॥SS, S॥S, ॥॥S, SS॥, ॥S॥, S॥॥, ॥॥॥, समपादयोराद्यास्वष्टमात्रासु त्रयोदश विकल्पाः—SSSS, ॥SSS, ।S।SS, ॥॥॥SS, SS॥S, ॥S॥S, S॥॥S, SSS॥, ॥SS॥, S॥S॥, ॥॥S॥, SS॥॥, ॥S॥॥, एते आर्याभिर्वर्णक्रमेण निबद्धाः कैश्चित्—'मीनाङ्काः (१) सुरसङ्घैः (२) पङ्कजसौ(३)रभितजलाः (४) तत्सारस (५) खगसम्भृत (६) सज्जनमुदि (७) ककुभिककुभि (८) ॥

एते विषमे पादे । हंसस्मेरा (१) अलिकेशाढ्या (२) नीरजवक्त्राः (३) कुवलयनेत्राः (४) सुस्वच्छजलाः (५) सुतरङ्गभुजाः (६) केशरदशना (७) राजन्ते कृत (८) जनहर्षा भुवि (९) शारदरात्रिषु (१०) विमलनिशाकर (११) भानुप्रभृतिषु (१२) ननु पश्य सुतनु (१३) ॥" एते समे ॥ ततोऽष्टभिस्त्रयोदश गुणिताश्चतुरधिकं शतं वैतालीयस्याद्यार्धे भेदाः । एतावन्त एवाऽपरार्धे । परस्परहतौ जातं दश सहस्राण्यष्टौ शतानि षोडश च । अङ्कतोऽपि १०८१६ । इयमेवौपच्छन्दसिकापातलिकयोर्वक्ष्यमाणयोः सङ्ख्या ॥ १२ ॥

वैतालीयभेदानाह—

**पर्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम् ॥ १३ ॥** (१)

विषमसमपादयोः षण्णामष्टानां च कलानामन्ते र्यौ रेफयगणौ स्याताम्, शेषं षडष्टकलानियमादि तथैव सामान्यवैतालीयवदेव यदा तदा च्छन्दोविद्भिरौपच्छन्दसिकसंज्ञं वैतालीयमुक्तम् । वैतालीय एव प्रतिचरणमेकगुर्वाधिक्येन विषमपादे षोडश, समपादे चाष्टादश मात्राः कार्या इति भावः ॥ १३ ॥

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ ।

| ६ मात्रा. | र. | य. | ८ मात्रा. | र. | य. |
|---|---|---|---|---|---|
| वाक्यैर्मधु— | रैः प्रता— | र्यं पूर्वं | यः पश्चादभि— | सन्दधा— | ति मित्रम् ॥ |
| S S । ।, | S । S, | । S S, | S S S । ।, | S । S, | । S S. |

| ६ मात्रा. | र. | य. | ८ मत्रा. | र. | य. |
|---|---|---|---|---|---|
| तं दुष्टम— | तिं विश— | ष्टगोष्ठ्या— | मौपच्छन्दसि— | कं वद— | न्ति बाह्यम् ॥ |
| S S । ।, | S । S, | । S S, | S S S । ।, | S । S, | । S S. |

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत् ॥ १४ ॥(१)

षण्णामष्टानां च मात्राणां पर्यन्ते भाद्भगणात्परौ गुरुकौ गुरू स्यातामिति रेफलघुगुरूणामपवादः । अथान्यच्छेषं पूर्ववद्वैतालीयवत् । सेयमापातलिका सुधीभिः कथितेति पर्यन्तसुधीशब्दानुषङ्गेण योज्यम् ॥ १४ ॥

तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥ १५ ॥(२)

समस्तेषु चतुर्ष्वपि पादेषु द्वितीयलो द्वितीया मात्रा तृतीयया युग् युक्ता चेत्स्यात्, तदा दक्षिणान्तिका नाम स्यादिति । चेत्तदाशब्दयोरध्याहारः कार्यः । सर्वेषु पादेषु द्वितीयो वर्णो गुरुरेव कार्य इति । तेन "न समात्र पराश्रिता कला" ( वृ० र० २-१२ ) इत्यस्यापवादः । शेषं यथाप्राप्तमेवेति भावः । इयं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्या । अस्मिन्भेदत्रयेऽपि विषमपादयोर्विकल्पौ द्वौ । यथा–।ऽ।ऽ [१], ।ऽ।।। [२]. समयोश्चत्वारो यथा—।ऽ।ऽऽ [१], ।ऽ।।ऽ [२], ।ऽ।ऽ।। [३], ।ऽ।।।। [४]. द्वयोश्चतुर्णां च परस्परहतावष्टौ पूर्वार्धे । द्वितीयार्धेऽपि तावन्त एव । तयोरन्योन्यघाते चतुःषष्टिर्भेदा भवन्ति ॥ १५ ॥

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

| ६ मात्राः | भ. | गु. | गु. | ८ मात्राः | भ. | गु. | गु. |
|---|---|---|---|---|---|---|---|
| पिङ्गलके- | शी कपि— | ला— | क्षी | वाचाटः विक- | टोन्नत— | द— | न्ती ॥ |
| ऽ।।ऽ, | ऽ।।, | ऽ, | ऽ, | ऽऽऽ।।, | ऽ।।, | ऽ, | ऽ. |

| ६ मात्राः | भ. | गु. | गु. | ८ मात्राः | भ. | गु. | गु. |
|---|---|---|---|---|---|---|---|
| आपातलि- | का पुन— | रे— | षा | नृपतिकुलेऽपि न | भाग्यमु- | पै— | ति ॥ |
| ऽऽ।।, | ऽ।।, | ऽ, | ऽ, | ।।।।ऽ।।, | ऽ।।, | ऽ, | ।. |

(२) उदाहरणान्तरं यथा मम—

| २-३ | र. | ल. | गु. | २-३ | र. | ल. | गु. |
|---|---|---|---|---|---|---|---|
| यदीयपा- | दाब्जचि— | न्त— | या | पलायनं पा- | पानि कु— | र्व— | ते ॥ |
| ।ऽ।ऽ, | ऽ।ऽ, | ।, | ऽ, | ।ऽ।ऽऽ, | ऽ।ऽ, | ।, | ऽ. |

| २-३ | र. | ल. | गु. | २-३ | र. | ल. | गु. |
|---|---|---|---|---|---|---|---|
| सदैव भ- | ण्डासुरा— | न्त— | कं | तमादिदेवं | मानसे | द— | धे ॥ |
| ।ऽ।ऽ, | ऽ।ऽ, | ।, | ऽ, | ।ऽ।ऽऽ, | ऽ।ऽ, | ।, | ऽ. |

उदीच्यवृत्तिर्द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥१६॥(१)

अयुग्मयोर्विषमयोः प्रथमतृतीययोः पादयोर्द्वितीयलो द्वितीयमात्रा अग्रेण तदग्रिमेण लेन सक्तो युक्तश्चेत्, तदा उदीच्यवृत्तिरुदितेति वक्ष्यमाणानुषङ्गः । शेषं यथाप्राप्तम् । इयं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्या । अत्र तु द्वौ विषमयोर्विकल्पौ । यथा— [1]।ऽ।ऽ, [2]।ऽ।।। समयोः पूर्वोक्तास्त्रयोदश । परस्परहतौ षड्विंशतिः पूर्वार्धभेदाः । तावन्त एवाऽपरत्र । परस्परहतौ जाता भेदाः षट्शतानि षट्सप्ततिश्च । अङ्कतोऽपि ६७६ ॥ १६ ॥

पूर्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥ १७ ॥(२)

अथेति यदीत्यर्थे वैलक्षण्ये वा । निपातानामनेकार्थत्वात् । युग्मयोर्द्वितीयचतुर्थपादयोः पञ्चमो लः पञ्चमी मात्रा पूर्वेण चतुर्थेन लघुना यदि युतः, एकेन गुरुणा चतुर्थपञ्चममात्रयोरुपादानं यदि स्यादित्य-

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

२–३ र. ल. गु. ८ मात्राः र. ल. गु.
अवाचकम-नूर्जिता— क्ष रं श्रुतिदुष्टं यति- दुष्टम- क्र—मम् ।
।ऽ।।।, ऽ।ऽ, ।, ऽ, ।।ऽऽ।।, ऽ।ऽ, ।, ऽ.

२–३ र. ल. गु. ८ मात्राः र. ल. गु.
प्रसादरहि-तं च ने—ष्य— ते कविभिः काव्यमु-दीच्यवृ- त्ति —भिः ॥
।ऽ।।।, ऽ।ऽ, ।, ऽ, ।।ऽऽ।।, ऽ।ऽ, ।, ऽ.

(१) अत्रो दाहरणान्तरं यथा छन्दोवृत्तौ—

६ मात्राः र. ल. गु. ४-५ र. ल. गु.
विपुलार्थसु-वाचका—क्ष- राः- कस्य नामनह-रन्तिमा— न— सम् ॥
।।ऽ।।, ऽ।ऽ, ।, ऽ, ऽ। ऽ।।।, ऽ।ऽ, ।, ऽ.

६ मात्राः र. ल. गु. ४-५ र. ल. गु.
रसभाववि—शेषपे— श- लाः-प्राच्यवृत्तिकवि—काव्यस- म्प— दः ॥
।।ऽ।।, ऽ।ऽ, ।, ऽ, ऽ।ऽ।।।, ऽ।ऽ, ।, ऽ,

र्थः । तदा प्राच्यवृत्तिरुदितोक्ता पिङ्गलादिभिरिति । समासान्निष्कृष्टं लशब्दमनुषज्य व्याख्येयम् । शेषं यथाप्राप्तम् । अनयोरपि उदीच्यवृत्तिप्राच्यवृत्त्योः "न समात्र पराश्रिता कला" (वृ०र०२-१२) इत्यस्य पूर्ववदेवापवादः । सेयमपि पूर्ववत्त्रेधा । विषमयोः पूर्वोक्ता अष्टौ विकल्पाः । समयोश्चत्वारः । यथा—। ऽ । ऽ । ऽ, । । । ऽ । ऽ, ऽ । ऽ । । ।, । । । ऽ । । । अष्टानां चतुर्भिर्हतौ द्वात्रिंशत्पूर्वार्धभेदाः । तावन्त एवोत्तरार्धे । परस्परहतौ भेदाश्चतुर्विंशत्यधिकं सहस्रम् । अङ्कतोऽपि१०२४॥१७॥

यदा समावोजयुग्मकौ पूर्वयोर्भवति तत्प्रवृत्तकम् ॥ १८ ॥ (१)

यदा पूर्वयोरुदीच्यवृत्तिप्राच्यवृत्त्योः समा तुल्यौ क्रमेणौजयुग्मकौ विषमसमपादौ स्याताम्, तत्तदा प्रवृत्तकं नाम । विषमयोः प्रथमतृतीययोः पादयोर्द्वितीयतृतीयमात्रायोगः । समयोस्तु चतुर्थपञ्चममात्रायोगः स्यादिति भावः । इदं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्यम् । अत्र पूर्वोक्तविषमसमपादविकल्पानामन्योन्यहतौ सङ्ख्या स्वयमूहनीया । एवमपरान्तिकादिष्वपि ॥ १८ ॥

अस्य युग्मरचिताऽपरान्तिका ॥ १९ ॥(२)

अस्य प्रवृत्तकस्य युग्मपादैर्या सम्पूर्णा रचिता साऽपरान्तिका नाम । पञ्चमी चतुर्थमात्रायुक्ता । षोडशमात्रता च चतुर्ष्वपि पादेषु कार्येत्यर्थः ।

---

( १ ) अत्रोदाहरणान्तरं यथा छन्दोवृत्तौ—

२–३ र. ल. गु. ४–५ र. ल. गु.

इदं भरत-वंशभु—भू—तां श्रूयतां श्रुतिम—नोरसा—य——नम् ॥
। ऽ । । ।, ऽ । ऽ, ।, ऽ, ऽ । ऽ । । ।, ऽ । ऽ, ।, ऽ.

२–३ र. ल. गु. ४–५ र. ल. गु.

पावनमधि-कं शुभो—द-यं व्यासवक्त्रकथि—तं प्रवृ——त्त——कम् ॥
। ऽ । । ।, ऽ । ऽ, ।, ऽ, ऽ । ऽ । । ।, ऽ । ऽ, ।, ऽ.

( २ ) अस्योदाहरणान्तरं यथा छन्दोवृत्तौ—

४–५ र. ल. गु. ४–५ र. ल. गु.

स्थिरविलासनत-मौक्तिका-व-ली-कमलकोमला-ङ्गीमृग——च——णा ॥
। । । ऽ । । ।, ऽ । ऽ, ।, ऽ, । । । ऽ । ऽ, ऽ । ऽ, ।, ऽ.

इयं च वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन पूर्ववत्त्रेधा। कश्चित्तु 'अस्य वतालीयादिच्छन्दोवृन्दस्य युग्मरचिता' इति व्याचख्यौ। तन्मते वैतालीयादिपूर्वकत्वेन तत्पूर्वत्वेन प्राच्यवृत्तिपूर्वकत्वेन च षोढा। उदाहरणानि तु स्वयमूह्यानि। भेदाः ॥ २५६ ॥ १९ ॥

## अयुग्भवा चारुहासिनी ॥ २० ॥ (१)

अस्य प्रवृत्तकस्याऽयुग्भवाऽयुक्पादैर्विषमपादै रचिता चारुहासिनी। समस्तपादेषु चतुर्दश मात्राः। द्वितीया च तृतीयायुक्ता कार्येत्यर्थः। इयमपि पूर्ववत्त्रेधा। अस्येति वैतालीयादिच्छन्दोवृन्दपरत्वेन व्याचक्षाणस्य मते तु वैतालीयौपच्छन्दसिकाऽऽपातलिकातदुदीच्यवृत्तिपूर्वकत्वेन षोढा। उदाहरणान्यूह्यानि। भेदाः २५६। अन्येऽपि भेदा अन्यैरुक्तास्ते स्वकीयैरुदाहरणैः प्रदर्श्यन्ते। यथा वैतालीयसमपादचतुष्टययुताऽन्येयं दक्षिणान्तिका। यथा—

पुरुषश्रेष्ठतमः स पूरुषो विषयैर्यस्य मनो हृतं न हि।
पुरुषक्षुद्रतमः स पूरुषो विषयैर्यस्य मनो हृतं मुहुः ॥

वैतालीयविषमपादरचितोत्तरान्तिका। यथा—

विषयान्विषमान्विषोपमानवधार्य ततोऽवधीर्य च।
कुरु राघवचिन्तनं सदा यदि ते हितमीहितं स्वकम् ॥

तथाऽऽपातलिकाप्राच्यवृत्त्योर्विषमपादाभ्यां क्रमेण रचितोपपातलि-

---

४–५ र. ल. गु. ४–५ र. ल. गु.

हरति कस्य हृद—यं नका—मि—नः सुरतकेलिकुश-लाऽपरा—न्ति——का ॥
। । । ऽ । । ।, ऽ । ऽ, ।, ऽ, । । । ऽ । । ।, ऽ । ऽ, ।, ऽ.

(१) एतदुदाहरणान्तरमपि तत्रैव—

२–३ र. ल. गु. २–३ र. ल. गु.

मनाक्प्रसृत—दन्तदी-धि-तिः स्मरोल्लसित-गण्डम——ण्ड——ला ॥
। ऽ । । ।, ऽ । ऽ, ।, ऽ, । ऽ । । ।, ऽ । ऽ, ।, ऽ.

२–३ र. ल. गु. २–३ र. ल. गु.

कटाक्षललि-ता तु का-मि—नी मनो हरति, चारुहा—सि——नी ॥
। ऽ । । ।, ऽ । ऽ, ।, ऽ, । ऽ । । ।, ऽ । ऽ, ।, ऽ.

का नाम । यथा—

यः पुरतो वक्त्यतिमिष्टं दोषभाषणरतः परोक्षतः ।
वाञ्छसि सौख्यं त्यज तं द्राङ् मित्त्रसंज्ञितमरिं विषोपमम् ॥

तथा यद्यापातलिकादीनां सप्तानां छन्दसां प्रतिपादमन्तेऽधिकैकगुरुयोगः स्यात्, तदा तन्नामकान्यौपच्छन्दसिकानि सप्त भवन्ति । तत्रापातलिकौपच्छन्दसिकम् । यथा—

आपातलिकादिषु चेदेको गुरुरधिको भवति प्रतिपादान्ते ।
आपातलिकादिकसंज्ञायुगौपच्छन्दसिकं तदभिप्रेतम् ॥

एवं दक्षिणान्तिकौपच्छन्दसिकादौ ग्रन्थगौरवप्रसङ्गादस्मदनुक्तान्युदाहरणान्यूह्यानि । एवं च वैतालीयसङ्ख्या सप्तत्रिंशत् ३७ ॥ २० ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां वैतालीयप्रकरणम् ॥

---

अथ वक्त्रस्याऽष्टाक्षरत्वेनानुष्टुभि वक्तव्यस्याऽपि तद्गतसकलस्य नियतगुरुलघुत्वाभावात्पथ्याचपलादिसंज्ञा कार्या । मात्रावृत्तनामसाङ्कर्याच्च मात्रावृत्तप्रस्ताव एव लक्षणमाह—

**वक्त्रं नाद्यान्नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ २१ ॥(१)**

आद्यादक्षरादूर्ध्वं न्सौ नगणसगणौ न स्याताम्, मगणादिर्यथेच्छं स्यात्, अब्धेश्चतुर्थादक्षरादूर्ध्वं यो यगणः स्याद्यदि, तदा वक्त्रंनाम ख्यातम् । तच्चानुष्टुभि ख्यातमुक्तमाचार्यैरिति । यदातदाशब्दाध्याहारेण ख्यातशब्दावृत्त्या च व्याख्येयम् । यद्यप्याद्यादब्धेश्चेति गणग्रहणमपि सम्भवति तथाप्यनुष्टुभि ख्यातमित्यष्टाक्षरत्वसूचनाद्गणचतुष्टयासम्भवादब्धिग्रहणस्याऽक्षरपरता । आद्यग्रहणस्यापि च तत्समभिव्याहाराद्गणग्रहणे चतुर्थाक्षरमादाय गगारम्भाच्चतुर्थाक्षरादूर्ध्वं यगणारम्भायोगा-

---

(१) एतदुदाहरणान्तरं यथा छन्दोवृत्तौ—

| ल. | य. | य. | गु. | ल. | य. | य. | गु. |
|---|---|---|---|---|---|---|---|
| न— | —वधारा— | —म्बुसंसि— | —क्तं | व— | —सुधाग— | —न्धिनिश्वा— | —सम् ॥ |
| I, | I S S, | I S S, | S, | I, | I S S, | I S S, | S. |

| गु. | ज. | य. | गु. | ल. | त. | य. | गु. |
|---|---|---|---|---|---|---|---|
| किं— | —चिदुन्न— | —तघोणा— | —ग्रं | म— | —ही काम— | —यतेव— | —क्त्रम् ॥ |
| S, | I S I, | I S S, | S, | I, | S S I, | I S S, | S. |

श्चाक्षरपरतैव । आद्यात्परतो नगणसगणनिषेधेन द्वितीयतृतीयवर्णान्यतरस्य गुरुताऽवश्यं भवतीति सूचितम् । अनुष्टुभि ख्यातमित्यनेनाष्टाक्षरपादता सूचिता । अतश्चाऽनुक्तोऽप्यष्टमो वर्णो ज्ञेयः । समयोश्च पादयोः प्रथमादक्षरादूर्ध्वं रगणोऽपि न कार्य इति सम्प्रदायः । अत्राद्ये पादे प्रथमस्थाने गुरुलघुरूपौ द्वौ विकल्पौ, द्वितीये नसनिषेधाच्छेषाः षड्गणाः, तृतीयस्थान एको य एव, चतुर्थस्थाने ग्लौ । अन्योन्यघाते चतुर्विंशतिः । एवं द्वितीयादिपादत्रयेऽपि प्रत्येकं चतुर्विंशतिः । तेषां परस्परहतौ जातं त्रयो लक्षाः एकत्रिंशत्सहस्राणि सप्त शतानि षट्सप्ततिश्चेति सङ्ख्या । अङ्कतोऽपि ३३१७७६ । एषैव सङ्ख्या प्रत्येकं पथ्यावक्त्रादिषु त्रिषु भेदेषूह्या । सम्प्रदायमाश्रित्य द्वितीयचतुर्थपादयोर्द्वितीयस्थाने रगणस्यापि निषेधात्समयोः प्रत्येकं विंशतिर्भेदाः, विषमयोश्चतुर्विंशतिरेव । तेषामन्योन्यघाते जाता सङ्ख्या लक्षद्वयं त्रिंशत्सहस्राणि चत्वारि शतानि । अङ्कतोऽपि २३०४०० ॥ २१ ॥

अब्धेर्य इत्यस्यापवादेनास्यैव भेदानाह—

युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्तितम् ॥ २२ ॥(१)

युजोर्युग्मयोर्द्वितीयचतुर्थचरणयोः सरिद्भर्तुश्चतुर्थाक्षरात्परेण जगणेन पथ्यावक्त्रं प्रकीर्तितम् । पिङ्गलेन "पथ्या युजो ज्" (पिं०सू०५-१४) इति सूत्रे इत्यर्थः । विषमयोस्तु यगणः सामान्यप्राप्तः ॥ २२ ॥

ओजयोर्जेन वारिधेस्तदेव विपरीतादि ॥ २३ ॥(२)

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

गु. त. य. ल. गु. म. ज. ल.

नि— त्यं नीति-निषण्ण— स्य रा— ज्ञो राष्ट्रं न सीद ति ॥

ऽ, ऽ ऽ।, ।ऽ ऽ, ।, ऽ, ऽ ऽऽ, । ऽ।, ।.

ल. य. य. गु. गु. म. ज. गु.

न हि पथ्या-शिनःका—ये जा—यन्ते व्या-धिवेद्——नाः ॥

।, । ऽऽ, ।ऽ ऽ, ऽ, ऽ, ऽ ऽ ऽ, ।ऽ।, ऽ.

(२) उदाहरणान्तरं तत्रैव यथा—

गु. य. ज. गु. गु. म. य. गु.

भ—र्तुराज्ञा-ऽनुवर्त्ति-—नी या स्त्री स्यात्सा-स्थिरा ल-क्ष्मीः ॥

ऽ, ।ऽऽ, ।ऽ।, ऽ, ऽ, ऽ ऽ ऽ, ।ऽ ऽ, ऽ

विषमपादयोश्चतुर्थादूर्ध्वं जगणेन तदेव पथ्यावक्त्रं विपरीतशब्दादि विपरीतपथ्येति ज्ञेयमित्यर्थः । समयोर्य एव ॥ २३ ॥

चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः ॥ २४ ॥(१)

अयुजोर्विषमयोः पयोराशेश्चतुर्थान्नकारश्चेन्नगणश्चेच्चपलावक्त्रम् । समयोर्य एव ॥ २४ ॥

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ २५ ॥

युग्मे द्वितीये चतुर्थे च पादे सप्तमो वर्णो लो लघुः सा युग्मविपुला मता सम्मता । यद्यपि पथ्यायामपि युजोः सप्तमो लस्तथापि तत्र जगणेनैव, अत्र तु नभजतैः सप्तमस्य लघुतेति न सङ्करः । तथाऽपि जगणपक्षे सङ्कर एवेति चेत्, तर्हि तत्र संज्ञाविकल्प एवास्तु । ये त्वत्र जेन सप्तमस्य नैव लघुतेत्यसङ्करमाहुस्तेषां मूलस्थ लक्ष्यविरोधः । जगणेन लघुकरणात् ।

सैतवेन पथाऽर्णवं तीर्णो दशरथात्मजः ।
रक्षःक्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना ॥

इति सैतवमतेन विपुलोदाहरणे जकारेणैव वृत्तिकृता लघुकरणात्तद्विरोधश्चेति पूर्वमेवोत्तरं युक्तं संज्ञाविकल्प इति । अत्र समपादयोस्तृतीये स्थाने चत्वारो विकल्पाः शेषेषु प्राग्वत् । तेन समयोः परस्परहता षण्णवतिर्भेदाः, विषमयोः प्रत्येकं पूर्ववच्चतुर्विंशतिः । परस्परहतौ सङ्ख्याऽपि त्रिपञ्चाशल्लक्षाः, अष्टौ सहस्राः चत्वारि शतानि षोडश च अङ्कतोऽपि ५३०८४१६ । अत्राऽयुग्मे यस्यां लः साऽयुग्मविपुलेत्यकारप्रश्लेषेणापि केचिद्व्याचक्षते । पादव्यत्ययं यत्रोदाहरणमाहुः । विपरीतपथ्या-

---

गु. य. ज. गु. ल. म. य. गु.

स्व—प्रभुत्वाऽ-भिमानि—नी वि—परीता परित्या—ज्या ॥
ऽ, ।ऽऽ, ।ऽ।, ऽ, ।, ।ऽऽ, ।ऽऽ, ऽ.

(१) उदाहरणान्तरं यथा तत्रैव—

गु. य. न. गु. गु. य. य. गु.

स्त्री— यमाणाऽप्रदश—ना व—क्त्रानिर्मा-सनासा—भ्रा ॥
ऽ, ।ऽऽ, ।।।, ऽ, ऽ, ऽऽऽ, ।ऽऽ, ऽ.

गु. य. न. गु. ल. य. य. गु.

क—न्यका व-क्त्रचप—ला ल—भते धू—र्त्तसौभा—ग्यम् ॥
ऽ, ।ऽऽ, ।।।, ऽ, ।, ।ऽऽ, ।ऽऽ, ऽ.

चपलावक्त्राभ्यां चैवं भेदः। तत्र जगणनगणाभ्यां सप्तमस्य लघुता, अत्र तु भ-ताभ्यामपि तस्य तथात्वमिति। उदाहरणं च सप्तमस्य लघुत्वमात्रतात्पर्येण जगणे भराभावेनोक्तमिति चाहुः॥ २५॥

सैतवस्याऽखिलेष्वपि॥ २६॥

सैतवस्याऽऽचार्यस्य मतेऽखिलेष्वपि पादेषु सप्तमो लः स्यादिति। स्मृत इत्यध्याहारेण सप्तमो ल इति पादानुषङ्गेण व्याख्येयम्। संज्ञा तु विपुलेति निरुपपदैव। अत्र प्रतिपादं षण्णवतिर्भेदाः। तेषां परस्परहतौ सङ्ख्या अष्टौ कोटय एकोनपञ्चाशल्लक्षाश्चतुस्त्रिंशत्सहस्राणि षट्शती षट्पञ्चाशच्च। अङ्कतोऽपि ८४९३४६५६॥ २६॥

भेनाऽब्धितो भाद्विपुला॥ २७॥

अब्धितश्चतुरक्षरात्परेण भेन भगणेन भाद् भ इत्यक्षरात्परा विपुला। भविपुलेत्यर्थः। केचिदत्र 'अखिलेष्वपि' इत्यनुवर्तयन्ति। वृत्तिकृतस्तु "म्रौ न्तौ च" (पिं० सू० ५-१६) इति सूत्रे "सर्वतः सैतवस्य" (पिं० सू० ५-१८) इति निवृत्तम्। "चपलायुजोन्" (पिं० सू० ५-१६) इत्यस्माद्युग्ग्रहणमनुवर्तते" इति वदन्तो विषमपादविषया एव भविपुलाद्या इत्याहुः॥ २७॥

इत्थमन्या रश्चतुर्थात्॥ २८॥

चतुर्थाक्षरात्परतश्चेद्रः रगणस्तदेत्थमन्या यथा भाद्विपुला तथा रादिति रविपुलेत्यर्थः॥ २८॥

नोऽम्बुधेश्चेन्नविपुला॥ २९॥

अम्बुधेश्चतुर्थान्नो नगणश्चेत्तदा नपूर्वाऽन्या विपुला। नविपुलेत्यर्थः॥ २९॥

तोऽब्धेस्तत्पूर्वान्या भवेत्॥ ३०॥

अब्धेश्चतुर्थात्परस्तगणश्चेत्तदा तत्पूर्विका तकारपूर्विकाऽन्या विपुला तविपुलेत्यर्थः। एवं मयाभ्यां तत्पूर्वे विपुले भवतः। अत्रैतासु चतसृषु पादचतुष्केऽपि तत्तद्गणयोगस्य ये सत्त्वमाहुस्तेषां मतेन यत्रैकस्मिन्द्वयोर्वा तत्तद्गणयोगस्तत्रासां परस्परसंसर्गेणान्ये भेदा ज्ञेयाः। वृत्तिकृन्मते तु विषमपादयोरेतद्गणयोगः, अन्ययोस्तु सप्तमस्य लघुत्वमात्रम्। यत्र तु चतुर्ष्वपि पादेषु भादियोगस्तस्यानुष्टुभ्यमेव। न तु वक्त्रत्वमिति विवेकः। तत्राप्ययुक्पादस्य जातिपरत्वे द्वयोरप्ययुजोर्भगणादियोगः, व्यक्तिपरत्वे त्वन्यतराङ्गीकारेणापि लक्षणार्थसिद्धेराद्ये तृतीये वा भगणादियोगः। जातिपक्षे भ-विपुलोदाहरणम्—

इयं सखे ! चन्द्रमुखी स्मितज्योत्स्ना च मानिनी ।
इन्दीवराक्षी हृदयं दन्दहीति तथापि मे ॥

आद्ये भ-विपुलोदाहरणम्—

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वत्स्यन्तावामयः स च ॥ (शि.२-१०)

तृतीये—

प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा ।
कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम् ॥ (शि.२-१९)

रेफविपुलायाः क्रमणोदाहरणानि—

सकारनानारकासकायसाददसायका ।
रसाहवा वाहसारनादवाददवादना ॥ (शि.१९-२९)
महाकविं कालिदासं वन्दे वाग्देवतां गुरुम् ।
यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिबिम्बवत् ॥
कामिनीभिः सह प्रीतिः कस्मै नाम न रोचते ।
यदि न स्याद्वारिवीचिचञ्चलं हन्त जीवितम् ॥

न-विपुलोदाहरणानि क्रमेण—

युयुत्सुनेव कवचं किमामुक्तमिदं त्वया ।
तपस्विनो हि वसते केवलाजिनवल्कले ॥ (कि.११-१५)
अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम् ।
मौलैरानाययामासुर्भरतं स्तम्भिताश्रुभिः ॥ (र. १२-१२)
तव मन्त्रकृतो मन्त्रैर्दूरात्संशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥

तत्र त-विपुलोदाहरणानि—

सा वैदुष्ये प्रौढिर्यदि सर्वशास्त्रानुगामिनी ।
सा शूरता श्रेष्ठा यदि सर्वशास्त्रानुगामिनी ॥
वन्दे गुरुं रामेश्वरं सर्वशास्त्रविशारदम् ॥
विस्मेराः कम्प्रशिरसो यस्योक्तौ पण्डिताः परे ॥
लोकवत्प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः ।
लोकव्यवहारं प्रति सदृशौ बालपण्डितौ ॥

म-विपुलोदाहरणानि—

सखा गरीयाञ्शत्रुश्च कृत्रिमस्तौ हि कार्यतः ।
स्यातामभित्रौ मित्रे च सहजप्राकृतावपि ॥ (शि.२-३६)
यियक्षमाणेनाऽऽहूतः पार्थेनाथ द्विषन्मुरम् ।
अभिचैद्यं प्रतिष्ठासुरासीत्कार्यद्वयाकुलः ॥ (शि.२-१)

षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।
ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम् ॥ (शि.२-२६)

य-विपुलोदाहरणानि—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥
नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥
तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम् ।
तत्प्रयोजककर्तृत्वमुपैति मम जल्पतः ॥ (शि.२-७१)

एवं ज-विपुलाप्युदाहार्या । तत्र तु समपादयोश्चतुर्थादूर्ध्वं जगणेन पथ्यावक्त्रता, सप्तमस्य लघुतामात्रत्वे ज-विपुलात्वमिति विवेकः । स-विपुला तु कविप्रयोगाभावान्नास्ति । अन्येषां तु मते "युयुत्सुनेव" (कि.११-१५) इत्यादीनां विषमयोश्चपलादित्वात्समयोस्तु पथ्यात्वाच्चपलापथ्यावक्त्रादिसंज्ञा भवन्ति । एवं विपुलापथ्येत्यादिसंज्ञा ज्ञेयाः । अत्र वृत्तिकृन्मते सर्वासु भ-विपुलादिषु विषमपादयोः प्रत्येकं चतुर्विंशतिर्भेदाः, समयोः प्रत्येकं षण्णवतिः । परस्परहतौ युग्मविपुलावत्सङ्ख्या ज्ञेया । अन्येषां मते तु मुख्यवक्त्रवत्सङ्ख्या । तथा सङ्कीर्णगणतायां सङ्कीर्णविपुलावक्त्रं भवति । भारवेः—

क्वचिदग्रे प्रसरता क्वचिदाप्लुत्य निघ्नता ।
शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम् ॥ (१)

कुमारे—

यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याऽविषयं मनोविषयमात्मनः ॥ (कु.६-१७)

माघे—

भवद्भिरामवसरप्रदानाय वचांसि नः ।
पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः ॥ (शि.२-८)

इत्यादयो विपुलाभेदा अनन्ता एव कविप्रयोगेषु द्रष्टव्याः । सर्वेषु तु प्रायेण चतुर्थवर्णस्य गुरुतेति साम्प्रदायिकाः ॥ ३० ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां वक्त्रप्रकरणम् ॥

---

(१) नायं श्लोकः समुपलभ्यते भारवेः सुप्रसिद्धायां कृतौ किरातार्जुनीयमहाकाव्ये इति विचारणीयं पण्डितैः । अधुनाऽवधि भारविकवेरन्तरेण किरातार्जुनीयं न काऽपि कृतिरन्या नयनपथं श्रवणपथं वा समारूढा ।

अथ मात्रासमान्याह—

**द्विगुणितवसुलघुरचलधृतिरिति ॥ ३१ ॥ (१)**

वर्णच्छन्दोऽप्येतद् द्विगुणितवसुपदस्योत्तरत्राऽनुवृत्तिसिद्ध्यर्थं प्रकीर्णकेष्वभ्यधायि । तेन मात्रासमकादिषु षोडशमात्रत्वमधिकृतं भवति । द्विगुणाः वसुलघवोऽष्टौ लघवो यस्यां साऽचलधृतिरिति कथ्यते । चकाराद्गीत्यार्येत्यपि संज्ञा भवति, इति पिङ्गलमतसङ्ग्रहः । षोडशलघुपादेत्यर्थः ॥ ३१ ॥

**मात्रासमकं नवमो ल्गान्तम् ॥ ३२ ॥ ( २ )**

यत्र पादे नवमो ल लघुरेव गुरुश्चाऽन्ते नियतस्तन्मात्रासमकसंज्ञम् । नवमाऽन्त्ययोर्लघुगुरुनियमाच्छेषे नियमाऽभावः सूचितः । सर्वथा षोडशमात्रता कार्येति भावः । सर्वेषु मात्रासमेषु सममात्रा परेण युक्ता न कार्येत्यपि सम्प्रदायः । ततश्च प्रथमे जगणाभावाच्चत्वारो गणविकल्पाः ।

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
म-द-क-ल-ख-ग-कु-ल-क-ल-र-व-मु-ख-रि-णि
। । । । । । । । । । । । । । । ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
चि-क-सि-त-स-र-सि-ज-प-रि-म-ल-सु-र-भि-णि ॥
। । । । । । । । । । । । । । । ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
गि-रि-व-र-प-रि-स-र-स-र-सि-म-ह-ति-ख-लु
। । । । । । । । । । । । । । । ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
र-ति-र-ति-श-य-मि-ह म म ह दि वि-ल-स-ति ॥
। । । । । । । । । । । । । । । ।

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

ल. गु. ल. गु.
९ ९
अश्मश्रुमुखो विरलैर्दन्तै— गम्भीराक्षो मितनासाग्रः ॥
ऽऽ।।ऽ, ।, ।।ऽऽ, ऽऽऽऽ, ।, ।ऽऽऽ.

ल. गु. ल. गु.
९ ९
निर्मांसहनुः स्फुटितैः केशै— र्मात्रासमकं लभते दुःखम् ॥
ऽऽ।।ऽ, ।, ।ऽ ऽऽ, ऽऽ।।ऽ, ।,।ऽ ऽऽ.

यथा—SS, । । S, S । ।, । । । ।. द्वितीये त्रयः—SS, । । S, S । ।, मध्यगुरुसर्वलघुगणौ विश्लोकस्येष्टत्वान्न भवतः । तृतीये एकः—। । S. "नवमो लू" इति वचनादादिगुरुसर्वगुरू न भवतः । मध्यगुरुसर्वलघू तु वानवासिकालक्षणस्पृष्टत्वान्न भवतः । चतुर्थे द्वौ—SS, । ।S. गन्तत्वाभिधानादन्ये गणा न भवन्ति । एतेषां विकल्पानामन्योन्यघाते प्रतिचरणं चतुर्विंशतिर्भेदाः । चतुर्णां चतुर्विंशत्यङ्कानामन्योन्यहतौ वक्त्रवदेव जाता सङ्ख्या लक्षत्रयं एकत्रिंशत्सहस्री षट्सप्तत्यधिकसप्तशती चेति । अङ्कतोऽपि ३३१७७६ ॥ ३२ ॥

## जो न्लावथाम्बुधेर्विश्लोकः ॥ ३३ ॥ (१)

अथेत्यथवेत्यर्थे । अम्बुधेः कलाचतुष्टयादूर्ध्वं जगणोऽथवा न्लौ चतुर्लघुर्वा गणः स्यात् । शेषं पूर्ववत् । स विश्लोको नाम मात्रासमकम् । यद्यपि "विश्लोकः पञ्चमाष्टमौ" ( पिं० सू० ४-४४ ) इति सूत्रे पञ्चमाष्टममात्रयोर्लघुत्वमात्रमुक्तम्, तथाऽपि पञ्चमाष्टमयोर्लघुता चतुर्थमात्रानन्तरं जगणचतुर्लघ्वोरेव भवति, नान्यथेत्यभिप्रायेणैवमूचिवान् । जपक्षे इदमेवोदाहरणम् । लपक्षे तु "सेव्यो रघुपतिरात्महितार्थम्" । अत्राद्ये गणे विकल्पाश्चत्वारः । यथा—SS, । ।S, S । ।, । । । ।. द्वितीये द्वौ—। S ।, । । । ।. तृतीयेऽपि द्वौ—SS, S । ।. मध्यगुर्वन्तगुरुसर्वलघुरूपं भेदत्रयं तु चित्रापादकत्वान्न भवति । चतुर्थे गुर्वन्तं गणद्वयम्—। ।S, SS. एतेषां परस्परघाते द्वात्रिंशत्प्रतिपादभेदाः । एतेषां घाते जाता सङ्ख्या दश लक्षा अष्टाचत्वारिंशत्सहस्राणि पञ्च शतानि षट्सप्ततिश्चेति । अङ्कतोऽपि १०४८५७६ ॥ ३३ ॥

---

( १ ) उदाहरणान्तरं यथा मम—

ज. गु. ज. गु.

थो नै-वचिन्त— येत्तो पा-दौ नामाऽ—पि नो स्म—रेत्सेज्ञा- तु ॥

S S, । S ।, SS S, S, S S, । S ।, SS S, S.

ज. गु. ज. गु.

नूनं कृपानि— धे हे मा-त लोके स जाय—ते विश्लो कः ॥

SS, । S ।, S S S, S, SS, । S ।, S S S, S.

**तद्युगलाद्वानवासिका स्यात् ॥ ३४ ॥ ( १ )**

तद्युगलादम्बुधियुगलादष्टमात्रानन्तरं यदि जो न्लौ वा सा वानवासिकेति । "जो न्लावथ" (वृ. र. २-३३) इति पदत्रयमनुषज्य योज्यम् । अत्रापि "द्वादशश्च वानवासिका" (पिं. सू. ४-४३) इति सूत्रे द्वादशचकारलभ्यनवमयोर्लघुतोक्ता, सा चैवमेव नान्यथेत्येवमेवोक्तम् । जपक्ष इदमुदाहरणम् । 'लपक्षे यथा—"लोकहितार्थं हरिहरमूर्ती" । अत्राद्ये गणे विकल्पाश्चत्वारः-SS, IIS, SII, IIII. द्वितीये त्रयः-SS, SII, IIS. तृतीये द्वौ-ISI, IIII.चतुर्थेऽपिद्वौ-SS, IIS. एतेषामन्योन्यताडने भेदाः प्रतिपादमष्टाचत्वारिंशत् । अन्योन्यहतौ जाता सङ्ख्या त्रिपञ्चाशल्लक्षा अष्टौ सहस्राणि चत्वारि शतानि षोडश च । अङ्कतोऽपि ५३०८४१६ ॥ ३४ ॥

**बाणाष्टनवसु यदि लश्चित्रा ॥ ३५ ॥ ( २ )**

---

(१) अत्रोदाहरणान्तरं यथा मम—

ज. गु. ज. गु.

या निजभर्तु—र्हिताय नि–त्यं दुःखसुखे म न्यते तृ—णा—भ्याम् ॥
S IISS, ISI, S S, SIIS S, ISI, S S.

ज. गु. ज. गु.

स्मेरमुखी स्व-प्रियप्रि—या स्या—त्सा रमणी वा-नवासि-काऽपि ॥
SIIS S, ISI, S S, SIIS S, ISI, S S.

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

ल. ल. ल. गु.

यदि वा-ञ्छ-सि-प-र-प-द-मारोढं.
IISI I I I I I SSS

ल. ल. ल. गु.

मैत्रीं प-रि-ह-र स-ह व-निताभिः॥
SS I I I I I I I ISS.

ल. ल. ल. गु.

मुह्यति मु-नि-र पि वि-षयास-क्ता-
SII I I I I I ISS S.

ल. ल. ल. गु.

चित्रा भ-वति हि म-नसोवृत्तिः ॥
SS I II I I ISSS.

बाणाः पञ्च । पञ्चमाष्टमनवसु यदि लघुः स्यात् । शेषं पूर्ववत् । तदा चित्रा नाम । अस्यामाद्ये गणे चत्वारो विकल्पाः यथा–ऽऽ, ।।ऽ, ऽ।।, ।।।। । द्वितीयेऽपि द्वौ–।ऽ।, ।।।।. तृतीये त्रयः–।।ऽ, ।ऽ।, ।।।।. चतुर्थे द्वौ–ऽऽ, ।।ऽ. अन्योन्यघाते प्रतिपादं भेदसङ्ख्या अष्टाचत्वारिंशत्। अन्योन्य-गुणने पूर्वैव सङ्ख्या ॥ ३५ ॥

उपचित्रा नवमे परयुक्ते ॥ ३६ ॥ (१)

नवमे मात्रास्वरूपे परेण दशमेन युक्ते मिलिते सत्युपचित्रा नाम । शेषं प्राग्वत् । जयदेवस्त्वेकादशादिमात्रास्वपि नियममाह—“अष्टभ्यो गो ल्यावुपचित्रा” इति । अष्टकलानन्तरं गुरुलघुयगणा इत्यर्थः । अत्र तृतीये गणे द्वौ विकल्पौ–ऽऽ, ऽ।। अन्ये गणविकल्पा मात्रासमकवत् । अन्योन्यघाते प्रतिपादं भेदा अष्टाचत्वारिंशत् । अन्योन्यघाते सङ्ख्या प्राग्वत् ॥ ३६ ॥

यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् ॥
अनियतवृत्तपरिमाणयुक्तं प्रथितं जगत्सु पादाकुलकम् ॥३७॥

अतीतानि पूर्वोक्तानि कृतानि विविधानि नानाप्रकाराणि यानि लक्ष्माणि लक्षणानि तद्युक्तैर्मात्रासमादीनां पञ्चानां पादैः कलितं रचितं तथाऽनियतवृत्तं पादचतुष्केऽपि नियतैकवृत्तलक्षणहीनं परिमाणेन च षोडशमात्रपादत्वेन युक्तम् । ततः कर्मधारयः । एतादृशं यद्वृत्तं तत्पादाकु-लकमित्यन्वर्थसंज्ञया ज्ञेयमिति तच्छब्दाध्याहारेण योज्यम्। अथ प्रथमपादे मात्रासमकविश्लोकचित्राणां लक्षणयोगः, विश्लोकोपचित्रयोर्द्वितीये, मात्रासमकवानवासिकयोस्तृतीये, उपचित्राविश्लोकयोश्चतुर्थे इति । इदं च प्रतिपादमनेकपूर्वोक्तलक्षणं मत्वोदाहरणं मन्तव्यम् । अन्ये तु

---

(१) अत्रोदाहरणान्तरं यथा छन्दोवृत्तौ—

गु.   गु.   गु.   गु.
९–१०   ९–१०

यच्चित्तं गुरु— स— क्तमुदा—रं विद्याभ्यासम—हा— व्यसनं च ॥
ऽऽऽ।।, ऽ, ।।ऽ ऽ, ऽऽऽ।।, ऽ, ।।ऽ ऽ.

९–१०   गु.   ९–१०   गु.

पृथ्वी तस्य गु–णै–रुपचि—त्रा—चन्द्रमरीचिनि—भै—र्भवती—यम् ॥
ऽऽऽ। ।, ऽ, ।।ऽ, ऽ, ऽ।।ऽ।।, ऽ, ।।ऽ, ऽ.

प्रतिपादमेकैकलक्षणयोगं वदन्तः समुदितेषु विविधलक्षणयोगाभिप्रायेणेदं व्याचक्षते । वयं तूभयथा व्याख्याने दोषाभावं वदामः । अत एव मात्रासमकादिप्रकृत्या "एभिः पादाकुलकम्" (पिं.सू.४-४७) इति सूत्रकारः सामान्यत एवाह । तथा मात्रासमकविश्लोकवानवासिकोपचित्राणामसङ्कीर्णपादवदुदाहरणमाह यथा—

अलिवाचालितविकसितचूते
काले मदनसमागमदूते ॥
स्मृत्वा कान्ता परिहृतसार्थः
पादाकुलकं धावति पान्थः ॥ इति ।

सङ्कीर्णोदाहरणं तु मूल एव । तेनोभयथाऽपि न दोषः । अत्र पञ्चानां मात्रासमकादीनां परस्परसङ्करे अनन्ता एव भेदाः । तत्र यथा द्वयोर्द्वयोः सङ्करे चत्वारिंशदधिकं शतं भेदा भवन्ति । तद्यथा—

| | | | |
|---|---|---|---|
| १<br>२ | २<br>३ | ३<br>४ | ४<br>५ |
| १<br>३ | २<br>४ | ३<br>५ | १४ |
| १<br>४ | २<br>५ | २८ | |
| १<br>५ | ४२ | | |
| ५६ | १४+२८+४२+५६=१४० | | |

अत्रैककोष्ठस्याङ्कद्वयसङ्ख्याकवृत्तद्वयस्य सङ्करे वक्ष्यमाणोपजातिप्रस्तारमार्गेण चतुर्दश प्रतिकोष्ठं भेदा भवन्ति । एवं प्रथमद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः प्रथमपञ्चमयोः सङ्करे चत्वारश्चतुर्दशका मिलिताः षट्पञ्चाशद् (५६) भवन्ति । द्वितीयतृतीयद्वितीयचतुर्थद्वितीयपञ्चमानां सङ्करे द्विचत्वारिंशत् (४२) । तथा तृतीयचतुर्थतृतीयपञ्चमानां सङ्करेऽष्टाविंशतिः (२८) । तथा चतुर्थपञ्चमयोः सङ्करे चतुर्दश (१४) इति। सर्वेषां मेलने शतमेकं चत्वारिंशच्च (१४०) । एवं त्रयाणां चतुर्णां सङ्करेऽप्यूह्याः । एतेषामुदाहरणान्यूह्यानि । विस्तरभयात्तु नोच्यन्ते । अत्राचलधृत्यादीनां सर्वेषां षोडशमात्रपदत्वेन समत्वान्मात्रासमकसंज्ञा ॥३७॥

अथोक्तानां वक्ष्यमाणानां च वृत्तानां गुरुलघुमात्रावर्णयत्तापरिज्ञानोपायमाह—

वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा ॥
गुरवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ ३८ ॥

वृत्तस्य ला मात्रा वर्णैर्विना गा गुरवो ज्ञेया इत्यध्याहारः । ला वर्णा गा इत्यादिभिर्वर्णैस्तत्सङ्ख्या लक्ष्यते । ततश्चायमर्थः—यदि वृत्तस्य मात्रावर्णयोः सङ्ख्या विज्ञाता, गुरुलघुसङ्ख्या च न ज्ञाता तदा मात्रासङ्ख्यायां वर्णसङ्ख्यामपनीयाऽवशिष्टा गुरुसङ्ख्या ज्ञेयेति, वर्णसङ्ख्यामध्ये च ज्ञातां गुरुसङ्ख्यामपनीयावशिष्टा लघुसङ्ख्या ज्ञेयेत्याशयः। यदि तु मात्राणां गुरूणां च ज्ञातसङ्ख्यत्वं वर्णाश्चाऽज्ञातसङ्ख्यास्तदा तज्ज्ञानोपायमाह—वर्णा इति । तथा वृत्तस्य मात्रा गुरुभिर्विना वर्णा ज्ञेया इत्यर्थः । वृत्तमात्रासङ्ख्यायां गुरुसङ्ख्यामपनीयाऽवशिष्टा वर्णसङ्ख्येत्यर्थः । वृत्तमात्रालघुसङ्ख्याज्ञाने सति गुरुज्ञाने प्रकारान्तरमाह—गुरव इति । वृत्तस्य ला इत्यनुषङ्गः । वृत्तस्य मात्राः लैर्लघुभिर्विना दलेऽर्धे कृते गुरवो ज्ञेयाः । वृत्तमात्रासङ्ख्यायां लघुसङ्ख्यामपनीयाऽवशिष्टां सङ्ख्यामर्धीकृत्य तावत्प्रमाणा गुरुसङ्ख्येत्यर्थः । उक्तां गुर्वादिसङ्ख्यामुपसंहरति—नित्यमिति । इत्यमुना प्रकारेण प्रमाणं गुर्वादीनां नित्यं सर्वदा निश्चितं भवतीति शेषः । वृत्तस्येत्युपलक्षणम् । गद्यादावपि सम्भवात् । अत्र च गुरुवर्णसङ्ख्याया ज्ञानोपायप्रदर्शनमुपलक्षणार्थम् । तथा हि मात्रावर्णगुरुलघुचतुष्टयात्मके वृत्ते द्वयोर्द्वयोरियत्तापरिच्छेदेऽन्ययोः सङ्ख्यापरिच्छित्तेः । तद्यथा-मात्रावर्णयोर्मात्रागुर्वोर्मात्रालघ्वोर्वर्णलघ्वोर्गुरुलघ्वोश्च षट्सु द्विकेष्वेकैकद्विकज्ञानेऽपरं द्विकमुक्तया दिशा ज्ञेयमिति । इदं सर्वमुदाहरणे योज्यते-"वागर्थाविव सम्पृक्तौ" (रघु.१-१) इत्यत्र चतुर्दशमात्रास्वष्टरूपां वर्णसङ्ख्यामपनीयाऽवशिष्टाः षड् गुरवः । वर्णसङ्ख्यापूरकौ च द्वौ । एवं षड्रूपां गुरुसङ्ख्यामपनीयाऽवशिष्टा वर्णा अष्टौ, गुरूणां षट्त्वादवशिष्टौ द्वौ लघू । एवं लघुद्वयमपनीयावशिष्टायां द्वादशसङ्ख्यायामर्धितायां षट्सङ्ख्या गुरवः, गुरुभिर्द्वादशमात्रासिद्धेश्चतुर्दशमात्रासिद्ध्यर्थं द्वौ लघू इति । एवं वर्णगुरुज्ञाने वर्णलघुज्ञाने गुरुलघुज्ञाने चेतरद्वयज्ञानं योज्यम् । एवं सर्वेषु गद्यपद्येषु ॥ ३८ ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां मात्रासमवप्रकरणम् ।

---

मात्रानियमघटितत्वान्मात्रावृत्तप्रसङ्गेन द्विखण्डकान्याह—

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ॥
सगुरु शकलयुगलकमपि सुपरिघटितललितपदविततिभवति
शिखा ॥ ३९ ॥ (१)

शिखिनो गार्हपत्याहवनीयदक्षिणाग्न्याख्यास्त्रयोऽग्नयः। तैस्त्रित्वाख्या तत्सङ्ख्या लक्ष्यते। तेन शिखिभिर्गुणितास्त्रिगुणीकृता ये दश लघवस्तै रचितमेकं शकलमित्यध्याहारः, अपरमित्यग्रेऽभिधानात्। तथाऽपगतं न्यूनं लघुद्वयं यस्मात्ताद्वक्कार्यम्। अपरं द्वितीयम् शकलमित्यर्थः। इदं पूर्वोक्तमखिलं समग्रं लघुद्वयान्न्यूनं त्रिंशल्लघुकं भवति। शकलयुगलकमर्धद्वयमपि सगुरु अन्तेऽधिकैकगुरुयुक्तम्। सुष्ठु परिघटिता रचिता ललिता पदविततिः पदरचना यत्र तत् तादृशं च भवति शकलयुगलं यस्यां सा शिखेति, यत्तच्छब्दाऽध्याहारेणार्थः। अयं भावः—पूर्वार्धेऽष्टाविंशतिर्लघव एको गुरुरिति एकोनत्रिंशदक्षराणि, उत्तरार्धे त्रिंशल्लघव एकश्च गुरुरित्येकत्रिंशदक्षराणि यत्र सा शिखेति। सुपरिघटितेतिपदेन श्रुतिसुखकर्त्री यतिः कार्येति सूचयति ॥ ३९ ॥

---

(१) अत्रोदाहरणान्तरं यथा मम—

२८ लघवः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
भ-ग-व-ति-पु-र-म-थ-न-म-हि-षि-सु-र-मु-नि
। । । । । । । । । । । । । । । ।

१ गु.

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९
ग-ण-प-रि-च-रि-त-च-र-ण-क-म- ले ॥
। । । । । । । । । । । । ऽ

३० लघवः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
भ-व-नि-ज-च-र-ण-क-म-ल-यु-ग-ल-प-रि-च
। । । । । । । । । । । । । । । ।

१ गु.

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१
र-ण-हृ-ढ-म-ति-वि-त-र-ण-कृ-द्-वि-र-तम् ॥
। । । । । । । । । । । । । । ऽ

विनिमयविनिहितशकलयुगल -
कलितपदवितितिविरचितगुणनिचया ॥
श्रुतिसुखकृदियमपि जगति ञि
जशिर उपगतवति सति भवति खजा ॥४०॥ (१)

इयमेव शिखा यदि विनिमयेन व्यत्यासेन विनिहितं निवेशितं यच्छकलयुगलं तेन कलिता घटिता पदसमुदायकृतसौकुमार्यादिगुणसमुदायवती च, कलितान्तस्य पदादिना कर्मधारयः। श्रुतिसुखकारिणी चेति पूर्ववद्यतिः कार्येति सूचितम्। ञि अकारे। जशिर इति जकारप्रागुच्चारणे प्राप्ते सति खजा भवति। खञ्जेति यावत्। गुरुद्वयस्य छन्दसि प्रवेशयितुमशक्यत्वादुक्तिप्रकारोऽयम्। विनिमयविनिहितशकलयुगललघुललितपदवितितिरचितेति पाठे युगलान्तस्य लघ्वित्यादिना कर्मधारयः। यद्यपि सूत्रकारेण "अर्धे" (पिं.सू.५-३१) इत्यधिकृत्य "शिखैकान्नत्रिंशदेकत्रिंशदन्ते ग्" (पिं.सू.५-४३) इति "खञ्जा महत्ययुजीति" (पिं.सू.५-४४) इति च वदता पूर्वोक्तनियमवदेकोनत्रिंशदक्षरैकोनत्रिंशदक्षररचितक्रमवद्व्युत्क्रमवत्पादद्वयघटितार्धद्वयवत्यौ विंशत्यधिकशताक्षरे शिखाखञ्जे उक्ते, अत्र तु षष्ट्यक्षरे एवेति विरोधस्तथापि ग्रन्थान्तरपर्यालोचनयैव मुक्तिः। यद्वा सूत्रकारोक्तशिखाखञ्जाभ्यामेते अन्ये एव सूत्राऽनुक्ते एवात्रोक्ते। सूत्रोक्ते तु चतुर्थेऽध्याये अर्धसमत्वात्स्वयमूह्ये। अथवोभयत्रापि शकलशब्दावयववचनत्वात्पादरूपावयवपरौ कृत्वा मूलोदाहरणे चार्धविषये मत्वार्धसमत्वेऽपि च मात्रानियमात्मकत्वान्मात्रावृत्तप्रकारेणोक्तिं समाधाय सूत्रानुसारः कार्य इति सर्वं सुस्थम् ॥ ४० ॥

अष्टावर्धे गा द्व्यभ्यस्ता यस्याः साऽनङ्गक्रीडोक्ता।
दलमपरमपि वसुगुणितसलिलनिधिलघु कविरचितं
पदवितति भवति ॥ ४१ ॥ (२)

---

वृत्तरत्नाकरमतेनेदमुदाहरणम्। पिङ्गलमते तु पादचतुष्टयघटितम्। तत्र च प्रथमतृतीयपादयोः २८ अष्टाविंशतिलघवः गुरुश्चान्त एकः।
द्वितीयचतुर्थपादयोश्च ३० त्रिंशल्लघवः अन्ते गुरुश्चैकः। तदुदाहरणं छन्दोवृत्तौ द्रष्टव्यम्।
(१) एतदुदाहरणं 'भगवति' इति व्यत्यस्तं पठनीयम्।
(२) अत्रोदाहरणान्तरं यथा छन्दोवृत्तौ—

यस्या अर्धेऽष्टौ गा गुरवो द्व्यभ्यस्ता द्विगुणाः षोडशेत्यर्थः । अपिश्चार्थः । अपरं च दलं द्वितीयमर्धवसवोऽष्टौ तैर्गुणिताः सलिलनिधिलघवश्चत्वारो लघवो द्वात्रिंशद्यत्र तत्तादृक्कविना रचिता पदानां विततिर्विस्तरो यत्र तादृक् भवति साऽनङ्गक्रीडेति संज्ञयोक्ता वृत्तज्ञैः । पूर्वार्धे षोडश गुरवः, उत्तरार्धे द्वात्रिंशल्लघवः कार्या इति तात्पर्यार्थः । कवीत्यादिना श्रुतिसुखा यतिर्भवतीत्यसुसूचत् । पैङ्गले त्वियं सौम्येति संज्ञिता । इयमेव व्यत्यस्तार्धतायां ज्योतिराख्या भवति । उदाहरणं तु—

यदि सुखमनुपममपरमभिलषसि परिहर युवतिषु रतिमतिशयमिह ।
आत्मज्योतिर्योगाभ्यासाद् दृष्ट्वा दुःखच्छेदं कुर्याः ॥

अनयोर्द्वयोः शिखेति सामान्यसंज्ञा पैङ्गले उक्ता ॥ ४१ ॥

त्रिगुणनवलघुरवसितिगुरुरिति
दलयुगकृततनुरतिरुचिरा ॥ ४२ ॥ (१)

---

१६ गुरवः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
सौ-म्यां दृ-ष्टिं दे-हि स्ने-हा-द्दे-हेऽ-स्मा-कं मा-नं मु-क्त्वा ॥
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ.

३२ लघवः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
श-श-ध-र-मु-खि मु-ख-म-प-न-य म-म ह-दि
। । । । । । । । । । । । । । । ।

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
म-न-सि-ज-रु-ज-म-प-ह-र ल-घु-त-र-भि-ह ॥
। । । । । । । । । । । । । । । ।

(१) अत्रोदाहरणान्तरं छन्दोवृत्तौ यथा—

२७ लघवः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
र-ति-क-र-म-ल-य-म-रु-ति-शु-भ-श-श-म-भि
। । । । । । । । । । । । । । । ।

१ गु.

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८
ह-त-हि-म-म-ह-सि-म-धु-स-म-ये ॥
। । । । । । । । । । । ऽ.

त्रिगुणा नव लघवो यत्र, सप्तविंशतिरित्यर्थः । अवसितावपवसाने गुरुर्यस्याः सा तथा इत्यमुना प्रकारेणार्धद्वयरचितशरीरातिरुचिरासंज्ञा। पैङ्गले त्वियं चूलिकेत्युक्ता । अर्धसमत्वेऽप्यस्या मात्रामात्रघटितत्वाद- त्रोक्तिः । "चूलिकैकोनत्रिंशदन्ते ग्" ( पिं० सू० ४-५२ ) इति सूत्रपाठ- पक्षेणैवमुक्तम् । 'चूलिकार्धमेकोनत्रिंशदेकत्रिंशदन्ते ग्' इति पाठे तु प्रथमं द्वितीयं चार्धं क्रमेणैकोनत्रिंशदेकत्रिंशन्मात्रं भवति,अन्ते च मात्राद्वयस्थाने गुरुरेकः स्यात्सा चूलिकेति सूत्रार्थः । अस्मिन्पक्षे मूलानुक्तमुदाहरणं ममैव—

रघुकुलनलिनविकसनशशभृति दशमुखमुखरिपुतिमिरहरे ।
विषधरविषमविषयविषहरमहसि कुरु रतिमिह दशरथतनये ॥

अत्र सूत्रेऽर्धग्रहणात्पादनियमो नास्ति । इह चावसितिगुरुरिति पदेन गुरावेवावसानं नान्यत्रेति सूचितम् ॥ ४२ ॥

इति श्रीमद्भट्टरामेश्वरसूनुनारायणभट्टविरचितायां वृत्तरत्नाकर- व्याख्यायां मात्रावृत्ताधिकारो नाम द्वितीयोऽध्यायः ॥

## तृतीयोऽध्यायः ।

एवं मात्रावृत्तान्यभिधायाऽधुना वर्णवृत्तेषु समवृत्तानि कीर्तयति- उक्ता इति । अधिक्रियत इति शेषः । सप्तम्यन्तपाठे तु भेदा अभिधीयन्त इति । एवमत्युक्तादिष्वपि व्याख्येयम् ॥

अथोक्ता (१)—

गुः श्रीः ॥ १ ॥ (१)

---

२९ लघवः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
प-व-स-सि-प-थि-क-वि-र-हि-त-क-थ-मि-ह-तु
। । । । । । । । । । । । । । । ।

१ गु.

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३०
प-रि-ह-त-यु-व-ति-र-ति-च-प-ल-त--या ॥
। । । । । । । । । । । । । ऽ

(१) अत्रोदाहरणान्तरं यथा वाणीभूषणे—

एकाक्षरपादायामुक्तायां गुरुरेकश्चेत्पादस्तदा श्रीर्नाम । लक्ष्यलक्षणयोरेकाक्षरेण पादेनासङ्ग्रहाद्धोदाहरणमेतत् ।

नोक्ता उक्तादिभेदा ये ग्रन्थगौरवभीतितः ।
तांस्तथा शब्दचिह्नेन वदामोऽन्यत्र दर्शनात् ॥

यथा—

अस्मत्पितृकृते नव्ये काव्ये रामकुतूहले ।
उक्ता उक्तादयो व्यक्ता विवेक्तव्याः सुयुक्तिभिः ॥

अत्र वक्ष्यमाणसङ्ख्याऽऽख्यानप्रकारेण वृत्तभेदौ २ । न च सुप्रतिष्ठान्तानां पञ्चानां जातीनां सूत्राऽनुक्तत्वान्निर्मूलतेति शङ्क्यम् । "द्विकौ ग्लौ" (पिं०सू०८-२०) इति प्रस्तारकथने, "परे पूर्णम्" (पिं०सू० ८-३३) इति मेरुप्रस्तारकथने च सूत्रकारेणाऽपि दर्शितत्वात् । बहुतरप्रचाराभावात्तु गाथाभेदवल्लक्षणानुक्तेरुपपत्तिः ॥ १ ॥

अथाऽत्युक्ता (२)—

गौ स्त्री ॥ २ ॥ (१)

द्वौ गुरू यदि पादे स्तस्तदा स्त्री नाम । अत्र वृत्तसङ्ख्या ४ ॥ २ ॥

अथ मध्या (३)—

मो नारी ॥ ३ ॥ (२)

मो मगणश्चेत्पादस्तदा नारी नाम ॥ ३ ॥

---

गु. गु. गु. गु.
वि–ष्णुं । व–न्दे ॥
ऽ, ऽ. ऽ, ऽ.

( उक्ताभेदयोः प्रथमभेदोऽयम् । )

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

गु. गु. गु. गु. गु. गु. गु. गु.
गो–प–स्त्री–भिः । कृ–ष्णो रे–मे ॥
ऽ, ऽ, ऽ, ऽ. ऽ, ऽ, ऽ, ऽ.

( अत्युक्ताभेदेषु प्रथमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. म. म. म.
गो–पा–नां ना–री–भिः ॥ श्लि–ष्टोऽ–व्या–त्कृ–ष्णो वः ॥
ऽ ऽ ऽ, ऽ ऽ ऽ, ऽ ऽ ऽ, ऽ ऽ ऽ.

( मध्याभेदेषु प्रथमोऽयं भेदः । )

रो मृगी ॥ ४ ॥ (१)

रगणश्चेत्पादस्तदा मृगी । अत्र सङ्ख्या ८ ॥ ४ ॥

अथ प्रतिष्ठा (४)—

म्गौ चेत्कन्या ॥ ५ ॥ (२)

म्गौ मगणगुरू चेत्पादश्चतुर्गुरुरित्यर्थस्तदा कन्या । अत्र सङ्ख्या १६ ॥५॥

अथ सुप्रतिष्ठा (५)—

भ्गौ गिति पङ्क्तिः ॥ ६ ॥ (३)

भगणगुरू पुनर्गुरुश्चेत्येवं पङ्क्तिः । सङ्ख्या ३२ ॥ ६ ॥

अथ गायत्री (६)—

त्यौ स्तस्तनुमध्या ॥ ७ ॥ (४)

---

(१) अत्रोदाहरणान्तरं छन्दोमञ्जर्याम्—

र.

सा मृगी-लोचना । राधिका श्रीपतेः ॥

ऽ।ऽ,

( मध्याभेदेषु तृतीयोऽयं भेदः । )

(२) अत्रोदाहरणान्तरं छन्दोमञ्जर्यां यथा—

म. गु.

भास्वत्क-न्या सैका धन्या ॥ यस्याः कूले कृष्णोऽखेलत् ॥

ऽ ऽ ऽ, ऽ.

( प्रतिष्ठाभेदेषु प्रथमो भेदोऽयम् । )

(३) अत्रोदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

भ. गु. गु.

कृष्णस-ना-था तर्णकपङ्क्तिः ॥ यामुनकच्छे चारु चचार ॥

ऽ । ।, ऽ, ऽ.

( सुप्रतिष्ठाभेदेषु सप्तमोऽयं भेदः । )

(४) उदाहरणान्तरं यथा सुवृत्ततिलके—

त. य.

तेन प्र--विभक्ता कामं वयसा सा ॥ येन प्रविलासं धत्ते तनुमध्या ॥

ऽऽ।, ।ऽऽ.

( गायत्रीभेदेषु त्रयोदशोऽयं भेदः । )

त्यौ=तगण-यगणौ यदि स्तो भवतस्तदा तनुमध्येति । यदि तदेत्य-ध्याहार्यम् ॥७॥

शशिवदना न्यौ ॥ ८ ॥ (१)

नगण-यगणौ यदि पादस्तदा शशिवदना नाम ॥८॥

विद्युल्लेखा मो मः ॥ ९ ॥ (२)

मगणौ चेत्पादस्तदा विद्युल्लेखा नाम ॥ ९ ॥

त्सौ चेद्वसुमती ॥ १० ॥ (३)

तगण-सगणौ चेत्पादस्तदा वसुमती । गायत्र्यन्तेषु सर्वेषु पादेषु पादान्तयतिरित्याम्नायः । तत्र सङ्ख्या ६४ ॥ १० ॥

अथोष्णिक् (७)—

म्सौ गः स्यान्मदलेखा ॥ ११ ॥ (४)

मगणसगणगुरुभिर्मदलेखा नाम ॥

---

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. य.

शशिव-दनानां व्रजतरुणीनाम् ॥
। । ।, । ऽ ऽ.
अधरसुधोर्मिं मधुरिपुरैच्छत् ॥
( गायत्रीभेदेषु षोडशोऽयं भेदः । )

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. म.

गोपस्त्री-र्णामुख्या । विद्युल्लेखारूपा ॥
ऽ ऽ ऽ, ऽ ऽ ऽ.
कालिन्दीतीरे सा । रेमे श्रीकृष्णेन ॥
( गायत्रीभेदेषु प्रथमोऽयं भेदः । )

(३) उदाहरणान्तरं यथा मम—

त. स.

राजीव—नयना । बिम्बाऽधरवती ॥
ऽ ऽ ।, । । ऽ.
रामा भवति सा । नूनं वसुमती ॥
( गायत्रीभेदेषु एकोनत्रिंशो भेदः । )

(४) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

तथा—

सरगैर्हंसमाला ॥
मधुमति ननगाः ॥
कुमारललिता ज्सौ ग् ॥
चूडामणिस्तभगात् ॥

अत्र द्वाभ्यां पञ्चभिश्च यतिमाहुः केचित् । अन्ये तु पादान्त एव । अत्र सङ्ख्या १२८ ॥ ११ ॥

अथानुष्टुप् (८)—

भौ गिति चित्रपदा गः ॥ १२ ॥ (१)

भगणौ गुरू च यत्र पादे सा चित्रपदा । पादान्ते यतिः ॥ १२ ॥

मो मो गो गो विद्युन्माला ॥ १३ ॥ (२)

मगणौ द्वौ च गुरू विद्युन्मालेति। चतुर्भिश्चतुर्भिश्च यतिरिति सम्प्रदायः॥ १३

---

म. स. गु.

रङ्गे बा—हुविरु—ग्णात् । दन्तीन्द्रान्मदलेखा ॥
ऽ ऽ ऽ, । । ऽ, ऽ.
लग्नाऽभून्मुरशत्रौ । कस्तूरीरसचर्चा ॥
( उष्णिग्भेदेषु पञ्चविंशो भेदः । )

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

भ. भ. गु. गु.

यस्यमु-ख प्रिय-वा—णी । चेतसि सज्जनता च ॥
ऽ । ।, ऽ । ।, ऽ, ऽ.
चित्रपदाऽपि च लक्ष्मी- । स्तं पुरुषं न जहाति ॥
( अनुष्टुभ्भेदेषु ५५ तमो भेदः । )

(२) उदाहरणान्तरं यथा सुवृत्ततिलके—

म. म. गु. गु.

मौनं ध्या-नं भूमौ-श—य्या । गुर्वी तस्याः कामाऽवस्था ॥
ऽ ऽ ऽ, ऽ ऽ ऽ, ऽ, ऽ.
मेघोत्सङ्गे नृत्तासक्ता । यस्मिन्काले विद्युन्माला ॥
( अनुष्टुभ्भेदेषु प्रथमो भेदः । )

माणवकं भात्तलगाः ॥ १४ ॥ (१)

भाद्भगणात्तलगास्तगणलघुगुरवो यदि तदा माणवकम् । 'माणवका-क्रीडितकम्' इति पैङ्गले संज्ञा । पूर्ववद्यतिः ॥ १४ ॥

म्नौ गौ हंसरुतमेतत् ॥ १५ ॥ (२)

मगण-नगणौ गुरू च द्वावेतद्धंसरुतं नाम ॥ १५ ॥

र्जौ समानिका गलौ च ॥ १६ ॥ (३)

रेफ-जकारौ गुरुलघू च समानिका नाम ॥ १६ ॥

प्रमाणिका जरौ लगौ ॥ १७ ॥ (४)

---

(१) उदाहरणान्तरं यथा—

भ. त. ल. गु.

माणव-का क्रीडि-त-कं । यः कुरुते वृद्धवयाः ।
S I I, S S I I, S.
हास्यमसौ याति जने । भिक्षुरिव स्त्रीचपलः ॥
(अनुष्टुब्भेदेषु १०३ तमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. न. गु. गु.

अम्भोजा-मिशशि-ल—दमी- । मञ्जीरक्वणिततुल्यम् ॥
S S S, I I I, S, S.
तीरे राजति नदीनां । रम्यं हंसरुतमेतत् ॥
( अनुष्टुब्भेदेषु ५७ तमोऽयं भेदः । )

(३) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र. ज. गु. ल.

यस्यकृ-त्यपाद--प-द्म- । मस्ति हृत्तडागलग्न ॥
S I S, I S I, S, I.
धीः समानिका परेण । नोचिताऽत्र मत्सरेण ॥
( अनुष्टुब्भेदेषु १७१ तमो भेदः । )

(४) उदाहरणान्तरं यथा सुवृत्ततिलके—

ज. र. ल. गु.

लघु श्रु--तं मदो--द्ध-तं । गुरुश्रमाय केवलम् ॥
I S I S I S, I, S.

जगणरेफौ लघुगुरू च प्रमाणिका । समान्येव समानिका, प्रमाण्येव प्रमाणिका । स्वार्थे कश्छन्दोऽनुरोधात्कृतः ॥ १७ ॥

वितानमाभ्यां यदन्यत् ॥ १८ ॥

आभ्यां समानीप्रमाणीभ्यामन्यद्यदनुष्टुब्जातीयं छन्दो वितानसंज्ञम् । आभ्यामन्यदित्युक्तलक्षणनियमाऽभावोपलक्षणम् । केचित्तु—'समानिकायां गुरुलघुक्रमेण समाप्तिः, प्रमाणिकायां लघुगुरुक्रमेण, विताने तु द्वौ गुरू द्वौ लघू, द्वौ लघू द्वौ गुरू वा, द्वौ गुरू एको लघुः पुनरेको गुरुरिति वा, द्वौ लघू एको गुरुरेको लघुरिति वा, इत्येवं वा नियमः' इत्याहुः । तत्र द्वौ गुरू द्वौ लघू इत्यत्रोदाहरणम्—

तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु ।
इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय ॥

द्वौ लघू द्वौ गुरू इत्यत्रोदाहरणम्—

हृदयं यस्य विशालं गगनाभोगसमानम् ।
लभतेऽसौ मणिचित्रं नृपतिर्मूर्ध्नि वितानम् ॥

एवमन्यत्राप्युदाहार्यम् । वयं तु गृह्णीम एतत्, एतेषां वितानतेति न तु नियमः । अतएवोक्तनियमातिक्रमेणैवोदाहरणं मूले । सूत्रमपि "वितानमन्यत्" ( पिं० सू० ५-८ ) इति सामान्यत एव, न तु नियमं कचिदाह । वृत्तिकृदपि "सूत्रकारो वितानस्याऽनेकप्रकारतां दर्शयति" इति वदन्ननेकतामात्रमाह, न तु नियममिति ।

तथा—

नाराचिका तरौ लगौ ॥

अत्र सङ्ख्या २५६ ॥ १८ ॥

अथ बृहती (९)—

राञ्ससाविह हलमुखी ॥ १९ ॥ (१)

---

न यत्परोपकारकृद्वृ । वृथैव तत्प्रमाण्यपि ॥

( अनुष्टुब्भेदेषु ८६ तमो भेदः । )

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

र. न. स.

गण्डयो- रतिश —यकृशं । यन्मुखं प्रकटदशनम् ।
ऽ।ऽ, ।।।, ।।ऽ.

आयतं कलहनिरतां । तां स्त्रियं त्यज हलमुखीम् ॥

( बृहतीभेदेषु २५१ तमोऽयं भेदः । )

रगणानन्तरं नगणसगणौ चेदिह छन्दःशास्त्रे हलमुखी नाम । त्रिभिः षड्भिश्च यतिरिति सम्प्रदायः ॥ १९ ॥

भुजगशिशुभृता नौ मः ॥ २० ॥ (१)

द्वाभ्यां नगणाभ्यामेकेन च मगणेन भुजगशिशुभृता । सप्तभिर्द्वाभ्यां च यतिः ।

तथा—

भद्रिकेति रनरैरियम् ॥

वृत्तसङ्ख्या ५१२ ॥ २० ॥

अथ पङ्क्तिः (१०)—

म्सौ ज्गौ शुद्धविराडिदं मतम् ॥ २१ ॥ (२)

मगण-सगणौ जगणगुरू च तच्छुद्धविराण्मतं छन्दोविदाम् । पादान्तेऽत्र यतिः ॥ २१ ॥

म्नौ ज्गौ चेति पणवनामकम् ॥ २२ ॥ (३)

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. म.

इयम—धिकत—रं रम्या । विकचकुवलयश्यामा ॥
।।।, ।।।, ऽऽऽ.
रमयति हृदयं यूनां । भुजगशिशुभृता नारी ॥
( बृहतीभेदेषु ६४ तमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. स. ज. गु.

विश्वं ति-ष्ठति कु-क्षिकोट-रे । वक्त्रे यस्य सरस्वती सदा ॥
ऽऽऽ, ।।ऽ, ।ऽ।, ऽ.
अस्मत्संपितामहो गुरु- । र्ब्रह्मा शुद्धविराट् पुनातु नः ॥
( पङ्क्तिभेदेषु ३४५ तमो भेदोऽयम् । )

(३) उदाहरणान्तरं यथा मम—

म. न. ज. गु.

भक्ता ये—शरण—मुपाग ता- । स्तेषां नो चिकुरमपि प्रभुः ॥
ऽऽऽ, ।।।, ।ऽ।, ऽ.
छेत्तुं कोऽपि जगति हे शिवे ! । तेऽयं कीर्तिपणवनिःस्वनः ॥

मगण-नगणौ जगण-गुरू चेति पणवनामकम् । पञ्चभिः पञ्चभिश्च यतिः ॥

जौ रगौ मयूरसारिणी स्यात् ॥ २३ ॥ (१)

रगण-जगण-रगण-गुरुभिर्मयूरसारिणी । पादान्ते यतिः ॥ २३ ॥

भ्मौ सगयुक्तौ रुक्मवतीयम् ॥ २४ ॥ (२)

भ-म-स-गणौ-गुरुणा च रुक्मवती नाम । चम्पकमालेत्यन्ये । पादान्ते यतिः ॥ २४ ॥

मत्ता ज्ञेया मभसगयुक्ता ॥ २५ ॥ (३)

म-भ-स-गणगुरुयुता मत्ता । चतुर्भिः षड्भिश्च यतिः ॥ २५ ॥

नरजगैर्भवेन्मनोरमा ॥ २६ ॥(४)

---

( पङ्क्तिभेदेषु ३७७ तमो भेदोऽयम् । )

नारायणभट्टसम्मतमिदं लक्षणम् । अन्येषां मते तु मनयगघटितः पणवः।

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

र. ज. र. गु.

या वना-न्तराण्यु--पैति र-न्तुं । या भुजङ्गभोगमुक्तचित्ता ॥
ऽ।ऽ, ।ऽ।, ऽ।ऽ, ऽ.
या द्रुतं प्रयाति सन्नतांसा । तां मयूरसारिणीं विजह्यात् ॥

( पङ्क्तिभेदेषु १७१ तमो भेदः । )

(२) उदाहरणान्तरं यथा सुवृत्ततिलके—

भ. म. न. गु.

भग्नम—त्स्यैः का—यसह— लौ- । मोहमयी गुर्वी तव माया ॥
ऽ।।, ऽऽ ऽ, ।।ऽ. ऽ.
स्वप्नविलासा योगवियोगा । रुक्मवती हा कस्य कृते श्रीः ॥

( पङ्क्तिभेदेषु १९९ तमोऽयं भेदः )

(३) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

भ. भ. स. गु.

पीत्वा म-त्ता मधु-मधुपा—ली । कालिन्दीये तटवनकुञ्जे ॥
ऽऽ ऽ, ऽ ।।, ।।ऽ, ऽ.
उद्दीव्यन्तीर्व्रजजनरामाः । कामासक्ता मधुजिति चक्रे ॥

( पङ्क्तिभेदेषु २४१ तमो भेदोऽयम् । )

(४) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न-र-जगणगुरुभिर्मनोरमा पादान्ते यतिः ॥ २६ ॥

तजौ जो गुरुणेयमुपस्थिता ॥ २७ ॥ (१)

त-ज-जगण-गुरुभिरुपस्थिता नाम । पादान्ते यतिः । द्वाभ्यामष्टमिश्चेत्येके ॥

अत्र सङ्ख्या १०२४ ॥ २७ ॥

अथ त्रिष्टुप् (११)—

स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ २८ ॥(२)

त-त-जगणैर्गुरुभ्यां चेन्द्रवज्रा नाम । पादे यतिः ॥२८॥

उपेन्द्रवज्रा जतजास्ततो गौ ॥ २९ ॥(३)

---

न. र. ज. गु.

तरणि जातटे विहारि—णी । व्रजविलासिनीविलासतः ॥
I I I, S I S, I S I, S.
मुररिपोस्तनुः पुनातु वः । सुकृतशालिनां मनोरमा ॥

( पङ्क्तिभेदेषु ३४४ तमो भेदोऽयम् । )

(१) उदाहरणान्तरं छन्दोमञ्जर्याम्—

त. ज. ज. गु.

एषा ज—गदेक मनोह—रा । कन्या कनकोज्ज्वलदीधितिः ॥
S S I, I S I, I S I, S.
लक्ष्मीरिव दानवसूदनं । पुण्यैर्नरनाथमुपस्थिता ॥

( पङ्क्तिभेदेषु ३६५ तमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

त. त. ज. गु. गु.

ये दुष्ट लोकाइ ह भूमि—लो—के
S S I, S S I, I S I, S S.
द्वेषं व्यधुर्गोद्विजदेवसङ्घे ॥
तानिन्द्रवज्रादपि दारुणाङ्गान्
व्याजीवयद् यः सततं नमस्ते ॥

( त्रिष्टुब्भेदेषु ३५७ तमो भेदोऽयम् )

(३) उदाहरणान्तरं यथा सुवृत्ततिलके—

ज-त-जगणा गुरू चोपेन्द्रवज्रा नाम । पूर्वोक्तैव यतिः ॥ २९ ॥

अनन्तरोदीरितलक्ष्मभाजौ ॥
पादौ यदीयावुपजातयस्ताः ॥ ३० ॥(१)

---

ज. त. ज. ग. ग.

जितो ज—गत्येष भवभ्र--म-स्तै
। ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ, ऽ.
र्गुरूदितं ये गिरिशं स्मरन्ति ॥
उपास्यमानं कमलासनाद्यै-
रुपेन्द्रवज्रायुधवारिनाथैः ॥
( त्रिष्टुब्भेदेषु ३५८ तमो भेदोऽयम् । )

(१) अत्रेदमवधेयम्—समानजातिकयोरेव द्वयोर्वृत्तयोः सङ्करे उपजातित्वम् । न विषमजातिकयोः । किं च मेलनमपि वृत्तद्वयस्य कविजनसमाचरितस्य श्रुतिसुखकरस्य च । किं च यत्र चरणद्वयस्य जातिभिन्ना, अपरचरणद्वयस्य च जातिर्भिन्ना तत्र नोपजातित्वं, किं तु अर्धसमत्वम् । समजातिकयोरपि किंचिद्वैशिष्ट्यं विहाय सर्वेष्वंशेषु यत्र साम्यं सम्भवति तत्रैव मेलनम् । यथा इन्द्रवज्रोपेन्द्रवज्रयोः स्वागतारथोद्धतयोः इन्द्रवंशावंशस्थयोरित्यादि । सर्वेषूपजातिषु चतुर्दश भेदा भवन्ति । तत्र इन्द्रवज्रोपेन्द्रवज्रयोर्भेदा नामतो यथा—

| | |
|---|---|
| १ कीर्तिः ( उइइइ ) | २ वाणी ( इउइइ ) |
| ३ माला ( उउइइ ) | ४ शाला ( इउउइ ) |
| ५ हंसी ( उइउइ ) | ६ माया ( उइइउ ) |
| ७ जाया ( उउउइ ) | ८ बाला ( इइइउ ) |
| ९ आर्द्रा ( उइइउ ) | १० भद्रा ( उउइइ ) |
| ११ प्रेमा ( उइइउ ) | १२ रामा ( इइउउ ) |
| १३ ऋद्धि ( उइउउ ) | १४ बुद्धि ( इउउउ ) |

तत्र उपजातिभेदेषु प्रथमभेदोदाहरणं यथा रघुवंशे—

१की० {
उ. ततः सुनन्दावचनाऽवसाने
इ. लज्जां तनूकृत्य नरेन्द्रकन्या ॥
इ. दृष्ट्या प्रसादाऽमलया कुमारं
इ. प्रत्यग्रहीत्संवरणस्रजेव ॥

द्वितीयभेदोदाहरणं यथा सुभाषितावलौ कस्याऽपि—

२वा० {
इ. उत्साहसम्पन्नमदीर्घसूत्रं
उ. क्रियाविधिज्ञं व्यसनेष्वसक्तम् ॥
इ. शूरं कृतज्ञं दृढसौहृदं च
इ. लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥
}

तृतीयोदाहरणं यथा मङ्खकस्य—

३मा० {
उ. विना न साहित्यविदाऽपरत्र
उ. गुणः कथंचित्प्रथते कवीनाम् ॥
इ. आलम्बते तत्क्षणमम्भसीव
इ. विस्तारमन्यत्र न तैलबिन्दुः ॥
}

चतुर्थोदाहरणं यथा कुमारसम्भवे—

४शा० {
इ. पुष्पं प्रवालोपहितं यदि स्या-
इ. न्मुक्ताफलं वा स्फुटविद्रुमस्थम् ॥
उ. ततोऽनुकुर्याद्विशदस्य तस्या-
इ. स्ताम्रौष्ठपर्यस्तरुचेः स्मितस्य ॥
}

पञ्चमोदाहरणं यथा श्रीमदुत्पलराजस्य—

५हंसी {
उ. हुताञ्जनश्यामरुचस्तवैते
इ. स्थूलाः किमित्यश्रुकणाः पतन्ति ॥
उ. भृङ्गा इव व्यायतपङ्क्तयो ये
इ. तनीयसीं रोमलतां श्रयन्ति ॥
}

षष्ठभेदोदाहरणं यथा ध्वन्यालोके—

६मा० {
उ. प्रतीयमानं पुनरन्यदेव
इ. वस्त्वस्ति वाणीषु महाकवीनाम् ॥
इ. यत्तत्प्रसिद्धाऽवयवाऽतिरिक्तं
उ. विभाति लावण्यमिवाङ्गनासु ॥
}

सप्तमोदाहरणं यथा रघुवंशे—

७जा० {
उ. कुलेन कान्त्या वयसा नवेन
उ. गुणैश्च तैस्तैर्विनयप्रधानैः ॥
उ. त्वमात्मनस्तुल्यममुं वृणीष्व
इ. रत्नं समागच्छतु काञ्चनेन ॥
}

अष्टमोदाहरणं यथा सुभाषितावलौ कस्याऽपि—

८ बा० { इ. वन्द्यः स पुंसां त्रिदशाऽभिनन्द्यः
इ. कारुण्यपुण्योपचयक्रियाभिः ॥
इ. संसारसारत्वमुपैति यस्य
उ. परोपकाराऽऽभरणं शरीरम् ॥ }

नवमोदाहरणं यथा सुभाषितावलौ कस्यापि—

९ आ० { उ. गुणा गुणज्ञेषु गुणीभवन्ति
इ. ते निर्गुणं प्राप्य भवन्ति दोषाः ॥
इ. सुस्वादुतोयप्रभवा हि नद्यः
उ. समुद्रमासाद्य भवन्त्यपेयाः ॥ }

दशमोदाहरणं यथा कुमारसम्भवे—

१० भ. { इ. अस्त्युत्तरस्यां दिशि देवताऽऽत्मा
उ. हिमालयो नाम नगाऽधिराजः ॥
इ. पूर्वापरौ तोयनिधी वगाह्य
उ. स्थितः पृथिव्या इव मानदण्डः ॥ }

एकादशोदाहरणं यथा

११ प्रे. { उ. वितीर्णशिक्षा इव हृत्पदस्थ-
उ. सरस्वतीवाहनराजहंसैः ॥
इ. ये क्षीरनीरप्रविभागदक्षा
उ. विवेकिनस्ते कवयो जयन्ति ॥ }

द्वादशोदाहरणं यथा जल्हणस्य—

१२ रा. { इ. व्यालाश्च राहुश्च सुधाप्रसादा-
इ. ज्जिह्वाशिरोनिग्रहमुग्रमापुः ॥
उ. इतीव भीताः पिशुना भवन्ति
उ. पराङ्मुखाः काव्यरसामृतेषु ॥ }

त्रयोदशोदाहरणं यथा जयवर्धनस्य—

१३ ऋ. { उ. हृतोऽङ्गरागस्तिलकं विमृष्टं
इ. लब्धान्तरैरेभिरितीव मत्वा ॥
उ. सुसंहतेनेति सदा जलाना-
उ. मदायि मध्यं न कुचद्वयेन ॥ }

चतुर्दशोदाहरणं यथा अमृतवर्धनस्य—

अव्यवहितोक्तेन्द्रवज्रोपेन्द्रवज्रालक्षणवन्तौ पादौ यत्सम्बन्धिनौ ता उपजातयो नाम । अत्र पूर्वोक्तलक्षणेन पादद्वयेन यथायोगमेकद्विवारावृत्त्या निष्पत्तिर्विवक्षिता, न तु द्वाभ्यामेव वृत्तपूर्तिः । पादद्वयमात्रघटितस्य वृत्तस्याभावात् । द्विवचनं लक्षणद्वययोगेन लक्षणया नेयम् । ताश्चतुरक्षरप्रस्तारवत्प्रस्तारे सत्याद्यन्तभेदयोः केवलेन्द्रवज्रोपेन्द्रवज्रात्यागे चतुर्दश भवन्ति । यथा—उइइइ १ इउइइ २ उउइइ ३ इइउइ ४ उइउइ ५ इउउइ ६ उउउइ ७ इइइउ ८ उइइउ ९ इउइउ १० उउइउ ११ इइउउ १२ उइउउ १३ इउउउ १४ इति । तथा च वृद्धाः—

एकत्र पादे चरणद्वये वा पादत्रये वान्यतरः स्थितश्चेत् ।
तयोरिहान्यत्र तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः ॥ इति ।

तत्राद्यभेदोदाहरणम्—

दैत्याधिपप्राणमुषां नखाना-
मुपेयुषां भूषणतां क्षतेन ।
प्रकाशकार्कश्यगुणौ दधानाः
स्तनौ तरुण्यः परिवव्रुरेनम् ॥ (शि०३-१४) (१)

---

१४वृ.
इ. दीपाः स्थितं वस्तु विभावयन्ति
उ. कुलप्रदीपास्तु भवन्ति केचित् ॥
उ. चिरव्यतीतानपि पूर्वजान्ये
उ. प्रकाशयन्ति स्वगुणप्रकर्षात् ॥

एते चतुर्दशोपजातिभेदा इन्द्रवज्रोपेन्द्रवज्रासम्भवाः प्रदर्शिताः । उपरि जगद्गुरुनारायणभट्टपादैरुपजातिभेदानामाद्यमुदाहरणं यत्प्रदर्शितं तत्र एकैकलघुह्रासक्रमः । मत्प्रदर्शितेषूदाहरणेषु च एकैकगुरुह्रासक्रमः । अयमेव क्रमो बहुत्र ग्रन्थेषु समादृतस्तत एव मयाऽपि तेनैव क्रमेणोपजातिभेदा दर्शिताः । किंच मूलकृतः "अनन्तरोदीरित" इत्युदाहरणप्रदर्शनेन "पादे सर्वगुरावाद्याल्लघुं न्यस्य" ( वृ. र. ६-२) इति प्रस्तारपथप्रदर्शनेन च मत्प्रदर्शितः क्रम एव सामञ्जस्यमावहति । अत्र विषये भट्टपादा अप्यनुकूला एव । अत एव "पादे सर्वगुरावाद्यात्" ( वृ. र.६-२) इत्यस्य व्याख्यानाऽवसरे यदुक्तं "अत्र मामकः सङ्ग्रहश्लोकः 'पादं सर्वगुरुं लिखेन्मुखगुरोश्चाधो लघं पूर्ववत्" इति तत् सङ्गच्छते । "दैत्याऽधिपप्राणमुषां" इत्यस्योपजातिभेदेषु आद्यभेदोदाहरणत्वेन प्रदर्शनं तु जगद्गुरूणां स्वातन्त्र्यसूचकमिति मन्तव्यम् ।

(१) 'दैत्याऽधिपप्राणमुषां' इत्यत्र "प्राणच्छिदां दैत्यपतेः" इति पाठो

मूलश्लोकस्तु पृष्ठभेदोदाहरणम् । एवमन्यभेदेष्वप्युदाहरणानि काव्येषु च विवेचनीयानि ॥ ३० ॥

इत्थं किलान्यास्वपि मिश्रितासु ॥

स्मरन्ति जातिष्विदमेव नाम ॥ ३१ ॥(१)

---

मल्लिनाथपण्डितसम्मतः । निर्दोषः श्रुतिमधुरश्च पूर्वपाठ एवेति काव्यमर्मवेदिनः ।

(१) इत्थमित्यनेन जगत्यादिष्वपि सम्मेलककौशल्येन बहुध उपजातयः सम्पद्यन्ते इति सूचितम् । तत्र यथेन्द्रवज्रोपेन्द्रवज्रयोस्त्रिष्टुभि उपजातयो जायन्ते तथैव त्रिष्टुभि स्वागतारथोद्धतयोरपि प्रस्तारपथेन चतुर्दशोपजातयो भवन्ति । ते भेदाः प्रस्तारतो यथा—

| | |
|---|---|
| १ र. स्वा. स्वा. स्वा. | २ स्वा. र. स्वा. स्वा. |
| ३ र. र. स्वा. स्वा. | ४ स्वा. स्वा. र. स्वा. |
| ५ र. स्वा. र. स्वा. | ६ र. स्वा. स्वा. र. |
| ७ र. र. र. स्वा. | ८ स्वा. स्वा. स्वा. र. |
| ९ र. स्वा. स्वा. र. | १० स्वा. र. स्वा. र. |
| ११ र. र. स्वा. र. | १२ स्वा. स्वा. र. र. |
| १३ र. स्वा. र. र. | १४ स्वा. र. र. र. |

अत्र स्वागतारथोद्धतयोरुपजातिभेदेषु पञ्चमभेदोदाहरणं भट्टोजीदीक्षितगुरूणां प्रक्रियाप्रकाशादिनानानिबन्धविधायिनां महाकवीनां श्रीशेषकृष्णपण्डितानां पारिजातहरणचम्पूकाव्ये दृश्यते । तथा हि--

५ {
र. ब्रह्मनिष्ठमकनिष्ठचेष्टितं
स्वा. विष्टपत्रितयशिष्टवरिष्ठम् ॥
र. ब्रह्मसनुमथ विश्रुतश्रवा
स्वा. विश्रुते समुपविष्टमयष्ट ॥ (पा.१-५१) इति ।
}

अन्यभेदोदाहरणानि ग्रन्थेषु मृग्याणि ।

अत्र केचित्-इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनेन इन्द्रवंशावंशस्थयोर्वा मेलनेन यथोपजातयः सम्पद्यन्ते तथा इन्द्रवज्रावंशस्थयोरिवान्याम्यविषमाक्षरजातिद्वयमेलनेनाप्युपजातयो भवन्ति इति वदन्ति, त एवं प्रष्टव्याः भवतां मते त्रिष्टुप्त्वादिकं जातिराहोस्विदिन्द्रवज्रात्वादिकं? त्रिष्टुप्त्वादिकं चेत्, इन्द्रवज्रोपेन्द्रवज्रयोः सामरस्येन सम्प्रसूतासूपजातिषु किं त्रिष्टुप्त्वमुत जगतीत्वम्? उभयमपि न सम्भवति । उभाभ्यां साङ्कर्यात्, सङ्करस्य च जातिबाधकत्वात् । यदीन्द्रवज्रात्वादिकस्य जातित्वं स्वीक्रियते तर्हि

अन्यास्वपि जगत्यादिजातिष्वित्थं सामान्यसङ्ख्याऽक्षरत्वसमानयतिकत्वादिप्रकारेण मिश्रितास्विदमेवोपजातिनाम वृद्धाः स्मरन्ति । अन्याभ्यरेभ्यो ज्ञात्वा वदन्तीत्यर्थः । इत्थमित्यनेन विषमवर्णसङ्ख्यानां विषमयतिकानां च जातीनां त्र्यादीनां च मिश्रणे उपजातिर्नाम नास्तीति सूचितम् । स्मरन्तीत्यनेन च कविप्रयोगे दर्शनानुरोधः सूचितः । तत्रेन्द्रवंशावंशस्थाभ्यामुदाहरणम्—

इत्थं रथाश्वेभनिषादिनां प्रगे
गणो नृपाणामथ तोरणाद्बहिः ॥
प्रस्थानकालक्षमवेषकल्पना-
कृतक्षणक्षेपमुदैक्षताच्युतम् ॥ (शि०१२-१)

एवमन्यत्राऽपि प्रयोगवशादुदाहरणं ज्ञेयम् । सर्वासामुपजातीनामुक्तया दिशा चतुर्दश भेदा भवन्ति । विषमार्धसमरूपत्वेऽप्युपजातीनां समवृत्तेषूपन्यासः समवृत्तघटिततया प्रासङ्गिकः ॥ ३१ ॥(१)

**नजजलगैर्गदिता सुमुखी ॥ ३२ ॥(२)**

---

पिङ्गलादिमुनिभिरन्यैरपि सकलैश्छन्दोविद्भिर्विरोधः । यतः सर्वैरपि एकैकाक्षरवर्धनक्रमेण जायमानाः षड्विंशतिसङ्ख्याका एव जातय उररीकृताः । किं च विषमाक्षरवृत्तद्वयमेलनेन समुत्पन्नेषु वृत्तान्तरेषु उपजातित्वस्वीकारे पिङ्गलाद्याचार्याणां वृत्तानामर्धसमविषमत्वादिकथनं वृथैव स्यात् । अतो भवदुक्तमसङ्गतमेवेत्यलं ज्ञानलवदुर्विदग्धभवद्भिः साकं विवादेन । अन्यत्वं तत्त्वं तु मया प्रणेष्यमाणग्रन्थान्तरे विवेचयिष्यत इति मयि विश्वस्य साम्प्रतं सन्तोष्टव्यम् । इन्द्रवंशावंशस्थसम्मेलनसम्भूतानामुपजातीनामुदाहरणान्यनुपदमेव प्रदर्शयिष्यन्ते ।

(१) इन्द्रवंशावंशस्थसम्मेलनसम्भूतानामुपजातीनामुदाहरणानि वंशस्थोदाहरणप्रदर्शनाऽवसरे प्रदर्शयिष्यन्ते ।

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. ज. ज. ल. ग.

तरणि— सुतात— टकुञ्ज—गृ-हे
।।।, ।ऽ।, ।ऽ।, ।, ऽ.
वदनविधुस्मितदीधितिभिः ॥
तिमिरमुदस्य मुखं सुमुखी
हरिमवलोक्य चुचुम्ब चिरम् ॥
( त्रिष्टुब्भेदेषु ८८० तमो भेदोऽयम् ।)

न-ज-जैर्गणैर्लघुगुरुभ्यां च सुमुखी नाम। पञ्चभिः षड्भिश्च यतिः॥३२॥

दोधकवृत्तमिदं भभभाद्गौ ॥ ३३ ॥(१)

भगणत्रयाद्गुरुद्वयं चेद्दोधकं नाम। भभभादिति समाहारद्वन्द्वैकवद्भावः। 'दोधकनामनि भत्रयतो गौ' इति वा पाठः। पादान्ते यतिः ॥ ३३ ॥

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः ॥ ३४ ॥(२)

म-त-तै-र्गुरुभ्यां च शालिनी। अब्धिभिश्चतुर्भिर्लोकैः सप्तभिश्च यतिरिति शेषः। एवमुत्तरत्रापि ॥ ३४ ॥

वातोर्मीयं कथिता म्भौ तगौ गः ॥ ३५ ॥(३)

म-भ-त-गु-गुरुभिर्वातोर्मी। इयमिति शालिन्युक्तयतिमतीत्यर्थः ॥ ३५ ॥

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

भ. भ. भ. गु. गु.

दोधक—मर्थवि—रोधक— मु—ग्रं

ऽ । ।, ऽ । ।, ऽ । ।, ऽ, ऽ.

स्त्रीचपलं युधि कातरचित्तम् ॥
स्वार्थपरं मतिहीनममात्यं
मुञ्चति यो नृपतिः स सुखी स्यात् ॥

( त्रिष्टुब्भेदेषु २३९ तमो भेदोयम्। )

(२) उदाहरणान्तरं यथा सुवृत्ततिलके—

म. त. त. गु. गु.

मत्ता गो—ष्ठीगर्भ—मुढप्र— ला पा

ऽ ऽ ऽ, ऽ ऽ ।, ऽ ऽ ।, ऽ, ऽ.

प्रौढा गाढाऽऽलिङ्गिता यौवनेन ॥
मध्वाताम्रस्वेदमीलत्कपोला
लोला लीलाशालिनी कस्य नेष्टा ॥

( त्रिष्टुब्भेदेषु २८९ तमो भेदोयम्। )

(३) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. भ. त. गु. गु.

यात्युत्से—कं सप—त्व प्राप्य कि—चित्

ऽ ऽ ऽ, ऽ । ।, ऽ ऽ ।, ऽ, ऽ.

स्याद्वा यस्याश्चपला चित्तवृत्तिः ॥
या दीर्घाक्षी स्फुटशब्दाट्टहासा

**बाणरसैः स्याद्भतनगगैः श्रीः ॥ ३६ ॥(१)**

भ-त-न-ग-गुरुभिः पञ्चभिः षड्भिश्च यतो श्रीर्नाम ॥ ३६ ॥

**म्भौ न्लौ गः स्याद् भ्रमरविलसितम् ॥ ३७ ॥(२)**

म-भ-न-लघुगुरुभिर्भ्रमरविलसितम् । चतुर्भिः सप्तभिश्च यतिः ॥ ३७ ॥

**रान्नराविह रथोद्धता लगौ ॥ ३८ ॥(३)**

र-न-र-ल-गैरिह च्छन्दःशास्त्रे रथोद्धता । पादे यतिः ॥ ३८ ॥

**स्वागतेति रनभाद्गुरुयुग्मम् ॥ ३९ ॥(४)**

---

त्याज्या सा स्त्री द्रुतवातोर्मिमाला ॥

( त्रिष्टुब्भेदेषु ३०५ तमो भेदोऽयम् । )

(१) अस्यैवच्छन्दसो नामान्तरं "मौक्तिकमाला" इत्यत एतदुदाहरणं तत्रैव प्रदर्शयिष्यते ।

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. भ. न. ल. गु.

मुग्ध ! मा नं परि— हर न चि— रात्

ऽ ऽ ऽ, ऽ । ।, । । ।, ।, ऽ.

तारुण्यं ते सफलयतु हरिः ॥

कुञ्जा वल्ली भ्रमरविलसिताऽ-

भावे शोभां कलयति किमु ताम् ॥

( त्रिष्टुब्भेदेषु १००९ तमो भेदोऽयम् । )

(३) उदाहरणान्तरं यथा नाट्यशास्त्रे—

र. न. र. ल.गु.

किं त्वया सुभट ! दूरव- जि-तं

ऽ । ऽ, । । ।, ऽ।ऽ, ।, ऽ.

नात्मनो न सुहृदां प्रियं कृतम् ॥

यत्पलायनपरायणस्य ते

याति धूलिरधुना रथोद्धता ॥

( त्रिष्टुब्भेदेषु ६९९ तमो भेदोऽयम् । )

(४) उदाहरणान्तरं यथा सुवृत्ततिलके—

र. न. भ. गु. गु.

रत्नभ— क्तविम—लैगुण- तु-ङ्ग

ऽ।ऽ, । । ।, ऽ । ।, ऽ, ऽ.

र-न-भ-गणेभ्यः परं गुरुयुग्मं यदि तदेत्येवं स्वागता। र-न-भादित्येकवद्भावः। पूर्ववद्यतिः ॥ ३९ ॥

**ननसगगुरुरचिता वृन्ता ॥ ४० ॥(१)**

न-न-स-ग-गुरुकृता वृन्ता नाम। चतुर्भिः सप्तभिश्च यतिः ॥ ४० ॥

**ननरलगुरुभिश्च भद्रिका ॥ ४१ ॥(२)**

न-न-र-ल-गैर्भद्रिका। पादे यतिः ॥ ४१ ॥

**श्येनिका रजौ रलौ गुरुर्यदा ॥ ४२ ॥(३)**

---

रथिनामभिमतार्ऽपणसक्तैः ॥
स्वागताऽभिमुखनम्रशिरस्कै-
र्जीव्यते जगति साधुभिरेव ॥
( त्रिष्टुब्भेदेषु ४४३ तमो भेदोऽयम्। )

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. स. गु. गु.
द्विजगु—रुपरि—भवका री यो
। ।।, ।ऽ।, ।।ऽ, ऽ, ऽ.
नरपतिरतिधनलुब्धात्मा ॥
ध्रुवमिह निपतति पापोऽसौ
फलमिव पवनहतं वृन्तात् ॥
( त्रिष्टुब्भेदेषु २५६ तमो भेदोऽयम्। )

(२) उदाहरणान्तरं यथा मम—

न. न. र. ल. गु.
सकल— दुरित—नाशका—रि-णी
।।।, ।।।, ऽ। ऽ, ।, ऽ.
मदभिलषितकामपूरणी ॥
भगवति तव मूर्तिरेकिका
मम मनसि सदाऽस्तु भद्रिका
( त्रिष्टुब्भेदेषु ५०४ तमो भेदोऽयम्। )

(३) उदाहरणान्तरं यथा छन्दोवृत्तौ—

र. ज. र. गु. गु.
क्रूरद्र— ष्टिराय—ताम्रना—सि-का
ऽ।ऽ, ।ऽ।, ऽ।ऽ, ।, ऽ.

स्पष्टम् । पादे यतिः ॥ ४२ ॥

**मौक्तिकमाला यदि भतनाद्गौ ॥ ४३ ॥ (१)**

भ-त-नाद्दित्येकवद्भावः । पञ्चसु षट्सु च यतिः ॥ ४३ ॥

**उपस्थितमिदं ज्सौ ताद्गकारौ ॥ ४४ ॥ (२)**

ज-स-त-ग-गैरुपस्थितम् । पादे यतिः ॥

तथा—

उपचित्रमिदं सससा लगौ ।
कुपुरुषजनिता ननौर्गौगः ॥
अनवसिता न्यौ भ्गौ गु षडन्ते ॥

अत्र वृत्तानि २०४८ ॥ ४४ ॥

---

चञ्चला कठोरतीक्ष्णनादिनी ॥
युद्धकाङ्क्षिणी सदाऽऽमिषप्रिया
श्येनिकेव सा विगर्हिताऽङ्गना ॥
( त्रिष्टुब्भेदेषु ६८३ तमो भेदोऽयम् । )

(१) उदाहरणान्तरं यथा मम—

भ. त. न. गु. गु.
शोभन- वर्णा सु—विशद जा-तिः
ऽ।।, ऽऽ।, ।।।, ऽ, ऽ.
सुक्रमराजद्गुरुलघुयुक्ता ॥
सद्यतिरम्या बुधहृदि छन्दो-
मौक्तिकमाला विलसति हृद्या ॥
( त्रिष्टुब्भेदेषु ४८७ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा मम—

ज. स. त. गु. गु.
जगज्ज—ननि वि-द्धचित्त-सं—स्थे
।ऽ।, ।।ऽ, ऽऽ।, ऽ, ऽ.
समग्रजडतानाशैकदक्षे ॥
सनाथय तव द्वारस्य मध्ये
उपस्थितमपाङ्गालोकनेन ॥
( त्रिष्टुब्भेदेषु २८६ तमोऽयं भेदः । )

अथ जगती (१२)—

चन्द्रवर्त्म निगदन्ति रनभसैः ॥ ४५ ॥(१)

र-न-भ-सैर्गणैश्चन्द्रवर्त्म । चतुर्भिरष्टभिश्च यतिः ॥ ४५ ॥

जतौ तु वंशस्थमुदीरितं जरौ ॥ ४६ ॥(२)

ज-त--ज-रैर्वंशस्थम् । पादे यतिः ॥ ४६ ॥

स्यादिन्द्रवंशा ततजै रसंयुतैः ॥ ४७ ॥(३)

---

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र. न. भ. स.

चन्द्रव--र्त्म पिहि-तं घन--तिमिरैः
ऽ।ऽ, ।।।, ऽ।। ।।ऽ.
राजवर्त्म रहितं जनगमनैः ॥
दृष्टवर्त्म तदलङ्कुरु सरसे !
कुञ्जवर्त्मनि हरिस्तव कुतुकी ॥
( जगतीभेदेषु १२७६ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा सुवृत्ततिलके—

ज. त. ज. र.

जनस्य--तीव्रात--पजार्ति-वारणा
।ऽ।, ऽऽ।, ।ऽ।, ऽ।ऽ.
जयन्ति सन्तः सततं समुन्नताः ॥
सितातपत्रप्रतिमा विभान्ति ये
विशालवंशस्थतया गुणोचिताः ॥
( जगतीभेदेषु १३८२तमो भेदोऽयम् । )

(३) उदाहरणान्तरं यथा

त. त. ज. र.

कुर्वीत-यो देव—गुरुद्वि--जन्मना-
ऽऽ।, ऽऽ।, ।ऽ।, ऽ।ऽ.
मुर्वीपतिः पालनमर्थलिप्सया ॥
तस्येन्द्रवंशेऽपि गृहीतजन्मनः
सञ्जायते श्रीः प्रतिकूलवर्तिनी ॥
( जगतीभेदेषु १३८१ तमोऽयं भेदः । )

वंशस्थेन्द्रवंशासम्भूतानामुपजातीनां भेदा यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | वैरासिकी | ( वं. इ. इ. इ. ) | ८ | वासन्तिका | ( इ. इ. इ. वं. ) |
| २ | रताख्यानकी | ( इ. वं. इ. इ. ) | ९ | मन्दहासा | ( वं. इ. इ. वं. ) |
| ३ | इन्दुमा | ( वं. वं. इ. इ. ) | १० | शिशिरा | ( इ. वं. इ. वं. ) |
| ४ | पुष्टिदा | ( इ. इ. वं. इ. ) | ११ | वैधात्री | ( वं. वं. इ. वं. ) |
| ५ | उपमेया ( रामणीयकम ) | ( वं. इ. वं. इ. ) | १२ | शङ्खचूडा | ( इ. इ. वं. वं. ) |
| ६ | सौरभेयी | ( इ. वं. वं इ. ) | १३ | रमणा | ( वं. इ. वं. . ) |
| ७ | शीलातुरा | ( वं. वं. वं. इ. ) | १४ | कुमारी | ( इ. वं. वं. वं. ) |

तत्र दशममुदाहरणं माघे दृश्यते। तच्च भट्टपादैः "इत्थं रथाश्वेभ" (शि. १२-१) इति "इत्थंकिलान्यास्वपि" (वृं. र. ३-३१) इत्यस्य व्याख्यानाऽवसरे प्रदर्शितम्। अन्यान्युदाहरणान्यपि क्वचिद् दृश्यन्ते तानि यथासम्भवमत्र प्रदर्श्यन्ते—

तत्र तृतीयभेदोदाहरणं यथा कुमारसम्भवे पञ्चदशसर्गे—

३
वं. चमूप्रभुं मन्मथमर्दनात्मजं
वं. विजित्वरीभिर्विजयश्रिया श्रितम् ॥
इ. श्रुत्वा सुराणां पृतनाभिरागतं
इ. चित्ते चिरं चुक्षुभिरे महासुराः ॥

षष्ठमुदाहरणं यथा तत्रैव—

६
इ. सङ्गेन वो गर्भतपस्विनः शिशु-
वं. र्वराक एषोऽन्तमवाप्स्यति ध्रुवम् ॥
वं. अतस्करस्तस्करसङ्गतो यथा
इ. तद्वो निहन्मि प्रथमं ततोऽप्यमुम् ॥

सप्तममुदाहरणं यथा तत्रैव—

७
वं. ततः क्रुधा विस्फुरिताऽधराधरः
वं. स तारको दर्पितदोर्बलोद्धतान् ॥
वं. युधे त्रिलोकीजयकेलिलालसः
इ. सेनापतीन्सन्नहनार्थमादिशत् ॥

नवममुदाहरणं यथा तत्रैव—

९
वं. स जामदग्न्यः क्षयकालरात्रिकृत्
इ. स क्षत्रियाणां समराय वल्गति ॥
इ. येन त्रिलोकीसुभटेन तेन ते
वं. कुतोऽवकाशः सह विग्रहग्रहे ॥

त-त-जै रसंयुतै रगणसहितैरिन्द्रवंशा । पादे यतिः ॥ ४७ ॥

इह तोटकमम्बुधिसैः प्रथितम् ॥ ४८ ॥ (१)

---

दशममुदाहरणं यथा माघे—

१० इ. साऽवज्ञमुन्मील्य विलोचने सकृत्
वं. क्षणं मृगेन्द्रेण सुषुप्सुना पुनः ॥
. सैन्यान्न यातः समयाऽपि विव्यथे
वं. कथं सुराजम्भवमन्यथाऽथ वा ॥

एकादशमुदाहरणं यथा सौन्दराऽऽनन्दे—

११ वं. प्रयान्ति म त्रः प्रशमं भुजङ्गमा
वं. न मन्त्रसाध्यास्तु भवन्ति धातवः ॥
इ. केचिच्च कंचिच्च दशन्ति पन्नगाः
वं. सदा च सर्वं च तुदन्ति धातवः ॥

द्वादशमुदाहरणं यथा कुमारसम्भवे—

१२ इ. श्रुत्वेति वाचं वियतो गरीयसीं
इ. क्रोधादहङ्कारपरो महासुरः ॥
वं. प्रकल्पिताशेषजगत्त्रयोऽपि स-
वं. न्नकम्पतोच्चैर्दिवमभ्यधाच्च सः ॥

त्रयोदशमुदाहरणं यथा तत्रैव—

१३ वं. बली बलारातिबलाऽतिशातनं
इ. दिग्दन्तिनादद्रघनाशनस्वनम् ॥
वं. महीधराम्भोधिनवारितक्रमं
वं. ययौ रथं घोरमथाऽधिरुह्य सः ॥

चतुर्दशमुदाहरणं यथा तत्रैव—

१४ इ. दासीकृताऽशेषजगत्त्रयं न मां
वं जिगाय युद्धे कतिशः शचीपतिः ॥
वं. गिरीशपुत्रस्य बलेन साम्प्रतं
वं. ध्रुवं विजेतेति स काकुतोऽहसत् ॥

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. स. स. स.

त्यज तो—टकम—र्थनियो—गकरं

। । S, । । S, । । S, । । S.

अम्बुधिभिश्चतुर्भिः सगणैः। पादे यतिः॥ ४८॥

द्रुतविलम्बितमाह नभौ भरौ॥ ४९॥(१)

न-भ-भ-रैर्द्रुतविलम्बितमाहाचार्यः। पूर्ववद्यतिः॥ ४९॥

मुनिशरविरतिर्नौ म्यौ पुटोऽयम्॥ ५०॥(२)

मुनिभिः सप्तभिः शरैः पञ्चभिश्च विरतिर्यत्र॥ ५०॥

प्रमुदितवदना भवेन्नौ च रौ। ५१॥(३)

स्पष्टम्॥ ५१॥

---

प्रमदाऽधिकृतं व्यसनोपहतम्॥
उपधाभिरशुद्धमतिं सचिवं
नरनायक! भीरुकमायुधिकम्॥
(जगतीभेदेषु १७५६ तमोऽयं भेदः।)

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. भ. भ. र.

तरणि—जापुलि—ने नव—बल्लवी-
। । ।, ऽ । ।, ऽ । ।, ऽ । ऽ.
परिषदा सह केलिकुतूहलात्॥
द्रुतविलम्बितचारुविहारिणं
हरिमहं हृदयेन सदा वहे॥
(जगतीभेदेषु १४६४ तमो भेदोऽयम्।)

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. म. य.

न विच—लति क-थं चिन्न्या—यमार्गा-
। । ।, । । ।, ऽ ऽ ऽ, । ऽ ऽ.
द्वसुनि शिथिलमुष्टिः पार्थिवो यः॥
अमृतपुट इवाऽसौ पुण्यकर्मा
भवति जगति सेव्यः सर्वलोकैः॥
(जगतीभेदेषु ५७६ तमो भेदोऽयम्।)

(३) उदाहरणान्तरं यथा माघे—

न. न. र. र.

अतिसु—रभिर—भाजि पु—ष्पश्रिया-
। । ।, । । ।, ऽ । ऽ, ऽ । ऽ.

नयसहितौ न्यौ कुसुमविचित्रा ॥ ५२ ॥(१)

स्पष्टम् । द्वयोरपि पादे यतिः ॥ ५२ ॥

रसैर्जसजसा जलोद्धतगतिः ॥ ५३ ॥(२)

रसाश्च रसाश्चेत्येकशेषे षड्भिः षड्भिश्च यतिः ॥ ५३ ॥

चतुर्जगणं वद मौक्तिकदाम ॥ ५४ ॥(३)

---

मतनुतरतयेवसन्तानकः ॥
तरुणपरभृतः स्वनं रागिणा-
मतनुत रतयेवसन्तानकः ॥ (शि. ६-६७)
( जगतीभेदेषु १२१६ तमोऽयं भेदः । )

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. य. न. य.

विगाल—तहारा—सुकुसु--ममाला
। । ।, । ऽ ऽ, । । ।, । ऽ ऽ.
सचरणलाक्षा वलयसुलक्ष्मा ॥
विरचितवेशं सुरतविशेषं
कथयति शय्या कुसुमविचित्रा ॥
( जगतीभेदेषु ६७६ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

ज. स. ज. स.

यदीय—हलतो—विलोक्य-विपदं
। ऽ ।, । । ऽ, । ऽ ।, । । ऽ,
कलिन्दतनया जलोद्धतगतिः ॥
विलासविपिनं विवेश सहसा
करोतु कुशलं हली स जगताम् ॥
(जगतीभेदेषु १८८६ तमोऽयं भेदः । )

(३) उदाहरणान्तरं यथा वाणीभूषणे—

ज. ज. ज. ज.

मया त—व किंचि—दकारि कदाऽपि
। ऽ ।, । ऽ ।, । ऽ ।, । ऽ ।.
विलासिनि ! वाम्यमनुस्मरताऽपि ॥
तथाऽपि मनस्तव नाम्बसनाय

भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः ॥ ५५ ॥(१)
रैश्चतुर्भिर्युता स्रग्विणी सम्मता ॥ ५६ ॥(२)
भुवि भवेन्नभजरैः प्रियंवदा ॥ ५७ ॥(३)

त्रीणि स्पष्टानि । पादे यतिः ॥ ५७ ॥

---

व्रजामि कुतो भवतीमपहाय ॥
( जगतीभेदेषु २९२६ तमोऽयं भेदः । )

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

य. य. य. य.

सदारा—त्मजज्ञा—तिभृत्यो विहाय
।ऽऽ, ।ऽऽ, ।ऽऽ, ।ऽऽ.
स्वमेतं ह्रदं जीवनं लिप्समानः ॥
मया क्लेशितः कालियेत्थं कुरु त्वं
भुजङ्ग ! प्रयातं द्रुतं सागराय ॥
( जगतीभेदेषु ९५८ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र. र. र. र.

इन्द्रनी—लोपले—नेव या निर्मिता
ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ.
शातकुम्भद्रवाऽलङ्कृता शोभते ॥
नव्यमेघच्छविः पीतवासा हरे-
र्मूर्तिरास्तां जयायोरसि स्रग्विणी ॥
( जगतीभेदेषु ११७१ तमोऽयं भेदः । )

(३) उदाहरणान्तरं यथा मम—

न. भ. ज. र.

ह्सित—तामर—सनेत्र—सारसा
।।।, ऽ।।, ।ऽ।, ऽ।ऽ.
रजनिवल्लभमुखाऽलिकुन्तला ॥
स्मितवती पतिहितैकमानसा
सुकृतिनो हि दयिता प्रियम्वदा ॥
( जगतीभेदेषु १४०० तमोऽयं भेदः । )

त्यौ त्यौ मणिमाला च्छिन्ना गुहवक्त्रैः ॥ ५८ ॥(१)

त-य-त-यैर्मणिमाला । गुहस्य स्कन्दस्य वक्त्रैः षड्भिः षड्भिश्च च्छिन्ना यतिमतीत्यर्थः ॥ ५८ ॥

धीरैरभाणि ललिता तभौ जरौ ॥ ५९ ।(२)

प्रमिताक्षरा सजससैरुदिता ।। ६० ॥(३)

एते स्पष्टे । पादे यतिः ॥ ६० ॥

---

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

त. य. त. य.

प्रह्णाम—रमौलौ रत्नोप—लक्लृप्ते
ऽऽ।, ।ऽऽ, ऽऽ।, ।ऽऽ.
जातप्रतिबिम्बा शोणा मणिमाला ॥
गोविन्दपदाब्जे राजी नखराणा-
मास्तां मम चित्ते ध्वान्तं शमयन्ती ॥
( जगतीभेदेषु ७८१ तमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा मम—

त. भ. ज. र.

सास्ते पु—रत्रय—मतीत्य सुन्दरी
ऽ ऽ ।, ऽ।।, ।ऽ।, ऽ।ऽ.
गीता ललत्त्रिपुरसुन्दरी इति ॥
लोकानतीत्य ललते यतो हि सा
भक्तैरभाणि ललिताऽभिधानतः ॥
( जगतीभेदेषु १३६७ तमोऽयं भेदः । )

(३) उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. ज. स. स.

परिशु—द्धवाक्य—रचनाऽ—तिशयं
।।ऽ, ।ऽ ।, ।।ऽ, ।।ऽ.
परिषिञ्चती श्रवणयोरमृतम् ॥
प्रमिताऽक्षराऽपि विपुलार्थवती
कविभारती हरति मे हृदयम् ॥
( जगतीभेदेषु १७७२ तमोऽयं भेदः । )

ननभरसहिता महितोज्ज्वला ॥ ६१ ॥(१)

महिता पूजिता । श्रेष्ठेत्यर्थः । उज्ज्वलेति नाम । पादे यतिः ॥६१॥

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६२ ॥(२)

पञ्चभिरश्वैः सप्तभिश्च छिन्ना यतिमती वैश्वदेवी नाम ॥ ६२ ॥

अब्ध्यष्टाभिर्जलधरमाला म्भौ स्मौ ॥ ६३ ॥(३)

अब्धिभिश्चतुर्भिरष्टाभिश्च यतिः । मगण-भगणौ सगण-मगणौ च भवतः तज्जलधरमालानाम । चतुर्भिरष्टभिश्छिन्नेत्यनुषङ्गः । पैङ्गले

---

(१) उदाहरणान्तरं यथा मम—

न. न. भ. र.

अयिहृ—दयम—नाहत—सारसे
। । ।, । । ।, ऽ । ।, ऽ । ऽ.
तव पदमनुचिन्तयते हि यः ॥
भवति ननु तस्य यशोध्वजः
स्फुरति च धिषणा स्फटिकोज्ज्वला ॥
( जगतीभेदेषु १४७२ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. म. य. य.

अर्चाम—न्येषां त्वं विहाया—मराणां
ऽ ऽ ऽ, ऽ ऽ ऽ, । ऽ ऽ, । ऽ ऽ,
अद्वैतेनैकं विष्णुमभ्यर्च्य भक्त्या ॥
तत्राऽशेषात्मन्यर्चिते भाविनी ते
भ्रातः ! सम्पन्नाऽऽराधना वैश्वदेवी ॥
( जगतीभेदेषु ५७७ तमो भेदोऽयम् । )

(३) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. भ. स. म.

या भक्ता—नां कलि—दुरितो—त्तप्तानां
ऽ ऽ ऽ, ऽ । ।, । । ऽ, ऽ ऽ ऽ,
तापच्छेदे जलधरमाला नव्या ॥
भव्याकारा दिनकरपुत्रीकूले
केलीलोला हरितनुरव्यात् सा वः ॥
( जगतीभेदेषु २४१ तमो भेदोऽयम् । )

त्वियमेव कान्तोत्पीडा ॥ ६३ ॥

इह नवमालिका नजभयैः स्यात् ॥ ६४ ॥(१)

इह छन्दःशास्त्रेऽष्टाभिश्चतुर्भिश्च यतिरित्याहुर्वृद्धाः ॥ ६४ ॥

स्वरशरविरतिर्ननौ रौ प्रभा ॥ ६५ ॥(२)

स्वरैः षड्जादिभिः सप्तभिः शरैः पञ्चभिश्च यतिर्यत्र ॥ ६५ ॥

भवति नजावथ मालती जरौ ॥ ६६ ॥

पञ्चभिः सप्तभिश्च यतिः ॥ ६६ ॥

जभौ जरौ वदति पञ्चचामरम् ॥ ६७ ॥(३)

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ--

न. ज. भ. य.

धवल—यशांशु—केन प—रिवीता

।।।, ।ऽ।, ऽ। ।, ।ऽऽ,

सकलजनाऽनुरागघुसृणाक्ता ॥

दृढगुणबद्धकीर्तिकुसुमौघै-

स्तव नवमालिनीव नृपलक्ष्मीः ॥

( जगतीभेदेषु ९४४ तमोऽयं भेदः । ) पिङ्गलसूत्रमतेनेदमुदाहरणम् । एतच्छन्दोविषये वृत्तरत्नाकरपिङ्गलसूत्रयोर्नाम्नैव भेदः । अन्यत् सर्वं समानमेवेति तदेवोदाहरणं न्यासि मया ।

(२) एतदुदाहरणान्तरं प्रमुदितवदनोदाहरणमेव । एकस्यैव [illegible] सो नामद्वयं 'प्रमुदितवदना' 'प्रभा' इति च । नाऽत उदाहरणान्तरं न्यासि मया ।

(३) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. ज. ज. र.

इहक—लयाऽच्यु—त केलि—कानन

।।।, ।ऽ ।, ।ऽ।, ऽ।ऽ,

मधुरससौरभसारलोलुपः ॥

कुसुमकृतस्मितचारुविभ्रमा-

मलिरपि चुम्बति मालतीं मुहुः ॥

( जगतीभेदेषु १३६२ तमो भेदोऽयम् । )

(३) इदं छन्दो न दृष्टं पुस्तकान्तरेऽतो नोदाहरणान्तरं न्यासि मया ।

अभिनवतामरसं नजजाद्यः ॥ ६८ ॥(१)

स्पष्टम् । इदमेवान्ये ललितपदमाहुः । पादे यतिः ॥

तथा—

नयुगरयुगलं च गौरी मता ॥
पञ्चमुनी भ्मौ सात्सयुता ललना ॥
ललितमभिहितं नौ म्रौ नामतः ॥
द्रुतपदं भवति नभनयाश्चेत् ॥

अत्र वृत्तसङ्ख्या ४०९६ ॥ ६८ ॥

अथाऽतिजगती(१३)—

तुरगरसयतिर्नौ ततौ गः क्षमा ॥ ६९ ॥(२)

न-न-त-त-गुरुभिः क्षमा । सप्तभिः षड्भिश्च तत्र यतिः । चन्द्रिकेत्यन्ये ॥ ६९ ॥

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् ॥ ७० ॥(३)

त्रिभिर्दशभिश्च यतिर्यत्र सा ॥ ७० ॥

---

(१) उदाहरणान्तरं यथा साहित्याचार्य'खिस्ते' इत्युपाख्यनारायणशास्त्रिणाम्—

न. ज. ज. य.

अभिन—वताम—रसं क—मलायाः
। । ।, । ऽ ।, । ऽ ।, । ऽ ऽ.
करयुगवासमितं मृदुलायाः ॥
अधिपतितल्पगतं स्मरतातं
नयति कामकलाकलनार्थम् ॥
( जगतीभेदेषु ८८० तमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा मम—

न. न. त. त. गु.

अनिश-मधिम--नश्चित्क-लाचिन्त-ने
। । ।, । । ।, ऽ ऽ ।, ऽ ऽ ।, ऽ.
स्वमपि परशिवं भावयन्मज्जति ॥
स रचयितुमलं भावनामात्रतो
जगदिदमखिलं तत्पुरः का समा ॥
( अतिजगतीभेदेषु २३६८ तमोऽयं भेदः । )

(३) उदाहरणान्तरं यथा छन्दोवृत्तौ—

चतुर्ग्रहैरतिरुचिरा जभस्जगाः ॥ ७१ ॥(१)

ज-भ-स-ज-गैश्चतुर्षु नवसु च यतावतिरुचिरा ॥ ७१ ॥

वेदै रन्ध्रैर्म्तौ यसगा मत्तमयूरम् ॥ ७२ ॥(२)

वेदाश्चत्वारो रन्ध्राणि नव ॥ ७२ ॥

( उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत् ) ॥ ७३ ॥(३)

---

म. न. ज. र. गु.

उत्तुङ्ग—स्तनक—लशद्व—योन्नता—ङ्गी

ऽऽऽ, ।।।, ।ऽ।, ऽ।ऽ, ऽ.

लोलाक्षी विपुलनितम्बशालिनी च ॥

बिम्बोष्ठी नरवरमुष्टिमेयमध्या

सा नारी भवति मनःप्रहर्षिणीति ॥

( अतिजगतीभेदेषु १४०१ तमोऽयं भेदः । )

(१) उदाहरणान्तरं यथा भट्टीकाव्ये—

ज. भ. स. ज. गु.

अभून्नृ—पो विबु—धसखः परन्त—पः

।ऽ।, ऽ।।, ।।ऽ, ।ऽ।, ऽ.

श्रुतान्वयो दशरथ इत्युदाहृतः ॥

गुणैर्वरं भुवनहितच्छलेन यं

सनातनः पितरमुपागमत् स्वयम् ॥(भ. १-१)

( अतिजगतीभेदेषु २८०६ तमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. त. य. स. गु.

व्यूढोर—स्कः सिंह—समांसो—नतम—ध्यः

ऽऽऽ, ऽऽ।, ।ऽऽ, ।।ऽ, ऽ.

पीनस्कन्धो मांसलहस्तायतबाहुः ॥

कम्बुग्रीवः स्निग्धशरीरस्तनुलोमा

भुङ्क्ते राज्यं मत्तमयूराऽऽकृतिनेत्रः ॥

( अतिजगतीभेदेषु १६३३ तमोऽयं भेदः । )

(३) कंसान्तर्गतो ग्रन्थः कपुस्तके नास्ति । अत एव नोदाहरणान्तरमस्य न्यासि मया ।

सजसा जगौ भवति मञ्जुभाषिणी ॥ ७४ ॥(१)

स्पष्टम् । पञ्चभिरष्टभिश्चात्र यतिः ॥ ७४ ॥

ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः ॥ ७५ ॥(२)

अश्वाः सप्त, ऋतवः षट् । इयं क्षमैव आचार्यो मतभेदेन संज्ञान्तरार्थं पुनरूचे ।

तथा—

यमौ रौ विख्याता चञ्चरीकावली गः ॥
जभौ स्जगावतिरुचिराम्बुधिग्रहैः ॥

भरतमतेनेयमेव पूर्वं रुचिरोक्ता ।

नसरयुगगैश्चन्द्रलेखर्तुलोकैः ॥

षड्भिः सप्तभिश्च यतिः ॥

ऋतुमुनियतिर्विद्युन्ननौ तौ गुरुः ॥

अत्र वृत्तसङ्ख्या ८१९२ ॥ ७५ ॥

---

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

स. ज. स. ज. गु.

अमृतो—मिशीत—लकरे—ण लाल—यन्
। । ऽ, । ऽ ।, । । ऽ, । ऽ ।, ऽ
तनुकान्तिरोचितविलोचनो हरे ॥
स्थितं ककानिधिरसीति वल्लवी-
मुदमच्युते व्यधित मञ्जुभाषिणी ॥
( अतिजगतीभेदेषु २७९६ तमोऽयं भेदः । )

(२) उदाहरणान्तरं यथा—

न. न. त. त. गु.

शरद—मृतरु—चश्चन्द्रि-काक्षालि-ते
। । ।, । । ।, ऽ ऽ ।, ऽ ऽ ।, ऽ
दिनकरतनयातीरदेशे हरिः ॥
विहरति रभसाद्बल्लवीभिः समं
त्रिदिवयुवतिभिः कोऽपि देवो यथा ॥
( अतिजगतीभेदेषु २३६८ तमोऽयं भेदः । )

१२

अथ शक्करी (१४)—

म्तौ न्सौ गावक्षग्रहविरतिरसम्बाधा ॥ ७६ ॥(१)

म-त-न-स-गणैर्गुरुभ्यां चासम्बाधा नाम। अक्षैर्बाह्येन्द्रियैः पञ्चभिः, ग्रहैर्नवभिश्च यतिर्यत्र सा तथा ॥ ७६ ॥

ननरसलघुगैः स्वरैरपराजिता ॥ ७७ ॥(२)

स्वराश्च स्वराश्चेत्येकशेषे सप्तभिः सप्तभिश्च यतिर्भवति ॥ ७७ ॥

ननभनलघुगैः प्रहरणकलिता ॥ ७८ ॥(३)

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. त. न. स. गु. गु.

भङ्क्त्वाद्रु-र्गाणिद्रु—मथन—मखिलं-छि-त्वा

S S S, S S I, I I I, I I S, S, S.

हत्वा तत्सैन्यं करितुरगबलं हत्वा ॥

येनाऽसम्बाधा स्थितिरजनि विपक्षाणां

सर्वोर्वीनाथः स जयति नृपतिर्मुञ्जः ॥

( शक्करीभेदेषु २०१७ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. र. स. ल. गु.

फणिप—तिवल—यं।जटा—मुकुटो—ज्ज्व-लं

I I I, I I I, S I S, I I S, I, S.

मनसिजमथनं त्रिशूलविभूषितम् ॥

स्मरसि यदि सखे ! शिवं शशिशेखरं

भवति तव तनुः परैरपराजिता ॥

( शक्करीभेदेषु ५०८२ तमोऽयं भेदः । )

(३) उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. न. भ. न. ल. गु.

सुरमु—निमनु—जरुप—चितच—र-णां

I I I, I I I, S I I, I I I, I S.

रिपुभयचकितत्रिभुवनशरणाम् ॥

प्रणमत महिषासुरवधकुपितां

प्रहरणकलितां पशुपतिदयिताम् ॥

( शक्करीभेदेषु ८१२८ तमोऽयं भेदः । )

पूर्वोक्तैव यतिः ॥ ७८ ॥

उक्ता वसन्ततिलका तभजा जगौ गः ॥ १० ॥(१)

त-भ-ज-जा गणा गुरू चेति वसन्ततिलका ॥ ७९ ॥

सिंहोन्नतेयमुदिता मुनिकाश्यपेन ॥ ८० ॥(२)

काश्यपेन मुनिनेयं वसन्ततिलकैव सिंहोन्नतोक्तेति संज्ञान्तरोक्तिः॥८०॥

उद्धर्षिणीयमुदिता मुनिसैतवेन ॥ ८१ ॥(३)

सैतवेन त्वाचार्येणेयमुद्धर्षिणीत्युक्ता ॥ ८१ ॥

इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ८२ ॥(४)

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

त. भ. ज. ज. गु. गु.

उद्धर्षि—णी जन—दृशां स्त—नभार—गु-र्वी

ऽऽ।, ऽ ।।, ।ऽ ।, ।ऽ।, ऽ, ऽ.

नीलोत्पलद्युतिमलिम्लुचलोचना च ॥
सिंहोन्नतत्रिकतटी कुटिलाऽलकान्ता
कान्ता वसन्ततिलका नृपवल्लभाऽसौ ॥

( शक्वरीभेदेषु २९३३ तमोऽयं भेदः । )

(२) उदाहरणान्तरं निरुक्तमेव । तथाऽपि रसिकजनमनोविनोदनाय पद्यान्तरं लिख्यते । यथा ध्वन्यालोकलोचने श्रीमदभिनवगुप्तपादाचार्य-गुरोः कविसहृदयचक्रवर्त्तिनो भट्टेन्दुराजस्य—

इन्दीवरद्युति यदा बिभृयान्न लक्ष्म
स्युर्विस्मयैकसुहृदोऽस्य यदा विलासाः ॥
स्यान्नाम पुण्यपरिणामवशात्तदानीं
कीलीकपोलतलकोमलकान्तिरिन्दुः ॥

(३) एतस्याऽपिपूर्वोक्तमेव । तथाऽपीदं श्रुतिगोचरीक्रियताम् । यथा न्यायवाचस्पतिरुद्रकवेः—

कस्तूरिकाहरिण ! मुञ्च वनोपकण्ठं
मा सौरभेण ककुभः सुरभीकुरुष्व ॥
आस्तां यशो ननु किरातशराऽभिपाता-
त्त्राताऽपि हन्त भविता भवतो दुरापः ॥

(४) उदाहरणान्तरं यथा साहित्याचार्यखिस्तेनारायणशास्त्रिणाम्-

भ. ज. स. न. गु. गु.

इन्दुव—दनाक—मलको—मलश—री—रा

ऽ।।, ।ऽ।, ।।ऽ, ।।।, ऽ, ऽ.

गुरुयुगलसहितैर्भ-ज-स-नैः ॥ ८२ ॥

द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥८३॥(१)

द्विर्द्विवारं सप्तसु छित् छेदो यतिर्यस्याः साऽलोला नाम ॥

तथा—

ननतजगुरुगैः सप्तयतिर्नदी स्यात् ॥
लक्ष्मीरन्तविरामा म्सौ तभौ गुरुयुग्मम् ॥
त्रिननगगिति वसुयति सुपवित्रम् ॥
मध्यक्षामा युगदशविरामा म्भौ न्यौ गौ ॥

इदमेव कुटिलमित्यन्ये ।

नजभजला गुरुश्च भवति प्रमदा ॥
सजसा यलौ गिति शरग्रहैर्मञ्जरी ।
नजभजगैर्गुरुश्च वसुषट् कुमारी ॥
नरनरैर्लगौ च रचितं सुकेशरम् ॥

अत्र वृत्तसङ्ख्या १६३८४ ॥ ८३ ॥

---

मञ्जुवचना मदनमोहनविलासा ॥
कं न वशयेन्मुनिवरं नयनलीला-
वीक्षणकैरपि हठाच्चतुरवाचा ॥

यथा वा मम—

कुन्दरदना कुटिलकुन्तलकलापा
मन्दमृदुलस्मितवती कमलनेत्रा ॥
सुन्दरसरःपरिसरे विहरमाणा
इन्दुवदना मनसि सा युवतिरास्ते ॥

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. स. म. भ. गु.गु.

मुग्धे! यौ-वनल-क्ष्मीर्विधु-विभ्रम-लो-ला
ऽऽऽ, ।।ऽ, ऽऽऽ, ऽ।।, ऽ, ऽ.
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ॥
तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥
( शक्वरीभेदेषु ३०९७ तमो भेदोऽयम् । )

अथाऽतिशक्करी (१५)—

द्विहतहयलघुरथ गिति शशिकला ॥ ८४ ॥(१)

द्विगुणता हयाः सप्त लघवो यत्र सा तथा । अथ तदनन्तरं गुरुर्गुर्वन्ताश्चतुर्दश लघवः शशिकलेत्यर्थः । इयमेव पैङ्गले ननननसैश्चन्द्रावर्ता नामोक्ता । अत्र सप्तभिरष्टभिश्च यतिरिति सम्प्रदायः ॥ ८४ ॥

स्रगिति भवति रसनवकयतिरियम् ॥ ८५ ॥(२)

इयं शशिकलैव रसेषु षट्सु नवसु यतौ स्रगिति संज्ञिता मालेत्यर्थः ॥८५॥

वसुहययतिरिह मणिगुणनिकरः ॥ ८६ ॥(३)

अष्टसु सप्तसु च यतावियमेव शशिकला मणिगुणनिकरसंज्ञितेति । यतिभेदेन संज्ञान्तरद्वयमुक्तम् ॥ ८६ ॥

ननमयययुतेयं मालिनी भोगिलोकैः ॥ ८७ ॥(४)

---

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

| न. | न. | न. | न. | स. |
|---|---|---|---|---|
| मलय— | -जतिल— | -कसमु— | -दितश— | -शिकला |
| । । । , | । । । , | । । । , | । । । , | । । ऽ. |

व्रजयुवतिलसदलिकगगनगता ॥
सरसिजनयनहृदयसलिलनिधि
व्यतनुत विततरभसपरितरलम् ॥
( अतिशक्वरीभेदेषु १६३८४ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा तत्रैव—

अयि सहचरि ! रुचिरतरगुणमयी
म्रदिमवसतिरनपगतपरिमला ॥
स्रगिव नियत विलसदनुपमरसा
सुमुखि ! मुदितदनुजदलनहृदये ॥

(३) एतदुदाहरणान्तरमपि तत्रैव—

नरकरिपुरवतु निखिलसुरगति-
रमितमहिमभरसहजनिवसतिः ॥
अनवधिमणिगुणनिकरपरिचितः
सरिदधिपतिरिव धृततनुविभवः ॥

(४) उदाहरणान्तरं यथा महाकविक्षेमेन्द्रस्य—

भोगिभिर्नागैरष्टभिर्लोकैर्भूरादिभिः सप्तभर्यतिर्विरामो यतः सा चार्ग्रभरा पात शेषः। 'नाग-लोकैः' इति रुचिरः पाठः ॥ ८७ ॥

**भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८८ ॥(१)**

रसहितौ रगणयुक्तौ। सप्तस्वष्टसु च यतिः ॥ ८८ ॥

**सजना नयौ शरदशयतिरियमेला ॥ ८९ ॥(२)**

शरेषु पञ्चसु दशसु च यतौ स-ज-न-न-यैरेला नाम ॥ ८९ ॥

**म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥ ९० ॥(३)**

---

न. न. म. य. य.

ननन—नमय—वाणी म—खलाकु—ष्टिकाल

।।।, ।।।, ऽऽऽ, ।ऽऽ, ।ऽऽ.

परिचलदिव शीलं नोत्सृजन्ती दुकूलम् ॥

तृणलवचलनेऽपि स्वैरिणी शङ्कमाना

दिशि दिशि कृतदृष्टिर्मालिनी कस्य नेष्टा ॥

( अतिशक्करीभेदेषु ४६७२ तमोऽयं भेदः। )

(१) उदाहरणान्तरं यथा साहित्याचार्यखिस्तेश्रीनारायण शास्त्रिणाम्-

न. ज. भ. ज. र.

भज भ—ज शङ्क—रं गिरि—जया स—मन्वितं

।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।ऽ.

त्यज भवबन्धनं विरसताऽवसानकम् ॥

उपनिषदां मतं मनसि धेहि सन्ततं

गुरुकृपया सदा भवतु ते प्रभद्रकम् ॥

( अतिशक्करीभेदेषु ११९८४ तमोऽयं भेदः। )

(२) उदाहरणान्तरं यथा पञ्चिकायाम्—

स. ज. न. न. य.

यदि को—पिनी प्र—भवसि मदुप—रि कान्ते !

।।ऽ, ।ऽ।, ।।।, ।।।, ।ऽऽ.

दृढबन्धनं घटय भुजलतिकया मे ॥

सहसा कुरु प्रखरनयनशरघातं

रदमच्छदावथ दश सुमुखि ! यथेच्छम् ॥

( अतिशक्करीभेदेषु ८१७२ तमोऽयं भेदः। )

(३) उदाहरणान्तरं यथा साहित्याचार्यखिस्तेश्रीनारायणशास्त्रिणाम्-

यान्तावन्ते यगणयुक्तौ।

तथा—

मा बाणा स्युर्यस्यां सा कामक्रीडासंज्ञा ज्ञेया ॥
नजभजरैर्विराजितमिदं सुकेसरम् ॥
चन्द्रलेखाभिधा रौ म्यौ यो विरामः स्वराष्टौ ॥
ननतभरकृताङ्गैः स्वरैरुपमालिनी ॥

अत्र वृत्तानि ३२७६८ ॥ ९० ॥

अथाऽष्टिः (१६)—

भ्रत्रिनगैः स्वरात्खमृषभगजविलसितम् ॥ ९१ ॥(१)

भ्रौ च त्रयो नाश्च गुरुश्च तैरिति विग्रहः, स्वरात्सप्तमात्परं खं विरामो यदि तदेति शेषः। सप्तसु यतिः। पादान्ते च यतिः प्राप्तवति सा नोक्ता। स्वरात्परं खं शरीरच्छिद्रनवकं यतिस्थानमिति शेष इति वार्थः। ऋष-भेत्यादि सर्वं नाम ॥ ९१ ॥

नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥ ९२ ॥(२)

गयुक्तैर्गुरुयुक्तैः ॥

---

म. र. म. य. य.

आहव्यो-ष्णीषशा-भा स्वाभा-त्तशुभ्रां-शुकाभा
ऽ ऽ ऽ, ऽ । ऽ, ऽ ऽ ऽ, । ऽ ऽ, । ऽ ऽ.
दैत्यानां मुण्डजातैर्हारावली शोभते सा ॥
आशा वस्त्राख्यभूषं भर्गस्य नेपथ्यकल्पे
शोभां भव्यां विधत्ते कांचिन्नवां चन्द्रलेखाम् ॥
( अतिशक्वरीभेदेषु ४६२५ तमोऽयं भेदः। )

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

भ. र. न. न. न. गु.

यो हरि—दमला—न खर—तरन—खशिख—रै-
ऽ । ।, ऽ । ऽ, । । ।, । । ।, । । ।, ऽ.
दुंजयत्यसिहसुविकटहृदयतटम् ॥
किमिह चित्रमेष यदखिलमपहृतवान्
कंसनिदेशहृप्यदृषभगजविलसितम् ॥
( अष्टिभेदेषु ३२७२७ तमोऽयं भेदः। )

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

तथा—

चित्रसंज्ञमीरितं रजौ रजौ रगौ च वृत्तम् ॥
जरौ जरौ ततो जगौ च पञ्चचामरं वदेत् ॥
सङ्कथिता भरौ नरनगाश्च धीरललिता ॥
पञ्चभकारयुताश्वगतिर्यदि चान्त्यगुरुः ॥

अत्र सङ्ख्या ६५५३६ ॥ ९२ ॥

अथाऽत्यष्टिः (१७)—

**रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ९३ ॥(१)**

रसैः षड्भी रुद्रैरेकादशभिश्छिन्ना यतिमती ॥ ९३ ॥

**जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ९४ ॥(२)**

वसुभिरष्टभिर्ग्रहैर्नवभिश्च यतिमती ॥ ९४ ॥

---

न. ज. भ. ज. र. गु.

स्फुरतु—ममाऽऽन—नऽद्य न—नु वाणि—नीतिर—म्यं
। । ।, । ऽ ।, ऽ । ।, । ऽ ।, ऽ । ऽ, ऽ.

तव चरणप्रसादपरिपाकतः कवित्वम् ॥
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितैः स्तवानि नित्यम् ॥

( अष्टिभेदेषु १११८४ तमोऽयं भेदः । )

(१) अत्रोदाहरणान्तरं यथा जयदेवस्य—

य. म. न. स. भ. ल. गु.

दुरालो—कस्तोक—स्तबक—नवका—ऽशोकक—लि-का-
। ऽ ऽ, ऽ ऽ ऽ, । । ।, । । ऽ, ऽ । ।, ।, ऽ.

विकासः कासारोपवनपवनोऽपि व्यथयति ॥
अपि भ्राम्यद्भृङ्गीरणितरमणीया न मुकुल-
प्रसूतिश्चूतानां सखि शिखरिणीयं सुखयति ॥

( अत्यष्टिभेदेषु ५६३३० तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा जयदेवस्यैव—

ज. स. ज. स. य. ल. गु.

दृशौ त—व मदा—लसे व—दनमि—न्दुमत्या—स्प-दं
। ऽ ।, । । ऽ, । ऽ ।, । ऽ ऽ. । ऽ ऽ, ।, ऽ.

गतिर्जनमनोरमा विजितरम्भमूरुद्वयम् ॥
रतिस्तव कलावती रुचिरचित्रलेखे भ्रुवा—

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥९५॥(१)

दिशो दश, मुनयः सप्त । दिशो मुनयश्चेति समाहारे छन्दोविशेषणम् । यतिस्थानत्वेन च तत्सङ्ख्याकाक्षररूपता विवक्षिता । दिङ्मुनिभिर्वंशपत्रपतितमिति एकं वा पदम् । यतिपदस्य मध्यमस्य लोपेन वा समासः । तत्र यतिस्थानमिति वाऽध्याहारः । दिङ्मुनियतीति पदेऽन्त्यपदलोप इति केचित् । लुप्तविभक्त्यन्तमित्यन्ये । तदुभयं चिन्त्यम् ॥९५॥

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ ९६ ॥ (२)

षट्सु चतुर्षु सप्तसु च त्रिषु स्थानेषु यतौ हरिणी नाम ॥ ९६ ॥

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥ ९७ ॥ (३)

---

वहो विबुधयौवतं वहसि तन्वि ! पृथ्वीगता ॥
( अत्यष्टिभेदेषु ३८७५० तमो भेदोऽयम् ।)

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

भ. र. न. भ. न. ल. गु.

अद्य कु—रुष्व क—र्म सुकृ—तं यदि परदि—व—से
S I I, S I S, I I I, S I I, I I I, I, S.
मित्र ! विधेयमस्ति भवतः किमु चिरयसि तत् ॥
जीवितमल्पकालकलनालघुतरतरलं
नश्यति वंशपत्रपतितं हिमसलिलमिव ॥
( अत्यष्टिभेदेषु ६४४८३ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा सुवृत्ततिलके—

न. स. म. र. स. ल. गु.

न सम—रसनाः काल भा—गाश्चलं धनयौ—व—नं
I I I, I I S, S S S, S I S, I I S, I, S
कुरुत सुकृतं यावन्नेयं तनुः प्रविशीर्यते ॥
किमपि कलना कालस्येयं प्रधावति सत्वरा
तरुणहरिणीसम्भ्रस्तेव प्लवप्रविसारिणी ॥
( अत्यष्टिभेदेषु ४६११२ तमो भेदोऽयम् । )

(३) उदाहरणान्तरं यथा मम—

म. भ. न. त. त. गु. गु.

नानाऽऽश्ले—षप्रक—रणाच—णा चारु—चूर्णोज्ज्व—ला—श्री
S S S, S I I, I I I, S S I, S S I, S, S

म-भ-न-त-त-ग-गैर्मन्दाक्रान्ता । जलधिषड्गैश्चतुर्भिः षड्भिरगैः पर्वतैः सप्तभिः ॥ ९७ ॥

हयदशभिर्नजौ भजजला गुरु नर्कुटकम् ॥ ९८ ॥ (१)

सप्तभिर्दशभिश्च यतिः ॥ ९८ ॥

मुनिगुहकार्णवैः कृतयति वद कोकिलकम् ॥ ९९ ॥ (२)

मुनयः सप्त, गुहस्य स्कन्दस्य कानि मुखानि षट्, अर्णवाश्चत्वारस्तैः कृता यतिर्यत्र तन्नर्कुटकमेव कोकिलकं वद ब्रूहीति शिष्योपदेशः । यतिभेदेन तस्यैवान्या संज्ञेति ज्ञेयम् ॥

तथा—

रसयुगहययुङ्नौ म्रौ स्रो लगौ हि यदा हरिः ॥
भवेत्कान्ता युगरसहयैर्यभौ नरसा लगौ ॥
ससजा भजगा गु दिक्स्वरैर्भवति चित्रलेखा ॥

अत्र वृत्तसंख्या १३१०७२ ॥ ९९ ॥

---

नानाभावाकलितरसिकश्रेणिकान्ताऽन्तरङ्गा ॥
मुग्धस्निग्धैर्मृदुमृदुपदैः क्रीडमाना पुरस्तात्
मन्दाक्रान्ता भवति कविताकामिनी कौतुकाय ॥
( अत्यष्टिभेदेषु १८९२९ तमो भेदोऽयम् ।)

(१) उदाहरणान्तरं यथा सुवृत्ततिलके—

न. ज. भ. ज. ज. ल. गु.

निजभु—जजैर्वि--शालगु--णविक्र--मकीर्ति-भ-रैः
।।।, ।ऽ।, ऽ।।, ।ऽ।, ।ऽ।, ।, ऽ
प्रविदधता सुधांशुधवलं भवता भुवनम् ॥
कथय, कथं कृतेयमतिरागवती जनता
चरितमपूर्वमेव तव कस्य न नर्कुटकृत् ॥
( अत्यष्टिभेदेषु ५९२४० तमो भेदोऽयम् ।)

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. ज. भ. ज. ज. ल. गु.

लसद्—रुणे क्ष—णं मधु--रभाष—ण मोद्-क-रं
।।।, ।ऽ।, ऽ।।, ।ऽ।, ।ऽ।, ।, ऽ
मधुसमयागमे, सरसकेलिभिरुल्लसितम् ॥
अलिललितद्युति रविसुतावनकोकिलकं
ननु कलयामि, तं सखि! सदा हृदि नन्दसुतम् ॥
( अत्यष्टिभेदेषु ५९२४० तमोऽयं भेदः । )

अथ धृतिः (१८)—

स्याद् भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ ॥१००॥(१)

भूतानि पञ्च, ऋतवः षट्, अश्वाः सप्त ॥

तथा—

मात्सो जौ भरसंयुतौ करिबाणकैर्हरिणप्लुतम् ॥
यदिह नयुगलं ततो वेदरेफैर्महामालिका ॥
पञ्चभकारकृताश्वगतिर्यदि चान्तसरचिता ॥
सुधा तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः ॥

तर्काः षट् ।

वर्णाश्वैर्मननततमकैः कीर्तिता चित्रलेखेयम् ॥

वर्णाश्चत्वारः ।

भाद्रननासौ भ्रमरपदकमिदमभिहितम् ॥
शार्दूलं वद मासषट्कयति मः सौ जसौ रो मश्चेत् ॥

मासा द्वादश ।

अर्थाश्वाश्वैर्मभनयरयुगैर्वृत्तं मतं केशरम् ॥

अर्थाश्चत्वारः ।

म्भौ न्जौ भ्रौ चेच्चलमिदमुदितं गुगैर्मुनिभिः स्वरैः ॥
अत्र वृत्तानि २६२१४४ ॥ १०० ॥

अथाऽतिधृतिः (१९)—

सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम् ॥ १०१ ॥(२)

---

(१) उदाहरणान्तरं यथा—

म. त. न. य. य. य.

धन्यानामेताः कु-सुमित-लतावे-ल्लितोत्फु-ल्लवृक्षाः
ऽ ऽऽ, ऽऽ ।, । । ।, ।ऽऽ, ।ऽऽ, ।ऽऽ,
सोत्कण्ठं कूजत्परभृतकलालापकोलाहलिन्यः ॥
मध्वादौ माद्यन्मधुकरकलोद्गीतझङ्काररम्या
ग्रामान्तस्रोतःपरिसरभुवः प्रीतिमुत्पादयन्ति ॥

( धृतिभेदेषु ३७८२७ तमो भेदोऽयम् । )

(२) उदाहरणान्तरं यथा सिद्धान्तशिरोमणौ—

म. स. ज. स. त. त, गु,

ये याताऽ-धिकमा-सहीन-दिवसा येचाऽपि तच्छेष-के
ऽ ऽऽ, । । ऽ, । ऽ ।, । । ऽ, ऽऽ ।, ऽ ऽ ।, ऽ

द्वादशभिः सप्तभिश्च यतिः ।

तथा—

नयुगललगुरु निरन्तरं यदा स पञ्चचामरः ॥
रसर्त्वश्वैर्यमौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात् ॥
भूताश्वाश्वान्तं मतनसररगैः कीर्तितं पुष्पदाम ॥
वृत्तं बिम्बाख्यं शरमुनितुरगैर्म्तौ न्सौ ततो चेद्गुरुः ॥
इयं छाया ख्याता ऋतुरसहयैर्यो मनसा म्तौ गुरुः ॥
रसैः षड्भिर्लोकैर्यमनसजजा गुरुर्मकरन्दिका ॥
इनाश्वैर्यायभनयजजगाः कीर्तिता मणिमञ्जरी ॥
गजाब्धितुरगैर्जसौ जसतभा गश्चेत्समुद्रतता ॥

अत्र वृत्तानि ५२४२८८ ॥ १०१ ॥

अथ कृतिः (२०)—

ज्ञेया सप्ताश्वषड्भिर्मरभनय-
युता भ्लौ गः सुवदना ॥ १०२ ॥(१)

सप्तभिः सप्तभिः षड्भिश्च यतिः ॥ १०२ ॥

त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम ॥ १०३ ॥(२)

---

तेषामैक्यमवेत्य यो दिनगणान्ब्रूतेऽत्र कल्पे गतान् ॥
संश्लिष्टस्फुटकुट्टकोद्भटबहुक्षुद्रैणविद्रावणे
तस्याऽव्यक्तविदो विदो विजयते शार्दूलविक्रीडितम् ॥
( अतिधृतिभेदेषु १४६३३७ तमोऽयं भेदः )

( १ ) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

म. र. भ. न. य. भ. ल. गु.

प्रत्याहृ-त्येन्द्रिया-णि त्वदि--तरवि--षयात्मा--साम्रन-य-ना
ऽऽऽ, ऽ।ऽ, ऽ।।, ।।।, ।ऽऽ, ऽ।।, ।,ऽ
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका ॥
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्त्तिं त्यक्तुकामा ननु नरकरिपो! राधा मम सखी ॥
( कृतिभेदेषु ४६६८३३ तमोऽयं भेदः । )

( २ ) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

र. ज. र. ज. र. ज. गु. ल.

जन्तुमा--त्रदुःख--कारि क--र्म निर्मि--तं भव--त्यनर्थ--हे-तु.
ऽ।ऽ, ।ऽ।, ऽ।ऽ, ।ऽ।, ऽ।ऽ, ।ऽ।, ऽ।

त्रिवारं रगणजगणौ गुरुलघू चेदेतादृशेन लक्षणेन वृत्तं नाम । गुरुलघुक्रमेणेत्यर्थः । अत्र पादान्ते यतिः । "ढ्रलोपे पूर्वस्य दीर्घोऽणः" ( पा० सू०६-३-१११ ) इति त्रिरित्यत्र दीर्घः ॥

तथा—

रसैरश्वैरश्वैर्यमननततगैर्गेन शोभेयमुक्ता ॥

अत्र सङ्ख्या १०४८५७६ ॥ १०३ ॥

अथ प्रकृतिः (२१)—

म्रभ्नैर्यानां त्रयेण त्रिमुनि-

यतियुता स्रग्धरा कीर्तितेयम् ॥ १०४ ॥(१)

म-र-भ-नै-र्यगणत्रयेण च स्रग्धरा त्रिवारं मुनिषु यतियुक्ता । सप्तसु सप्तसु सप्तसु यतीमतीत्यर्थः ।

तथा—

सलिलनिधिर्भवेदिह नजौ भगणो जगणास्त्रयश्च रः ॥

अन्येषां मते सिद्धकमिति संज्ञितमेतत् ।

अत्र सङ्ख्या २०९७१५२ ॥ १०४ ॥

अथाकृतिः (२२)—

भ्रौ नरना रनावथ गुरुर्दिगर्क-

विरमं हि भद्रकमिति ॥ १०५ ॥(२)

---

तेन सर्वमात्मतुल्यमीक्षमाण उत्तमं सुखं लभस्व ॥
विद्धि बुद्धिपूर्वकं ममोपदेशवाक्यमेतदादरेण
वृत्तमेतदुत्तमं महाकुलप्रसूतजन्मनां हिताय ॥
( कृतिभेदेषु ६९९०५१ तमोऽयं भेदः । )

(१) उदाहरणान्तरं यथा सुवृत्ततिलके—

म. र. भ. न. य. य. य.

साटोप-स्मानुभा-वप्रिय—परिच--यया स्व--र्गरङ्गा--ङ्गनानां
ऽऽऽ, ऽ।ऽ, ऽ।।, ।।।, ।ऽऽ, ।ऽऽ, ।ऽऽ,
लीलाकर्णावतंसश्रियमतनुगुणश्लेषया संश्रयन्त्या ॥
आभाति व्यक्तमुक्ताविचकिलवलीवृन्दकुन्देन्दुकान्त्या
त्वत्कीर्त्या भूषितेयं भुवनपरिवृढ ! स्रग्धरेव त्रिलोकी ॥
( प्रकृतिभेदेषु ३०२९९३ तमोऽयं भेदः । )

( २ ) उदाहरणान्तरं यथा छन्दोवृत्तौ—

तथा—

सप्तभकारकृतावसितौ सगुरुः कविभिः कथिता मदिरा ॥

अत्र वृत्तानि ४१९४३०४ ॥ १०५ ॥

अथ विकृतिः (२३)—

यदिह नजौ भजौ भजभलगा-

स्तदश्वललितं हरार्कयतिमत् ॥ १०६ ॥(१)

हराः ११, अर्काः १२ ॥ १०६ ॥

मत्ताक्रीडा मौ त्नौ नौ नल्गिति

भवति वसुशरदशयतियुता ॥ १०७ ॥(२)

---

दिक्षु दशस्वर्केषु द्वादशसु च विरमो विरतिर्यस्य तत्तथा हीति-प्रसिद्धम् ।

भ. र. न. र. न. र. न. गु.

भद्रक--गीतिभिः सकृद्-पि स्तुव--न्ति भव ये भव—न्तमन—घं

ऽ।।, ऽ।ऽ, ।।।, ऽ।ऽ, ।।।, ऽ।ऽ, ।।।, ऽ,

भक्तिभरावनम्रशिरसः प्रणम्य तव पाद्योः सुकृतिनः ॥

ते परमेश्वरस्य पदवीमवाप्य सुखमाप्नुवन्ति विपुलं

मर्त्यभुवं स्पृशन्ति न पुनर्मनोहरसुराङ्गनापरिवृताः ॥

( आकृतिभेदेषु १९३०७११ तमोऽयं भेदः । )

( १ ) उदाहरणान्तरं यथा छन्दोवृत्तौ—

न. ज. भ. ज. भ. ज. भ. ल.गु.

पवन—-विधूत-वीचिच--पलं वि- लोकय-ति जीवि-तं तनु-भृ-तां

।।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।।, ।ऽ।, ऽ।।, ।, ऽ

वपुरपि हीयमानमनिशं जरावनितया वशीकृतमिदम् ॥

सपदि निपीडनव्यतिकरं यमादिव नराधिपान्नरपशोः

परवनितामवेक्ष्य कुरुते तथाऽपि हतबुद्धिरश्वललितम् ॥

( विकृतिभेदेषु ३८६१४२४ तमोऽयं भेदः । )

( २ ) उदाहरणान्तरं यथा तत्रैव—

म. म. त. न. न. न. न. ल.गु.

हृद्यं म-द्यं पीत्वा-नारीस्ख-लितग—तरति—शयर--सिकहृ--द या

ऽऽऽ, ऽऽऽ, ऽऽ।, ।।।, ।।।, ।।।, ।।।, ।, ऽ,

मत्ताक्रीडा लोलैरङ्गैर्मुदमखिलविटजनमनसि कुरुते ॥

वसवोऽष्टौ पञ्चदश च तेषु यतिमती । अष्टमे पञ्चदशे च वर्णे यतिः कार्येत्यर्थः । न तु पञ्चसु दशसु चेत्यर्थः । "मत्ताक्रीडा मौ त्नौ नौ न्लौग् वसुपञ्चदशकौ" ( पिं०सू०७-२८ ) इति सूत्रे द्विवचननिर्देशात् । अन्यथा हि बहुवचनं स्यात् । अन्यैस्तु वाजिवाहनमेतदुक्तम् ॥

अत्र सङ्ख्या ८३८८६०८ ॥ १०७ ॥

अथ सङ्कृतिः (२४)—

भूतमुनीनैर्यतिरिह भतनाः स्भौ
भनयाश्च यदि भवति तन्वी ॥ १०८ ॥(१)

भूतानि पञ्च, मुनयः सप्त, इनाः सूर्या द्वादश । अत्र पैङ्गले द्वादशसु द्वादशसु च यतिरुक्ता ॥

अत्र सङ्ख्या १६७७७२१६ ॥

अथाऽतिकृतिः (२५)—

क्रौञ्चपदा भ्मौ स्भौ ननना न्गा-
विषुशरवसुमुनिविरतिरिह भवेत् ॥ १०९ ॥(२)

इषवः पञ्च, शराः पञ्च, वसवोऽष्टौ, मुनयः सप्त । एतेषु विरतिर्यस्याः सा तथा ।

---

वीतव्रीडाऽश्लीलालापैः श्रवणसुखसुभगसुललितवचना
नृत्यैर्गीतैर्भ्रूविक्षेपैः कलमणितविविधविहगकुलरुतैः ॥
( विकृतिभेदेषु ४१९४०४९ तमो भेदोऽयम् । )

( १ ) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

भ. त. न. स. भ. भ. न. य.

माधव ! मुग्धैर्म--धुकर—विरुतः कोकिल--कूजत--मलय--समीरैः
ऽ ।।, ऽऽ।, ।।।, ।।ऽ, ऽ।।, ऽ।।, ।।।, ।ऽऽ,
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविगततनुदाहा ॥
पद्मपलाशैर्विरचितशयना देहजसंज्वरभरपरिदूनै-
र्निःश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी ॥
( सङ्कृतिभेदेषु ४१५५३६३ तमोऽयं भेदः । )

( २ ) उदाहरणान्तरं यथा छन्दोवृत्तौ—

भ. म. स. भ. न.

याकपि-लाक्षी पि-ङ्गलके—शीकलि-रुचिर-
ऽ ।।, ऽऽऽ, ।।ऽ, ऽ।।, ।।।,

अत्र सङ्ख्या ३३५५३४३२ ॥

अथोत्कृतिः (२६)—

वस्वीशाश्वच्छेदोपेतं ममतनयुगनर-
सलगैर्भुजङ्गविजृम्भितम् ॥ ११० ॥(१)

वसवः ८, ईशाः ११, अश्वाः सप्त । एतैश्छेदेन यत्या युक्तम् ॥११०॥

मो नाः षट् सगगिति यदि
नवरसरसशरयतियुतमपवाहाख्यम् ॥१११॥ (२)

---

न. न. न. गु.

नुदिन—मनुन—यकठि—ना

। । ।, । । ।, । । ।, ऽ,

दीर्घतराभिः स्थूलशिराभिः परिवृतवपुरतिशयकुटिलगतिः ॥
आयतजङ्घा निम्नकपोला लघुतरकुचयुगपरिचितहृदया
सा परिहार्या क्रौञ्चपदा स्त्री ध्रुवमिह निरवधि सुखमभिलषता ॥
( अतिकृतिभेदेषु १६७७३६१ तमोऽयं भेदः । )

( १ )उदाहरणान्तरं यथा--

म. म. त. न. न.

हेलोद्-ञ्चन्यञ्च-त्पादप्र--कटाव—कटन

ऽ ऽ ऽ, ऽ ऽ ऽ, ऽ ऽ ।, । । ।, । । ।,

न. र. स. ल. ग.

टनभ—रोरण—स्करता-ल-कः

। । ।, ऽ । ऽ, । । ऽ, ।, ऽ

चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयस्तरङ्गितहारधृत् ॥
अस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः
पायाद्वश्छिन्दन्कालिन्दीहृदकृतनिजवसतिबृहद्भुजङ्गविजृम्भितम् ॥
( उत्कृतिभेदेषु २३८५४८४९ तमोऽयं भेदः ।)

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. न. न. न. न.

श्रीकण्ठं त्रिपुर—दहन—ममृत—किरण-

ऽ ऽ ऽ, । । । । । ।, । । ।, । । ।

मो मगणः, षट् नाः नगणाः, सगणः गो गुरुः पुनर्गुरुश्च नवभिः षड्भिः पुनः षड्भिः पञ्चभिश्च यत्या युतमपवाहकसंज्ञम् ॥

अत्र वृत्तसङ्ख्या ६७१०८८६४ ॥ १११ ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकाया-
मुक्तादिप्रकरणम् ।

---

इदानीं समवृत्तप्रसङ्गेन समवृत्तरूपान्दण्डकानाह—

यदि ह नयुगलं ततः सप्तरेफा-
स्तदा चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥ ११२ ॥

यदीति यदेत्यर्थेऽव्ययम्। हेति प्रसिद्धार्थेऽव्ययं वा। नयुगलं नगणद्वयं ततस्तदनन्तरं सप्त रगणाः, स चण्डवृष्टिप्रपातो नाम दण्डकः। इदमेवोदाहरणं पादे। इयं च संज्ञा रातमाण्डव्यव्यतिरिक्तपिङ्गलादिमतेन। ताभ्यां त्वेतस्य संज्ञान्तरमकारि ॥ ११२ ॥

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णव-
व्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥ ११३ ॥

यद्यपि प्रतिचरणं विवृद्धो रेफो रगणो येषु ते तथेति व्युत्पत्त्या प्रथमे पादे नौ ततोऽष्टौ रेफाः, द्वितीये नव, तृतीये दश, चतुर्थे एकादशेति वृद्धिरित्यर्थः प्रतीयते, तथापि ग्रन्थान्तरविरोधात्प्रतिदण्डकं चरणेषु विवृद्धा रेफा येष्विति विग्रहेणोत्तरोत्तरदण्डकेषु चरणचतुष्टयेऽप्येकैकरेफवृद्धिरित्यर्थाश्रयणेन ग्रन्थान्तराऽविरोधः कार्यः। ततश्च नाभ्यां रगणाष्टकेन च घटितपादोऽर्णाख्यो दण्डकः, रगणनवकेनाऽर्णवः, दशभिर्व्यालः, एकादशभिर्जीमूतः, द्वादशभिर्लीलाकरः, त्रयोदशभिरुद्दामः, चतुर्दशभिः शङ्खः। सर्वत्रादौ नगणद्वयं कार्यम्। आदिशब्दात्पञ्चदशा-

---

न. न. स. गु.गु.

शकल—ललित—शिरसं—रु-द्रं
।।।, ।।।, ।।ऽ, ऽ, ऽ.

भूतेशं हतमुनिमखमखिलभुवननमितचरणयुगमीशानम् ॥
सर्वज्ञं वृषभगमनमहिपतिकृतवलयरुचिरकरमाराध्यं
तं वन्दे भवभयभिदमभिमतफलवितरणगुरुमुमया युक्तम् ॥
(उत्कृतिभेदेषु १०३८८६०१ तमोऽयं भेदः।)

दिरगणैराराम-सङ्ग्राम-सुराम-वैकुण्ठ-सोत्कण्ठ-सार-कासार-विस्तार-संहार-नीहार-मन्दार-केदार-साधार-सत्कार-संस्कार-माकन्द-गोविन्द-सानन्द-सन्दोह-नन्देत्येवमादिनामका एकैकरगणवृद्ध्या नद्वयोत्तरैकत्रिंशदधिकशतत्रयरगणघटितैकोनसहस्राक्षरपादपर्यन्तं कविप्रयोगानुसारेण दण्डका ज्ञेयाः । यदाहुः—

एकोनसहस्राक्षरपर्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः ।
वर्णत्रिकगणवृद्ध्या नद्वितयाद्या महामतिभिः ॥ इति ।

तथा च रगणघटितदण्डकाः पञ्चविंशत्यधिकशतत्रय(३२५) सङ्ख्याका भवन्ति । एवं यगणादिघटितदण्डका अपि । तत्र रीतिप्रदर्शनायोदाहरणं ममैव यथा—

त्रिभुवनसुखहेतवे धातृमुख्यामरप्रार्थनासार्थनादर्थिचिन्तामणे !
दशरथकृतयागसौभाग्यतस्तत्तनूजन्मतास्थापितश्रौतमार्गार्गल ! ॥
मुनिवनगतताटकाकण्टकीमूलकुद्दालितस्वीयबाणावले ! राघव !
कुशिकयजनसिद्धये व्योम कृत्वा शरैश्चण्डवृष्टिप्रपातोऽसि हन्तुं रिपून् ॥

एवमर्णादिष्वप्युदाहार्यम् ॥ ११३ ॥

**प्रचितकसमभिधो धीरधीभिः स्मृतो**
**दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ ११४ ॥**

नगणद्वयादुत्तरभाविभिः सप्तभिर्यगणैर्धीरबुद्धिभिः कविभिः प्रचितकसंज्ञको दण्डक उक्तः । प्रचितक इति समभिधा नाम यस्येति विग्रहः । अत्रापि पूर्ववदेकैकयगणवृद्ध्या दण्डकाः कार्याः । यैरित्युपलक्षणम् । अष्टभिरपि गणैः कविप्रयोगानुरोधाद्भोगावलीविरुदावल्यादिषु दण्डकानामिष्टत्वात् । यद्यपि "शेषः प्रचितः" (पिं०सू०७-३६) इति सूत्रं वृत्तिकृता रेफाष्टकादिरचितदण्डकपरं शेषशब्दमङ्गीकृत्य रगणघटितानामेव चण्डवृष्टिप्रपातोर्ध्वभाविनां 'प्रचित' इति सामान्यसंज्ञाभिधानार्थतया व्याख्यातम् । अत एव चाह सः—

प्रथमकथितदण्डकश्चण्डवृष्टिप्रपाताभिधो मुनेः पिङ्गलाचार्यनाम्नो मतः,
प्रचित इति ततः परं दण्डकानामियं जातिरेकैकरेफाभिवृद्ध्या यथेष्टं भवेत् ॥
स्वरुचिरचितसंज्ञया तद्विशेषैरशेषैः पुनः काममन्येऽपि कुर्वन्तु वागीश्वराः,
भवति यदि समानसङ्ख्याक्षरैस्तत्र पादव्यवस्था ततो दण्डकः पूज्यतेऽसौ जनैः ॥ इति ।

तथापि यगणादिदण्डकानामपि कविप्रयुक्तत्वादुक्तरगणरचितदण्डकव्यतिरिक्तयादिकृतदण्डकानामेव शेषशब्दोद्दिष्टानां प्रचितकसंज्ञा

ज्ञापनार्थतां सूत्रस्याभिप्रेत्य व्याख्यात्रन्तरकृतव्याख्यामनुसरतैवमवादि केदारेणेत्यदोषः । सर्वेषु दण्डकेषु पादान्ते यतिः । श्रुतिसौकर्येण अन्येऽपि दण्डका अन्यैरुक्ताः ।

यथा—

नयुगलगुरुयुगावेवं प्रकाराः कवीच्छानुरोधात्तदा यत्र
वक्ष्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा ॥
यत्र रेफान्कविः स्वेच्छया पाठसौभाग्यसापेक्षया—
रोपयत्येष धीरैः स्मृतो दण्डको मत्तमातङ्गलीलाकरः ॥
लघुर्गुरुः क्रमेण यत्र बध्यते सुधीभिरिच्छया
स दण्डकस्त्वनङ्गशेखरः स्मृतः ॥
स्वेच्छया रजौ क्रमेण संनिवेशयत्युदारधीः
कविः स दण्डकः स्मृतो जगत्यशोकमञ्जरी ॥
सगणः सकलः खलु यत्र भवेत्तमिह
प्रवदन्ति बुधाः कुसुमस्तबकम् ॥
यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो
विशुद्धोऽपरो दण्डकः सिंहविक्रान्तनामा ॥

एवं मेघमालाकुसुमस्तरणोत्तरकामबाणादयो दण्डकाः षड्विंशत्यक्षराधिकाक्षरपादाः कविप्रबन्धानुसारेण ज्ञेयाः । षड्विंशत्यक्षरन्यूनतायां तु पूर्वोक्तासु जातिष्वेवान्तर्भावो यथायोगं भवति ॥ ११४ ॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां
वृत्तरत्नाकरटीकायां समवृत्ताध्यायस्तृतीयः ॥

---

# चतुर्थोऽध्यायः ।

एवं समवृत्तान्यभिधायाऽधुना अर्धसमान्याह—

विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरुकावुपचित्रम् ॥ १ ॥(१)

---

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

| स. | स. | स. | ल. | गु. |
|---|---|---|---|---|
| मुरव— | -रवपु— | -स्तनुतां | मु | दं |
| ।।ऽ, | ।।ऽ, | ।।ऽ, | ।, | ।. |

विषमे दले प्रथमे तृतीये च पादे सौ सगणद्वयं सलगाश्च सगण-लघुगुरुवः, युजि समे द्वितीये चतुर्थे च पादे भौ भगणौ पुनर्भगण-स्ततो द्वौ गुरू तदोपचित्रं नाम। अर्धसमत्वाद् द्वितीयार्धमप्येवमेवोदा-हार्यम्। एवमग्रेऽपि ॥ १ ॥

भत्रयमोजगतं गुरुणी चे-

द्युजि च नजौ ज्यतुतौ द्रुतमध्या ॥ २ ॥(१)

ओजगतं विषमपादगतं भगणत्रयं गुरुणी चेद् द्वे अक्षरे, युजि समपादे ज-य-गणपरौ न-गणज-गणौ चेत्सा द्रुतमध्या नाम। उपचित्राऽऽपातलिकाऽपरान्तिकेयम्। अत्रापरान्तिकासंनिवेशो भ्रान्तः ॥ २ ॥

सयुगात्सगुरू विषमे चे-

द्भाविह वेगवती युजि भाद्गौ ॥ ३ ॥(२)

विषमे पादे सत्रयं गुरुश्च, युजि समे पादे भगणत्रयं गुरू च, इह

---

भ. भ. भ. गु. गु.

हेमनि-भांशुक-चन्दन-लि-प्तम् ।

ऽ।।, ऽ।।, ऽ।।, ऽ, ऽ.

गगनं चपलामिलितं यथा

शारदनीरधरैरुपचित्रम् ॥

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ--

भ. भ. भ. गु.गु.

यद्यपि शीघ्रग-तिर्मृदु-गा मी

ऽ।।, ऽ।।, ऽ।।, ऽ, ऽ.

न. ज. ज. ज.

बहुध-नवान-पि दुःख-मुपैति ॥

।।।, ।ऽ।, ।ऽ।, ।ऽ।,

नातिशयाचरिता न च मूर्च्छा

नृपतिगतिः कथिता द्रुतमध्या ॥

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्--

स. स. स. गु.

स्मरवे-गवती-व्रजरा-मा

।।ऽ, ।।ऽ, ।।ऽ, ऽ.

छन्दःशास्त्रे वेगवती नाम, आपातलिकैवेयम् ॥ ३ ॥

ओजे तपरौ जरौ गुरुश्चे-

न्म्सौ ज्गौग्भद्रविराड् भवेदनोजे ॥ ४ ॥(१)

ओजे विषमे पादे तगणात्परौ जगणरगणौ गुरुश्च, अनोजेऽविषमे समे म-स-ज-गगुरवश्च भद्रविराड् भवेत् । औपच्छन्दसिकस्यैवेयं गण-निवेशविशेषे संज्ञा ॥ ४ ॥

असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद् गः ॥ ५ ॥(२)

भ. भ. भ. गु. गु.

केशव---वंशर---वैरति--मु--ग्धा

ऽ।।, ऽ।।, ऽ।।, ऽ, ऽ.

रभसान्न गुरुन्गणयन्ती

केलिनिकुञ्जगृहाय जगाम ॥

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

त. ज. र. गु.

यत्पाद्—तले च--कास्ति च--क्रं

ऽऽ।, ।ऽ।, ऽ।ऽ, ऽ

म. स. ज. गु. गु.

हस्ते वा कुलिशं सरोरु—हं वा ॥

ऽऽऽ, ।।ऽ, ।ऽ।, ऽ, ऽ

राजा जगदेकचक्रवर्त्ती

स्याच्छ्रं भद्रविराट् समश्नुतेऽसौ ॥

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. ज. स. गु.

हतभू—रिभूमि—पातचि--ह्नां

।।ऽ, ।ऽ।, ।।ऽ, ऽ

भ. र. न. गु. गु.

युद्धस---हस्तल—ध्वजय--ल-क्ष्मीम् ॥

ऽ।।, ऽ।ऽ, ।।।, ऽ, ऽ.

सहते न कोऽपि वसुधायां

केतुमतीं नरेन्द्र ! तव सेनाम् ॥

विषमे दले पादे सजसा गणा गुरुश्च, समे भरना गणा गुरू च केतुमती नाम । भरनगादिति समाहारैकवचनम् ॥ ५ ॥

आख्यानकी तौ जगुरू ग ओजे
जतावनोजे जगुरू गुरुश्चेत् ॥ ६ ॥(१)

तौ तगणौ जगणगुरू गुरुश्चौजे विषमे पादे, अनोजे समे पादे ज-त-ज-गगुरवस्तदाख्यानकी नाम ॥ ६ ॥

जतौ जगौ गो विषमे समे चे-
त्तौ जगौ ग एषा विपरीतपूर्वा ॥ ७ ॥(२)

विषमे ज-त-ज-गगुरवः, समे त-त-ज-गगुरवस्तदैषा आख्यानकी विपरीतशब्दपूर्वा । विपरीताख्यानकीत्यर्थः । अनयोरुपजात्यन्तर्भावेऽपि विशेषसंज्ञाविधानार्थमर्धसमाध्याये पाठः ॥ ७ ॥

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

त. त. ज. गु.गु.
भृङ्गाव—लीमङ्ग—लगीत—ना–द
ऽ ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ, ऽ.
ज. त. ज. ग.गु.
जनस्य—चित्ते मु–दमाद्—धा—ति ॥
। ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ, ऽ.
आख्यानकी च स्मरजन्मपाश-
महोत्सवस्याश्रवणे क्वणन्ती ॥

(२) उदाहरणान्तरं यथा तत्रैव—

ज. त. ज. गु.गु.
अलं त–वालीक-वचोभि–रे–भिः
। ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ, ऽ.
त. त. ज. गु. गु.
स्वार्थं प्रि–ये! साध–यकार्य–म–न्यत्॥
ऽ ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ, ऽ
कथं कथावर्णनकौतुकं स्या-
दाख्यानकी चेद्विपरीतवृत्तिः ॥

सयुगात्सलघू विषमे गुरु-
र्युजि नभौ भरकौ हरिणप्लुता ॥ ८ ॥(१)

सगणद्वयात्सगणलघू गुरुश्च विषमपादे, युजि समे पादे न-भ-भ-रा गणा हरिणप्लुता नाम ॥ ८ ॥

अयुजि ननरला गुरुः समे-
न्जमपरवक्त्रमिदं ततो जरौ ॥ ९ ॥(२)

विषमे न-न-र-लगुरवः, समे न-ज-ज-रा अपरवक्त्रं नाम । अस्य वैतालीयान्तर्गतत्वेऽपि संज्ञान्तरविधानार्थमत्रोक्तिः ॥ ९ ॥

अयुजिनयुगरेफतो यकारो
युजि च नजौ जरगाश्च पुष्पिताग्रा ॥ १० ॥(३)

---

(१) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

स. स. स. ल.गु.
स्फुटफे—नचया—हरिण—प्लु—ता
।।ऽ, ।।ऽ, ।।ऽ, ।, ऽ.
न. भ. भ. र.
वलिम—नोन्नत—टा तर—णेः सुता ॥
।।।, ऽ।।, ऽ।।, ऽ।ऽ.
कलहंसकुलारवशालिनी
विहरतो हरति स्म हरेर्मनः ॥

(२) उदाहरणान्तरं यथा छन्दोमञ्जर्याम्—

न. न. र. ल. गु.
स्फुटसु—मधुर—वेणुगी—ति—भि-
।।।, ।।।, ऽ।ऽ, ।, ऽ
न. ज. ज. र.
स्तमप—रवक्त—मवेत्य—माधवम् ॥
।।।, ।ऽ।, ।ऽ।, ऽ।ऽ.
मृगयुवतिगणैः समं स्थिता
व्रजवनिता धृतचित्तविभ्रमाः ॥

(३) उदाहरणान्तरं यथा अपाङ्गहृदये—

विषमे नयुगरेफयकाराः, युजि समे न-ज-ज-र-गुरुवस्तदा पुष्पिताग्रा नाम। इयमप्यौपच्छन्दसिकान्तर्भूतैव विशेषसंज्ञार्थमिहोक्ता ॥ १० ॥

वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥ ११ ॥

विपश्चितः=पण्डिता अपरवक्त्राख्यं वैतालीयमेवेदं वदन्ति। पुष्पिताग्राभिधं छन्द औपछन्दसिकमेव केचिदाहुः। इदं स्वस्यापि सम्मतम्। भावस्तूक्त एव ॥ ११ ॥

स्यादयुग्मके रजौ रयौ समे चे
ज्जरौ जरौ गुरुर्यवात्परा मतीयम् ॥ १२ ॥(१)

विषमपादे र-ज-र-याः, समे ज-र-ज-र-गाः, यवाद्यवशब्दात्परा मती। यवमतीत्यर्थः।

तथा—

सौ लगौ विषमे यदि, सजजा गुरुर्ललिता समे ॥

---

न. न. र. य.
मधुमु—खमिव—सोत्पलं प्रियायाः
। । ।, । । ।, ऽ । ऽ, । ऽ ऽ
न. ज. ज. र. गु.
कलर—णना प-रिवादि-नी प्रिये-व॥
। । ।, । ऽ ।, । ऽ । ऽ । ऽ, ऽ
कुसुमचयमनोरमा च शय्या
किसलयिनी लतिकेव पुष्पिताग्रा ॥

(१) उदाहरणान्तरं यथा मम—

र. ज. र. य.
कामको-टि पीठ-वासिनी मदीये
ऽ । ऽ, । ऽ।, ऽ । ऽ, । ऽ ऽ
ज. र. ज. र. गु.
हृदम्बु—जेऽम्बुज-लणा चि-रं वस-न्ती ॥
। ऽ ।, ऽ । ऽ, । ऽ ।, ऽ । ऽ, ऽ
दुःखजालमाशु मूलतो निहत्य
स्वकीयपादपङ्कजे रतिं ददातु ॥

ओजे तपरौ भरौ जरौ गुरू समे जौं यौं,
कीर्तिता बुधैरियं तु षट्पदाख्या ॥
रो जरौ जसंयुतौ पदे पदेऽथ युग्मे तरौ जरौ गुरुर्मृगी यवानी ॥
अयुजि ननभभाः समकेऽपि तु, नयुगरयुगलं तदा कौमुदी ॥
यदि विषमे भवतो नजौ जरौ, सजयाः समे जगुरू मञ्जुसौरभम् ॥

तथाऽष्टाविंशतिर्लघव एको गुरुरिति विषमः पादः, त्रिंशल्लघव एको गुरुश्चेति समः सा शिखा नाम। इयमेव विपर्यस्तपादा खञ्जा नाम। एते द्वे अपि द्विखण्डकप्रकरणोक्तशिखाखञ्जयोश्छन्दसोः षष्ट्यक्षरतामङ्गीकृत्य यथाश्रुतव्याख्यानेन तदतिरिक्ते अत्र ज्ञेये। यदा त्वस्मदुक्तप्रकारेण तत्र शकलशब्दं पादपरमाश्रित्य व्याख्यायते [तदा] तत्रैवैतयोरुक्तत्वान्नात्र वक्तव्यता भवति ॥ १२ ॥(१)

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां
वृत्तरत्नाकरव्याख्यायामर्धसमाध्यायश्चतुर्थः ॥

---

(१) अत्राऽध्याये यानि जातिद्वयसङ्करेणोत्पन्नानां वृत्तानां लक्षणानि प्रतिपादितानि तेष्वर्धसमत्वमेव। यत्र तु पुनर्जातिद्वयसङ्करो नास्ति तेषूपजातित्वम्। अत्रोक्तिस्तु अर्धसमवृत्तलक्षणकथनप्रसङ्गे अर्धसमसादृश्यहेतुना। यद्युच्येत 'उपजातीनामर्धसमवृत्तेष्वन्तर्भावात् वृत्तानामर्धसमत्वभेदस्वीकारेणैव कार्यनिर्वाहे, उपजातिषु वाऽर्धसमवृत्तानामन्तर्भावात् कार्यनिर्वाहे सति किमर्धसमत्वोपजातिवस्तुद्वयस्वीकारेणेति। तत्रोच्यते। अयि छन्दःशास्त्रविदः! इदं हि पांशुपूरणं युष्माभिः स्थूलदृशां चक्षुष्षु विधातुं शक्यं न सूक्ष्मदृशाम्। यद्भवद्भिरुच्यते 'उपजातीनामर्धसमवृत्तेष्वन्तर्भावाद् वृत्तानामर्धसमत्वभेदस्वीकारेणैव कार्यनिर्वाहे' इति तदसत्, उपजातीनामर्धसमवृत्तेष्वनन्तर्भावात्। अर्धसमभेदस्वीकारेऽपि कार्याऽनिर्वाहात्। यद्यपि यत्रोपजातिषु पादद्वयमेकलक्षणलक्षितम्। अपरपादद्वयं च भिन्नैकलक्षणघटितं तासामुपजातीनामर्धसाम्यादर्धसमवृत्तेष्वन्तर्भावः सम्भवति। तथाऽपि यत्र चरणत्रयस्यैकं लक्षणं एकचरणस्य च भिन्नं लक्षणं तत्रार्धसाम्याभावात् नार्धसमत्वं वक्तुं शक्यते। सर्वेषां चरणानां भिन्नलक्षणलक्षितत्वाऽभावेन विषमत्वमपि न। चरणचतुष्टयस्यैकलक्षणलक्षितत्वाऽभावेन च युष्मन्मते समवृत्तत्वमपि नास्ति, तदेवं तत्र कयापि रीत्या भवतां पलायितुमशक्यतया उपजातिः शरणीकरणीयैव। तत्स्वीकारे च उपजातिलक्ष-

# पञ्चमोऽध्यायः ।

अर्धसमान्यत्राभिधायोद्देशक्रममनुसृत्य विषमवृत्तानि लक्षयति—

मुखपादोऽष्टभिर्वर्णैः
परे स्युर्मकरालयैः क्रमाद्वृद्धैः ॥
सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यं
तदुदितममलमतिभिः पदचतुरूर्ध्वाभिधं वृत्तम् ॥ १ ॥

यस्य वृत्तस्य मुखपाद आद्यपादो वर्णाष्टकेन, परे द्वितीयाः पादा मकरालयैः समुद्रैश्चतुर्भिरक्षरैः क्रमाद्वृद्धैः सततं नैरन्तर्येण स्युस्तद् वृत्तं निर्मलबुद्धिभिः पिङ्गलादिभिः पदचतुरूर्ध्वाभिधमुदितमुक्तम् । किंविशिष्टं तत् । विचित्रैर्विलक्षणैः पादैर्जातं सौन्दर्यं यस्य तत् तादृशम् । अत्र वर्णैरिति सम्पन्नसौन्दर्यमिति च वदता गुरुलघुनिवेशनियमो नास्ति । किं तु श्रोतृश्रोत्रसौभाग्यार्थं वर्णवैचित्र्यं विधेयमिति सूचितम् । प्रथमपादोऽष्टाक्षरः, द्वितयो द्वादशाक्षरः, तृतीयः षोडशाक्षरः, चतुर्थो विंशत्यक्षरः कार्य इति फलितोऽर्थः । अत्र चैकद्वित्रिचतुरङ्कानां परस्परताडनया पादानां परस्परसङ्करे शङ्खचक्रगदापद्मानां परस्परसङ्करे केशवाद्या इव चतुर्विंशतिभेदा भवन्ति । तत्प्रस्तारतो यथा—

| | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ८ | ८ | ८ | ८ | ८ | १२ | १२ | १२ | १२ | १२ | १२ | १६ | १६ | १६ | १६ | १६ | १६ | २० | २० | २० | २० | २० | २० |
| १२ | १६ | २० | १२ | १६ | २० | ८ | १६ | २० | ८ | १६ | २० | १२ | ८ | २० | १२ | ८ | २० | १२ | ८ | १२ | १६ | १६ | ८ |
| १६ | १२ | १६ | २० | २० | १२ | १६ | ८ | १६ | २० | २० | ८ | ८ | १२ | ८ | २० | २० | १२ | १६ | १६ | ८ | ८ | १२ | १२ |
| २० | २० | १२ | १६ | १२ | १६ | २० | २० | ८ | १६ | ८ | १६ | २० | २० | १२ | ८ | १२ | ८ | ८ | १२ | १६ | १२ | ८ | १६ |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ |

णाक्रान्तेष्वेव केषुचिदर्धसमत्वं केषुचिच्चोपजातित्वमित्यर्धजरतीयत्वस्यानौचित्यात्, यत्रोपजातित्वं तत्रोपजातित्वमेव मन्तव्यमित्युचितम् । यच्चोच्यते "उपजातिषु वार्धसमत्वस्यान्तर्भावादुपजातिस्वीकारेणैव कार्यनिर्वाहे" इति तदप्यलीकमेव । जातिद्वयसम्मेलनसम्भूतेषु वृत्तेषु उपजातित्वस्य वक्तुमशक्यत्वात् । सुनिरूपितमेवेदं ( पृ० ७२ ) पूर्वं टिप्पण्यामिति नाऽत्र पुनर्निरूप्यते । अत एव पिङ्गलाचार्यैः "आद्यन्तावुपजातयः" ( पिं० सू० ६-१८ ) इति "वृत्तम्" ( पिं० सू० ५-१ ) इत्युपक्रमे "सममर्धसमं विषमं च" ( पिं० सू० ५-२ ) इति च सूत्रितम् । यदि नाम परस्परस्य परस्परेऽन्तर्भावादेव कार्यनिर्वाहः समभविष्यत् तदा कथमेतत् सूत्रद्वयं समगंस्यत । तस्मान्मदुक्तमेव ज्याय; इत्यलं पल्लवितेन । विस्तरस्तु यथावसरं प्रकाशयिष्यते ।

अत्रैकैकपङ्क्तिस्थितकोष्ठकचतुष्टयस्थिताङ्कसमानाक्षरक्रमिकपादैरेकैको भेदो ज्ञेयः। तत्र प्रथमभेदे मूलस्थितमुदाहरणम्। द्वितीये तु ममैव यथा—

लोभं लम्भय विलयं (८)
लाभालाभावुभौ भावय समानो भव धीरः (१६) ॥
यत्नाद् गुरुजनगौरवमाचर (१२)
यदि तवास्मिन्नमुष्मिश्च लोके यशो विशालमाशास्यं स्यात् (२०) ॥

इदमेवोदाहरणं पादव्यत्ययेनेतरेषु द्वाविंशतिभेदेषु योज्यम् ॥ १ ॥

एतस्यैव प्रतिपादमन्ते गुरुद्वयनियमे संज्ञान्तरमाह—

प्रथममुदितवृत्ते
विरचितविषमचरणभाजि ॥
गुरुकयुगलनिधन इह सहित आङा
लघुविरचितपदवितातियातीरिति भवति पीडः ॥ २ ॥(१)

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

८ अक्ष.
गु. गु.
कुसुमितसहकारे
ऽ ऽ

१२ अक्ष.
गु. गु.
हतहिममहिमशुचिशशाङ्के
ऽ ऽ

१६ अक्ष.
गु. गु.
विकसितकमलसरसि मधुसमयेऽस्मिन्
ऽ ऽ

२० अक्ष.
गु. गु.
प्रवससि पथिकहतक ! यदि भवति तव विपात्तः ॥
ऽ ऽ।

विरचितान्विषमान्विषमसङ्ख्याकान्सरांश्चरणान्भजति, एवंभूते प्रथमोक्ते पञ्चतुरूर्ध्वाभिधे वृत्ते इति सर्वोऽनुवादः, गुरुयुग्मं निधनेऽन्ते यस्य तादृशे सति । स्वार्थे कः । इतीत्थं प्रकार आङा उपसर्गेण सहितः पीडः आपीडो भवतीत्यर्थः । कीदृक् । लघुकृतपदरचनया यतिर्यस्मिन्, अन्ते गुरुद्वयस्य नियतत्वादितरभागे लघुविरचितत्वम् । श्रुतिसुखकरी च स्वेच्छया यतिः कार्येति सूचनाय यतिग्रहणम् । विशिष्टानुवादश्चाष्टाद्यक्षरेष्वेव पादेष्वन्ते गुरुद्वयं कार्यम्, न तु ततोऽतिरिक्तमिति सूचनार्थः । आपीड इति संज्ञायाश्छन्दस्यप्रवेशादाङा सहित इत्युक्तिरीतिः । पूर्वोक्तरीत्यापीडे चतुर्विंशतिप्रकारप्रथमभेदोदाहरणमिदम् । आपीड एव सप्तभाष्टमैकादशान्भेदान्व्युत्पाद्यव्युत्पादनाय व्युत्पादयति प्रथमेति त्रिभिः ॥ २ ॥

प्रथममितरचरणसमुत्थं
श्रयति स यदि लक्ष्म ॥
इरतदितरगदितमपि यदि च तुर्यं
चरणयुगलकमविकृतमपरमिति कलिका सा ॥ ३ ॥

तुर्यशब्देन श्लोकचतुर्थांशः पाद उच्यते । ततश्च प्रथमं तुर्यं प्रथमश्चरणः इतरचरणसमुत्थं स्वाऽनन्तरद्वितीयचरणस्थं लक्ष्म लक्षणं श्रयति, अवलम्बते इतरत्तुर्यं द्वितीयपादे इतरगदितं स्वाऽव्यवहितप्रथमचरणगतं लक्षणं श्रयति, अपरं चरणद्वयं तृतीयचतुर्थरूपमविकृतं यथावस्थितमित्येवंविधा स आपीड एव सा प्रसिद्धा कलिका । यद्वा स आपीडः प्रथमं प्रथमस्थाने प्रथमपादे द्वितीयपादलक्षणं श्रयति सा कलिका । द्वादशाक्षराष्टाक्षरषोडशाक्षरविंशत्यक्षरैः पादैः क्रमेण घटितेति सम्पिण्डितार्थः । पैङ्गले त्वेतस्या मञ्जरीति नाम ॥ ३ ॥

द्विगुरुयुतसकलचरणान्ता
मुखचरणगतमनुभवति च तृतीयः ॥
अपरमिह हि लक्ष्म
प्रकृतमखिलमपि यदिदमनुभवति लवली सा ॥ ४ ॥

तृतीयश्चरणो मुखचरणगतं प्रथमचरणस्थं लक्षणमनुभवत्यवलम्बते । अपरं पादत्रयं प्रकृतमखिलं लक्ष्म आपीडलक्षणं श्रयति तदा लवली नाम । क्रमेण द्वादशाक्षरषोडशाक्षरविंशत्यक्षरपादवतीत्यर्थः । गुरुद्वययुक्तचतुष्टयान्तेति वृत्तपूरणार्थं सामान्यलक्षणमेवानूदितम् ॥ ५ ॥

प्रथममधिवसति यदि तुर्यं, चरमचरणपदमवसितगुरुयुग्मम् ॥
निखिलमपरमुपरिगतमिति ललितपदयुक्ता, तदिदममृतधारा ॥ ५ ॥

प्रथमं तुर्यं प्रथमश्चरणश्चरमचरणपदं चतुर्थचरणस्थानं प्राप्नोति । चतुर्थो भवतीत्यर्थः । अपरनिखिलं प्रथमादिचरणत्रयमापीडप्रथमपादोपरिगतद्वितीयादिपादसमं तदिदं छन्दोऽमृतधारा नाम । अवसितौ गुरुद्वययुक्तमिति इदमित्यस्य विशेषणं सत्पूर्ववत्स्वरूपकीर्तनार्थम् । ललितपदयुक्तेति वृत्तपूरणाय स्वरूपोक्तिः । द्वादशषोडशविंशत्यष्टाक्षरपादक्रमवती भवतीति सङ्कलितार्थः । यद्यपि वृत्तिकारेण प्रथमस्य तृतीयत्वे तृतीयस्य च प्रथमत्वे लवली, प्रथमस्य चतुर्थत्वे चतुर्थस्य च प्रथमत्वेऽमृतधारेति षोडशद्वादशाष्टाविंशत्यक्षरपादक्रमेण विंशतिद्वादशषोडशाष्टाक्षरपादक्रमेण च त्रयोदशैकोनविंशतिभेदयोरेते संज्ञे इति मञ्जर्यां विशेषाऽभावेऽपि उत्तरयोर्विशेष उक्तः, उदाहरणे च तथैव कृते, तथापि "प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधाराः" ( पिं० सू० ५-२४ ) इति सूत्रस्य साधारणत्वात्प्रथमपादमात्रविपर्यासोक्तेरितरेषां क्रमाऽभ्यनुज्ञया वा सूत्रस्य मूलकारोक्त एवार्थे तात्पर्यादेवमुक्तम् । आपीडवत्पदचतुरूर्ध्वेऽपि पादव्यत्यासे मञ्जर्याद्या भेदा ज्ञेयाः । तथा आदावेव सकलपादेषु गुरुद्वययुतं पदचतुरूर्ध्वं प्रत्यापीडः । यथा वृत्तौ—

चित्तं मम रमयति
कान्तं वनमिदमुपगिरिणदि ॥
कूजन्मधुकरकलरवकृतजनधृति,
पुंस्कोकिलमुखरितसुरभिकुसुमचिततरुतति ॥

आदावन्ते च गुरुद्वयसहितं तदेवोभयापीडः । पैङ्गले त्वयमपि प्रत्यापीड एव यथा तत्रैव—

कान्तावदनसरोजं
हृद्यं घनसुरभिमधुरसाढ्यम् ॥
पातुं रहसि सततमभिलषति मनो मे
किञ्चिन्मुकुलितनयनमविरतभणितरमणीयम् ॥

अनयोः पूर्वोक्तविधया चतुर्विंशतित्वमूह्यम् । उदाहरणानि त्वतिविस्तरभयान्नोदाहृतानि स्वयमूह्यानि ॥ ५ ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां
पदचतुरूर्ध्वप्रकरणम् ॥

विषमवृत्तान्तराण्याह—

सजसादिमे सलघुकौ च
नसजगुरुकैरथोद्गता ।
त्र्यङ्घ्रिगतभनजला गयुताः
सजसा जगौ चरणमेकतः पठेत्(१) ॥ ६ ॥

पाद इति शेषः । आदिमे पादे स-ज-स-लघवः । अथाऽनन्तरम्, द्वितीयपादे इत्यर्थः।न-स-ज-गुरुषु सत्सु तृतीयेऽङ्घ्रौ पादे ये भ-न-ज-लघवस्ते गयुता गुरुयुक्ताः कार्या इत्यर्थः । परिशेषाच्चतुर्थे स-ज-सा गणा ज-गुरू च चरणम्। एकवचननिर्देशात्प्रथममेकं चरणमेकत एकीकृत्य द्वितीयेनेत्यर्थात्पठेत् । प्रथमद्वितीयौ पादावविलम्बेन पठेत् । अत्यन्तयतिं न कुर्यादित्यर्थः । सजसमिति द्वन्द्वैकवद्भावः । स्वार्थे कौ । त्रयाणां पूरणेऽङ्घ्रौ गता ये भ-न-ज-लास्ते गयुक्ताः कार्या इति । मध्यमपूरणपदलोपिसमासाश्रयणेन उद्देशविधानाद्बासर्वविधानाच्च तीयप्रत्ययोत्पत्तिरसामर्थ्यं च न भवतीति ज्ञेयम् । एकत इत्येकशब्दो भावप्रधानस्तृतीयार्थे च तसिः । तथा चैक्येनेत्यर्थः । ल्यब्लोपे पञ्चमी वा । प्रथमं द्वितीयेनैकं विधाय पठेदित्यर्थः ॥ ६ ॥

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. ज. स. ल.
मृगलो—चना श-शिमुखी च
।।ऽ, ।ऽ।, ।।ऽ, ।

न. स. ज. गु.
रुचिर—दशना—नितम्बि-नी ॥
।।।, ।।ऽ, ।ऽ।, ऽ.

भ. न. ज. ल.गु.
हंसल—लितग—मना ल-ल-ना
ऽ।।, ।।।, ।ऽ।, ।, ऽ

स. ज. स. ज. ग.
परिणी—यते य-दिभवे—त्कुलोद्ग-ता ॥
।।ऽ, ।ऽ।, ।।ऽ, ।ऽ।, ऽ.

चरणत्रयं व्रजति लक्ष्म
यदि सकलमुद्गतागतम् ॥
नौ भगौ भवति सौरभकं
चरणे यदीह भवतस्तृतीयके ॥ ७ ॥ (१)

स्वार्थे कः । तृतीये चरणे नौ र-गणन-गणौ भ-गुरू च भवतः । चरणत्रयपरिशेषात्प्रथमद्वितीयचतुर्थरूपं उद्गतास्थितं समग्रं लक्षणं भजति, तदेह शास्त्रे सौरभकं भवतीति व्यवहितान्वयाऽध्याहाराभ्यामर्थः ॥ ७ ॥

नयुगं सकाररयुगलं च
भवति चरणे तृतीयके ॥
तदुदितमुरुमतिभिर्ललितं
यदि शेषमस्य खलु पूर्वतुल्यकम् ॥(२)

तृतीयपादे न-न-स-साः, शेषं तृतीयान्यच्चरणत्रयं पूर्वोक्तोद्गतावत्तदा

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. ज. स. ल.
विनिवा-रितोऽपि-नयने—न
। । ऽ, । ऽ ।, । । ऽ, ।
न. स. ज. गु.
तदपि किमिहा-गतो भ- -वान् ॥
। । ।, । । ऽ, । ऽ ।, ऽ
र. न. भ. गु.
एतदे- --व तव सौरभ-कं
ऽ । ऽ, । । ।, ऽ । ।, ऽ
स. ज. स. ज. गु.
यदुदी---रितार्थ--मपिना-वबुध्य---से ॥
। । ऽ, । ऽ ।, । । ऽ, । ऽ ।, ऽ,

(२) उदाहरणान्तरं यथा छन्दोवृत्तौ—

स. ज. स. ल.
सततं---प्रियं व- -दमनू—न-
। । ऽ, । ऽ ।, । । ऽ, ।

बहुदर्शिभिर्ललितं नामोक्तम्। मतेर्विषयबाहुल्येनोक्ता न तु स्वतः। अन्यथा स्थूलबुद्धित्वोक्त्या निन्दैव स्यात्। स्वार्थे कौ। तथोद्गतायाः प्रथमतृतीयपादव्यत्यये मन्थरा नाम। उदाहरणमूह्यमेव ॥ ८ ॥

इति वृत्तरत्नाकरटीकायामुद्गताप्रकरणम् ॥

---

म्सौ ज्भौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्य-
त्रितयं सनजरगास्ततो ननौ सः ॥
त्रिनपरिकलितजयौ
प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ९ ॥(१)

---

न. स. ज. गु.
ममल--हृदयं--गुणोत्त--रम् ॥
। । ।, । । ऽ, । ऽ ।, ऽ
न. न. स. स.
सुललि--तमति---कमनी--यतमं
। । ।, । । ।, । । ऽ, । । ऽ,
स. ज. स. न. गु.
पुरुषं त्यजन्ति न तु जा--तुयोषि--तः ॥
। । ऽ, । ऽ ।, । । ऽ, । ऽ ।, ऽ,

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. स. ज. भ. गु.गु.
रामा का-मकरे--णुका मृ-गायत--ने-त्रा
ऽ ऽ ऽ, । । ऽ, । ऽ ।, ऽ । ।, ऽ ऽ
स. न. ज. र. गु.
हृदयं हरति पयोध--रावन-म्रा ॥
। । ऽ, । । ।, । ऽ ।, ऽ । ऽ, ऽ,
न. न. स.
इयम---तिशय--सुभगा
। । ।, । । ।, । । ऽ,
न. न. न. ज. य.
बहुवि--धनिधु--वन कु--शला ल-लिताङ्गी ॥
। । ।, । । ।, । । ।, । ऽ ।, । ऽ ऽ,

म-स-ज-भ-गगुरवः प्रथमपादः। स चैकः पृथक्पठनीयः, न तूद्गतादिवद् द्वितीयेनैकीकृत्येत्यर्थः। प्रथमार्थे तसिः। अन्यच्चरणत्रयं कथ्यत इति शेषः। स-न-ज-र-गुरुभिर्द्वितीयः पादस्तदनन्तरं तृतीयपादे न-नौ स-गणश्च। त्रिभिर्नगणैः परिकलितौ सहितौ ज-यौ गणौ चतुर्थे पादे। इदं छन्द उपस्थितपदपूर्वं प्रचुपितम्। उपस्थितप्रचुपितमित्यर्थः। अन्यस्तु प्रथमोऽङ्घ्रिरेकः केवलः पठनीयः। अन्यत्तु चरणत्रयं पृथक्कथनाद्भिन्नत्वेनैकीकृत्य पठनीयम्। न तु तत्प्रतिचरणान्तं विरामः कार्यः, ततः "श्लोकार्धे तु विशेषतः" इत्यस्यापवादोऽयमिति व्याचख्यौ॥ ९॥

नौ पादेऽथ तृतीयके सनौ नसयुक्तौ
प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम्॥
त्रितयमपरमपि पूर्वसदृशमिह भवति
प्रततमतिभिरिति गदितं लघु वृत्तम॥१०॥(१)

तृतीयपादे नौ नगणौ, अथ ततः स-नौ सगणनगणौ नसगणाभ्यां युक्तौ एवं षड् गणा भवन्ति। अपरं पादत्रयं प्रथमद्वितीयचतुर्थरूपमुपस्थितप्रचुपिततुल्यमेव भवति। इत्यमुना प्रकारेण प्रसिद्धधीभिर्लघु सुन्दरं वर्धमानं नाम वृत्तमुदितमुक्तम्। प्रथमाङ्घ्रौ कृतया यत्या प्रस्तूयते प्रशस्यते प्रशस्ततया पठ्यते तत्तादृगिति वर्धमानविशेषणम्। तुगभावस्तु "आग-

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ--

म. स. ज. भ. गु.गु.
बिम्बोष्ठी--कठिनो--न्नतस्त--नावन--ता-ङ्गी
ऽ ऽ ऽ, । । ऽ, । ऽ ।, ऽ । ।, ऽ, ऽ
स. न. ज. र. गु.
हरिणी--शिशुन--यना नि--तम्बगु--र्वी॥
। । ऽ, । । ।, । ऽ ।, ऽ । ऽ, ऽ
न. न. स. न. न. स.
मदक--लकरि--गमना परिण--तशशि--वदना
। । ।, । । ।, । । ऽ, । । ।, । । ।, । । ऽ
न. न. न. ज. य.
अनय--ति मम मनसि मुदं म--दिराक्षी॥
। । ।, । । ।, । । ।, । ऽ ।, । ऽ ऽ,

मजमनित्यम्॥ इतिस्मरणात् । तु इति भिन्नपदे तु यतिरित्यन्तं पुल्लिङ्गं स्त्रीलिङ्गं वानन्वितं स्यात् । यतीहेति तु पाठो निर्दोषः । अयं च पूर्वोक्तानुवाद एवेति व्याख्याद्वयं तद्वदेव ज्ञेयम् ॥ १० ॥

अस्मिन्नेव तृतीयके यदा तजराः स्युः
प्रथमे च विरतिरार्षभं ब्रुवन्ति ॥
तच्छुद्धविराट् पुरः स्थितं
त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥११॥(१)

अस्मिन्वर्धमाने एव उपस्थितप्रचुपिते वा तृतीयपादे यदि त-ज-र-गणास्त्रयः स्युरपरं च चरणत्रयमुपस्थितप्रचुपितवत्स्यात्, तच्छुद्धविराडिदं पुरः स्थितं पूर्वं वर्तमानं यस्य तादृशमार्षभं शुद्धविराडार्षभं नाम ब्रुवन्ति वृद्धाः । संज्ञाया वृत्तेऽप्रवेशादुक्ते रीतिरियं प्रथमे पादे यतिरिति पूर्ववदेवार्थः । पैङ्गले तु शुद्धविराडूवृषभमिति संज्ञा । केचित्तु प्रथमे पादे यतावार्षभम् । यदा तु प्रतिपादं यतिस्तदा शुद्धविराडादिकं तदेव यतिभेदाच्छन्दोद्वयमेव पृथग्वदन्ति ॥ ११ ॥

इत्युपस्थितप्रचुपितप्रकरणम् ॥

---

(१) उदाहरणान्तरं यथा छन्दोवृत्तौ—

म. स. ज. भ. गु.गु.
कन्येयं कनको—ज्वला म—नोहर—दी-प्तः
S S S, I I S, I S I, S I I, S, S

स. न. ज. र. गु.
शशिनि—र्मलव—दना वि—शालने—त्रा ॥
I I S, I I I, I S I, I S S, S

त. न. र.
पीनोरु—नितम्ब—शालिनी
S S I, I S I, S I S

न. न. न. ज. य.
सुखय—ति हृद—यमति—शयं त—रुणानाम् ॥
I I I, I I I, I I I, I S I, I S S

अत्र ग्रन्थेऽनुक्तानि च्छन्दांसि सामान्यसंज्ञया गृह्णाति—

विषमाक्षरपादं वा पादैरसमं दशधर्मवत् ।
यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥ १२ ॥

विषमाण्यक्षराणि येषु तादृशाः पादा यस्य तत् । तथा अक्षराणां वैषम्यं च पादेषु गुरुलघुक्रमनियमसाम्याभावात्सङ्ख्यासाम्याभावाच्च । वा अथवा । पादैरसमं स्वीयैः पादैः कृत्वा चतुःसङ्ख्याकपादैरन्यवृत्तर-तुल्यं त्रिपञ्चषडादिपादमिति यावत् । न तु समसङ्ख्याकपादरहितमि-त्यर्थः । षट्पदाद्यसङ्ग्रहापत्तेः । अत एव—

शेषं गाथास्त्रिभिः षड्भिश्चरणैश्चोपलक्षिताः । ( वृ०र०१-१८ )

इति प्रागुक्तम् । विषमाक्षरपादत्वं पदचतुरूर्ध्वादीनामप्यस्तीति तेषां गाथात्वं निवारयितुमाह—यदिति । अत्र यच्छन्दो विशेषतो नोक्तं तदि-त्यर्थः । इदं चावृत्त्या स्वातन्त्र्येणाऽपि योज्यम् । तेन समाक्षरपादानां समपादानां च कुड्मलदन्त्यादीनामपि गाथात्वं सिध्यति । अत एव "अ-त्रानुक्तं गाथा" (पि०सू०८-१) इति सम्मुग्धाकारेण सूत्रितं पिङ्गलेन । वि-षमाक्षरपादस्य गाथात्वेऽष्टदशसप्तनवाक्षरमूलकारिकैवोदाहरणम् । पादै-रसमत्वे उदाहरणमाह—दशधर्मवदिति । दशधर्मशब्दयोगाल्लक्षणया भा-रतस्था षट्पदा गाथा दशधर्मशब्देनोच्यते । सा यथा—

दश धर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश । इति ।

असमपादानां दशाष्टादशादिपदानां नाटकादिस्थनान्द्यादीनामप्य-नेन गाथात्वमुक्तं भवति । यथोक्तम्—

शब्दतो वार्थतो वापि मनाक्काव्यार्थसूचना ।
यत्राष्टभिर्वा दशभिरष्टादशभिरेव वा ॥
षड्विंशत्या पदैर्वापि सा नान्दी परिकीर्तिता । इति ।

'यच्छन्दो नोक्तम्' इत्यस्य स्वातन्त्र्येण व्याख्याने समानामपि गाथात्वं भवति । तत्र कियतीनां वृत्त्यादिपर्यालोचनयोदाहरणानि सलक्षणानि क-थ्यन्ते । तत्र त्रिष्टुभि—'भतनगगुरुभिः कुड्मलदन्ती नाम' । यथा—

कुड्मलदन्ती विकटनितम्बा किन्नरकण्ठी लघुतरमध्या ।
बिम्बफलोष्ठी मृगशिशुनेत्रा मित्र ! भवन्तं सुखयतु कान्ता ॥

अत्र पञ्चभिः षड्भिश्च यतिः । जगत्याम्—'नजजरैर्वरतनुः' । यथा—

अयि ! विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु ! वल्लभम् ।
अरुणकरोद्गम एष वर्तते वरतनु ! सम्प्रवदन्ति कुक्कुटाः ॥

षड्भिः षड्भिश्च यतिः । 'मभसमैर्जलधरमाला । यथा—

धत्ते शोभां कुवलयदामश्यामे शैलोत्सङ्गे जलधरमाला नीला ।
विद्युल्लेखा कनकधृतालङ्कारा क्रीडासक्ता युवतिरिवाङ्के पत्युः ॥

चतुर्भिरष्टाभिश्च यतिः । "नौ रौ गौरी ।" यथा—

प्रणमत चरणारविन्दद्वयं त्रिभुवननमितस्य गौरीपतेः ।
सकृदपि मनसैव यः सेवितः प्रवितरति यथेष्टमष्टौ गुणान् ॥

एतस्या एव गौर्या दण्डकात्प्रागेकैकरेफवृद्धौ नामान्तराणि भवन्ति ॥

"भतनसा ललना ।" यथा—

या कुचगुर्वी मृगशिशुनयना पीननितम्बा मदकरिगमना ।
किन्नरकण्ठी सुललितदशना सा तव सौख्यं वितरतु ललना ॥

पञ्चभिः सप्तभिश्च यतिः । अतिजगत्याम्-"सजसजगैः कनकप्रभा" । यथा—

कनकप्रभा पृथुनितम्बशालिनी विपुलस्तनी हरिणशावकेक्षणा ।
इयमङ्गना नयनयोः पथि स्थिता कुरुते न कस्य मदनातुरं मनः ॥

"ननततगुरुभिः कुटिलगतिः" । यथा—

अधरकिसलये कान्तदन्तक्षते हरिणशिशुदृशां नृत्यति भ्रूयुगम् ।
ध्रुवमिदमुचितं यद्विपत्तौ सतामतिकुटिलमतेः स्यान्महानुत्सवः ॥

सप्तभिः षड्भिश्च यतिः । शक्कर्याम्-"भजसनैर्गुरुभ्यां च वरसुन्दरी" । यथा—

स्वादुशिशिरोज्ज्वलजलैः सुपरिपूर्णं
वीचिचयचञ्चलविचित्रशतपत्रम् ॥
हंसकलकूजितमनोहरतटान्तं
पश्य वरसुन्दरि ! सरोवरमुदारम् ॥

"मभनयगगैः कुटिलम्" । यथा—

अध्वन्यानां जनयति सुखमुच्चैः कूज-
न्दात्यूहोऽयं पथि निचुलिनि तोयोपान्ते ॥
कर्णाटस्त्रीरतिकुहरिततुल्यच्छेदै-
र्नादैः कण्ठस्खलनकुटिलमन्द्रावर्तैः ॥

वेदै रसैः समुद्रैश्च यतिः । अष्टौ-"भरनभभगैः शैलशिखा ।" यथा-

शैलशिखानिकुञ्जशयितस्य हरेः श्रवणे
जीर्णतृणं करेण निदधाति कपिश्चपलः ॥
क्षुद्रवधापवादपरिहारविनीतरुष-
स्तस्य न तावतव लघुता द्विपयूथभिदः ॥

"भरयननगैर्वरयुवती।"

कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला
पार्वणशर्वरीशगर्वापहमुखकमला ॥
पीननितम्बबिम्बसम्वाहनशिथिलगति-
र्मुञ्जनराधिराज! भूयात्तव वरयुवतिः ॥

अत्यष्टौ-"ससजभजगगैरतिशायिनी।" यथा माघे—

इति धौतपुरन्ध्रिमत्सरान्सरसि मज्जनेन
श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः ॥

अवलोक्य तदैव यादवानपरवारिराशेः
शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीशे ॥ (शि०८-७१)

दशभिः सप्तभिश्च यतिः। "नजभजजलगैरवितथम्।" यथा—

श्रुतिपरिपूर्णवक्त्रमतिसुन्दरवाग्विभवं
तमखिलजैमिनीयमतसागरपारगतम् ॥
अवितथवृत्तविप्रजनपूजितपादयुगं
पितरमहं नमामि बहुरूपमुदारमतिम् ॥

एतदेवाष्टपञ्चचतुर्भिर्यतौ कोकिलकं नाम यथा—

नवसहकारपुष्पमधुनिष्कलकण्ठतया
मधुरतरस्वरेण परिकूजति कोकिलकः ॥
प्रथमककारविद्धवचनैर्धनलुब्धमते!
तव गमनस्य भङ्गमिव सम्प्रति कर्तुमनाः ॥

धृतौ—"रसजजभरैर्विबुधप्रिया"। यथा—

कुन्दकोमलकुड्मलद्युतिदन्तपङ्क्तिविराजिता
हंसगद्गदवादिनी वनिता भवेद्विबुधप्रिया ॥
पीनतुङ्गपयोधरद्वयभारमन्थरगामिनी
नेत्रकान्तिविनिर्जितश्रवणावतंससितकैरवा ॥

अष्टभिर्दशभिश्च यतिः। अतिधृतौ—"यमनसररगुरुभिर्विस्मिता"।
यथा माघे—

श्रिया जुष्टं दिव्यैः सपटहरवैरन्वितं पुष्पवर्षै-
र्वपुष्टश्चैद्यस्य क्षणमृषिगणैः स्तूयमानं निरीय ॥
प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षै-
र्नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे ॥ (शि०२०-७१)

षड्भिः षड्भिः सप्तभिश्च यतिः। प्रकृतौ—"नजभजजजरैर्धृतश्रीः"।

यथा माघे—

तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ॥
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरविगतश्रियो जलनिधेश्च तदाऽभवदन्तरं महत् ॥ (शि०३-८२)

त्रिःसप्तसु यतिः । एवमादीनि वृत्तानि प्रस्तारमहाकविप्रयोगेषु दृश्यमानानि गाथाख्यानि । यदा तु 'यच्छन्दो नोक्तमत्र' इति विषमाक्षरपादमित्यस्य विशेषणं तदा समच्छन्दसां गाथात्वाभावादेतानि त्रिष्टुब्बादिष्वेव द्रष्टव्यानि । एवमन्यान्यपि च्छन्दांसि कविप्रयोगानुरोधाज्ज्ञेयानि, समार्धसमविषमप्रस्तारेषु तेषामुपलम्भात् । विशेषसंज्ञाऽज्ञानात्तु नोदाहृतानि ।

एतज्जातिवृत्तात्मना द्विविधमपि च्छन्दो न केवलं संस्कृतविषयम् । किंतु प्राकृतदेशभाषास्वपि कवीच्छया भवति । तत्रार्यैव प्राकृतादिषु गाथेति संज्ञिता सा । तथा ममैव—

सअलसिणेहमिअङ्को तुइ गुणरअणाअरे उदिदो ।
णीलुप्पलप्पवोहे सिढिलो मा भोदु पच्छणा एसा ॥
(सकलस्नेहमृगाङ्कस्त्वयि गुणरत्नकारे उदितः ।
नीलोत्पलप्रबोधे शिथिलो मा भवतु प्रार्थनैषा ॥ )

वैतालीये च शकुन्तलायां यथा—

शहजे किल जे विणिन्दिए ण हु दे कम्म विवज्जणीअए ।
पशुमालणकम्मदालुणे अणुकम्पामिदुए व्व शोत्तिए ॥
( सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम् ।
पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ॥ )

एवं समादिष्वपि कर्पूरमञ्जर्यादौ ज्ञेयान्युदाहरणानि, भाषायामपि । तत्र महाराष्ट्रभाषायामुपजातौ यथा—

अगा ! मुरारी भवदुःख भारी कामादिवैरी मन हें थरारी ॥
मी मूढ देवा न करींच सेवा माझा कुठावा परि तां करावा ॥

गुर्जरभाषायामपि स्रग्विणी यथा—

वित्ततें संचवूं युक्ततें भोगवूं अग्नितें होमवूं विप्रतें आपवूं ॥
पापतें खण्डवूं कामतें दण्डवूं पुण्यतें संचवूं रामतें सेववूं ॥

कान्यकुब्जभाषायामपि वसन्ततिलका यथा—

कन्दर्परूप जबतें तुम लीह्न कृष्ण !
से कोप काम हमही बहु पीर छोडी ॥

तो भेटिकै विरहपीर नसाउ मोरी
यौं भांति दूति पठई कहि बात गोपी ॥

म्लेच्छसङ्करे मालिन्यां यथा कस्यचित्–

हरनयनसमुत्थज्वालया वह्नि जलाया
रतिनयनजलौघैः खाक बाकी बहाया ॥
तदपि दहति चेतो मामकं क्या करोंगी
मदनशिरसि भूयः क्या बला आन लागी ॥

एवं गौडादिभाषासु तत्तत्सङ्करे चोदाहरणानि ज्ञेयानि।

अथ "शेषं गाथा" इति सामान्यत उपक्षिप्तानि विस्तरभीतेर्विशेषतो नोक्तानि प्राकृतादिषु प्रायः परिदृष्टानि च्छन्दांसि प्राकृतपिङ्गलशम्भुच्छन्दश्चूडामण्यादिग्रन्थपर्यालोचनया व्युत्पित्सुव्युत्पत्त्यर्थमस्माभिरुच्यन्ते। तत्र मात्राच्छन्दःसूपयुक्ता गणभेदाः। तत्र द्विकलौ द्वौ। यथा—[१]ऽ, [२]। ।, त्रिकलास्त्रयः [१]। ऽ, [२]ऽ ।, [३]। । । चतुष्कलाः "पञ्चार्यादिषु संस्थिताः" (वृ.र.१–८) इत्यत्र पञ्च मूल एव पूर्वमुक्ताः। पञ्चकला अष्टौ [१]। ऽ ऽ, [२]ऽ । ऽ, [३]। । । ऽ, [४]ऽ ऽ ।, [५]। । ऽ ।, [६]। ऽ । ।, [७]ऽ । । ।, [८]। । । । ।, षट्कलास्त्रयोदश यथा [१]ऽ ऽ ऽ, [२]। । ऽ ऽ, [३]। ऽ । ऽ, [४]ऽ । । ऽ, [५]। । । । ऽ, [६]। ऽ ऽ ।, [७]ऽ । ऽ ।, [८]। । । ऽ ।, [९]ऽ ऽ । ।, [१०]। । ऽ । ।, [११]। ऽ । । ।, [१२]ऽ । । । ।, [१३]। । । । । ।, एतेषां व्यवहारार्थं संज्ञास्तास्तास्तैस्तैः कृतास्ता अत्यन्तोपयोगाभावाद् द्विककलादिशब्दैरेव व्यवहारसिद्धेर्ग्रन्थविस्तरभयान्नोच्यन्ते। गौरवात्षट्कलस्य हरि–शशि–सूर्य–शक्र–शेष–अहि–कमल–ब्रह्म–कलि–चन्द्र–ध्रुव–धर्म–शालि–करसंज्ञाः।

---

अथ गाथाप्रकरणम्। तत्र चतुःपञ्चाशद्भिर्मात्राभिर्गाहूः, सप्तपञ्चाशद्भिर्गाथा। विपरीतार्धघटिताभिस्तावतीभिरेव विगाथः। षष्टिमात्र उद्गाथः। द्विषष्टिमात्रा गाहिनी। सैव विपरीतार्धा द्विषष्टिमात्रा सिंहिनी। चतुःषष्टिमात्राभिः स्कन्धक इति सप्त भेदाः। तत्र यदार्धद्वयेऽपि सप्त सार्धाश्चतुर्मात्रिका गणाः षष्ठगणस्त्वेकलघुरूपस्तदा गाहूः। अत्र उदाहरणम्—

चन्दो चन्दणहारो तावअ रूअं पआसन्ति।
चण्डेसरस्स कीती जावअ अप्पं न दंसेइ ॥
( चन्द्रश्चन्दनहारस्तावद्रूपं प्रकाशयतः।
चण्डेश्वरस्य कीर्तिर्यावदात्मानं न दर्शयति ॥ )

संस्कृते त्वियमुपगीतिः। आर्यैव प्राकृते गाथा। उदाहरणं ममैव प्रागुक्तम्। तदुक्तम्—

पढमं बारह मत्ता बीए अट्ठारहेहिं संजुत्ता।
जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा॥
( प्रथमं द्वादश मात्रा द्वितीयेऽष्टादशभिः संयुक्ता।
यथा प्रथमं तथा तृतीयं दशपञ्चविभूषिता गाथा॥ इति। )

तत्र यदि सप्तविंशतिर्गुरवस्त्रयश्च लघव इत्येवं त्रिंशदक्षरा तदा लक्ष्मीनाम्नी। षड्विंशतिर्गुरवः पञ्च लघवस्तदा ऋद्धिः। एवमेकगुरुपञ्चपञ्चाशल्लघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ च त्रिंशदक्षरकं भेदमारभ्य षट्पञ्चाशदक्षरभेदपर्यन्तं सप्तविंशतिर्भेदाः। क्रमेण तन्नामानि–लक्ष्मी–ऋद्धि–बुद्धि–लज्जा–विद्या–क्षमा–गौरी–देही–रात्रि–पूर्णा–च्छाया–कान्ति–महामाया–कीर्ति–सिद्धा–मानी–रामा–गाहिनी–विश्वा–वासिता–शोभा–हरिणी–चक्री–सारसी–कुररी–सिंही–हंसी (२७) इति। त्रयोदशलघुपर्यन्तं विप्रा, तत एकविंशतिलघ्ववधि क्षत्रिया, ततः सप्तविंशत्यवधि लघुभिर्वैश्या, ततः सर्वा शूद्रेति गाथाजातिः। गाथान्तर्गतेनैकेन जगणेन कुलीना गाथा भवति। द्वाभ्यां कुलटा। बहुभिर्वेश्या जगणरहिता रण्डा। तत्रापि या प्रथमादिविषमादिस्थाने जगणयुक्ता सा गुर्विणीति संज्ञिता कर्तुर्नायकस्य च दुष्टा भवति। सर्वासां गाथानां प्रथमपादो हंसीवन्मन्थरः पठनीयः, द्वितीयः सिंहविक्रमवदुद्धतः, तृतीयो गजगतिवल्ललितः, चतुर्थः सर्पगतिवच्चञ्चल इति। गाथाद्वितीयार्धं यदि प्रथमं प्रथमं च द्वितीयं तदा विगाथः। इयं संस्कृते उद्गीतिः। यथा—

परिहर माणिणि! माणं पेक्खहि कुसुमाइं णीवस्स।
तुम्ह कए खरहिअओ गेण्हइ गुलिआइ धणुइ किर कामो॥
( परिहर मानिनि! मानं प्रेक्षस्व कुसुमानि नीपस्य।
तव कृते खरहृदयो गृह्णाति गुलिका धनुषि किल कामः॥ )

तथा द्वयोरप्यर्धयोस्त्रिंशन्मात्रा गाथा प्रथमार्धवद्यदि भवति तदोद्गाथः। यथा—

सोऊण जस्स णामं अंसू णअणाइं सुमुहि! रुन्धन्ती।
भण वीरचेइवइणो पेक्खामि मुहं कहं जहिच्छं से॥
( श्रुत्वा यस्य नामाश्रूणि नयने सुमुखि! रुन्धन्ति।
भण वीरचेदिपतेः पश्यामि मुखं कथं यथेच्छं तस्य॥ )

इयमेव संस्कृते गीतिः। तथा पूर्वार्धे त्रिंशन्मात्रा गाथावत् उत्तरार्धे

एकगुर्वाधिक्येन द्वात्रिंशत् तदा गाहिनी । अर्धवैपरीत्ये च सिंहिनी । क्रमेणोदाहरणे—

मुञ्चहि सुन्दरि ! पाअं अप्पहि हसिऊण सुमुहि ! खग्गं मे
कप्पिअ मेच्छसरीरं पेच्छिइ वअणाइ तुम्म धु अहं वीरो ॥
( मुञ्च सुन्दरि ! पादमर्पय हसित्वा सुमुखि ! खड्गं मे ।
कल्पयित्वा म्लेच्छशरीरं प्रेक्षिष्ये वदनं तव ध्रुवमहं वीरः ॥ )
वरिसइ कणअह विट्ठी तप्पइ भुअणे दिआणिसं जागन्तो ।
णीसङ्क साहसङ्को णिन्दइ इन्दं अ सूरबिम्बं अ ॥
( वर्षति कनकस्य वृष्टिं तपति भुवने दिवानिशं जाग्रत् ।
निःशङ्कं साहसाङ्को निन्दति इन्द्रं च सूरबिम्बं च ॥ )

एते संस्कृते ललितावल्गु गीतिसंज्ञे । तथार्धद्वयेऽपि चतुर्मात्रिकाष्टगणघटितं स्कन्धकं सेतुकाव्ये यथा—

जं जं आणेइ गिरिं रइरहचक्कपडिघट्टणसहं हणुमा ।
तं तं लीलाइ णलो वामकरत्तोल्लिअं रएइ समुद्दे ॥
( यं यमानयति गिरिं रविरथचक्रपरिघट्टनसहं हनुमान् ।
तं तं लीलया नलो वामकरोत्तोलितं रचयति समुद्रे ॥ )

इयमेव संस्कृते आर्यागीतिः । अत्र यद्यष्टाविंशतिर्गुरवः, अष्टौ लघवस्तदा नन्दसंज्ञा । तत एकगुरुह्रासे द्विषष्टिलघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ चाष्टाविंशतिर्भेदाः । तेषां क्रमेण संज्ञाः—नन्द-भद्र-शेष-सारङ्ग-शिव-ब्रह्म-चारण-वरुण-नील-मदन-तालङ्क-शेखर-शर-गगन-शरभ-विमति-क्षीर-नगर-नर-स्निग्ध-स्नेहन-मदकल-लोभ-शुद्ध-सरित्-कुम्भ-कलश-शशधराख्याः । तत्र नन्दोदाहरणम्—

चन्दा कुन्दा कासा हारा हंसा तिलोअणा केलासा ।
जेत्ता जेत्ता सेत्ता तेत्ता कासीस जिणिअ ते कित्ती ॥
(चन्द्रः कुन्दः काशो हारो हंसस्त्रिलोचनः कैलासः ।
यावद्यावच्छ्वेतं तावत्काशीश जितं ते कीर्त्या ॥ )

एवमन्येष्वपि भेदेषु ज्ञेयम् ।

इति गाथाप्रकरणम् ॥

---

अथ दोहा ।

यस्याः प्रथमतृतीययोः पादयोः प्रथमं षट्कलो गणः, ततश्चतुष्कलः, ततस्त्रिकल इत्येवं त्रयोदश मात्राः, द्वितीयचतुर्थयोः षट्कलचतुष्कलौ समानौ त्रिकलस्थाने एको लघुरेवेत्येकादशमात्रास्तदिदमष्टाचत्वारिंशन्मात्राभिर्दोहाच्छन्दः । यथा—

सुरअरु सुरही परसमणि णहि वीरेससमाण ।

ओ वक्कल ओ कठिणतणु ओ पसु ओ पाखाण ॥
( सुरतरुः सुरभिः स्पर्शमणिर्नहि वीरेशसमानः ।
स वल्कलः स कठिनतनुः स पशुः पाषाणः ॥ )

अत्र द्वाविंशतिर्गुरवश्चत्वारो लघवो यत्र तद् भ्रमरम् । तत एकगुरुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ च त्रयोविंशतिर्नामानि । यथा—भ्रमर-भ्रामर-शरभ-श्येन-मण्डूक-मर्कट-करभ-नर-मराल-मदकल-पयोधर-वल-वानर-त्रिकल-कच्छप-मत्स्य-शार्दूल-अहिवर-व्याघ्र-बिडाल-श्व-उन्दुर-सर्पेति । सर्पे अष्टाचत्वारिंशल्लघव एव । तत्र भ्रमरोदाहरणम्—

जा अद्धङ्गे पव्वई सीसे गङ्गा जासु ।
जो देआणं वल्लहो वन्दे आअं तासु ॥
( यस्यार्धाङ्गे पार्वती शीर्षे गङ्गा यस्य ।
यो देवानां वल्लभो वन्दे पादौ तस्य ॥ )

तत्रापि द्वादशावधिलघुका विप्रा । ततो द्वाविंशत्यवधिलघुका क्षत्रिया । द्वात्रिंशदवधिलघुका वैश्या । इतरा शूद्रेति । तथा यस्याः प्रतिपादं प्रथमे तृतीये च चरणे जगणः सा दुष्टा दोहेति।

इति दोहाप्रकरणम् ॥

---

अथोत्कच्छा ।

प्रथमं चतुष्कलौ द्वौ गणौ, ततस्त्रिकल एकः, एवमेकादशमात्रारचितपादषट्कयुक्तोत्कच्छा । तत्रापि सर्वैर्लघुभिर्लौहाङ्गिनीनाम । ततश्चतुश्चतुर्गुरुवृद्धौ अष्टाष्टलघुह्रासे दशपर्यन्तं हंस्यादीनि । लौहाङ्गिनी लघवः ६६, हंसी गुरु, ४ लघवः ५८ रेखा गुरु ८ लघवः ५०, तालङ्किनी गुरु १२ लघवः ४२, कम्पी गुरु १६ लघवः ३४, गम्भीरा गुरु २० लघवः २६, काली गुरु २४ लघवः १८, कालरुद्राणी गुरु २८ लघवः १०, एवमष्टौ भेदाः । तत्र लौहाङ्गिनी यथा—

विमुहचलिअ रण अचलु
परिहरिअ हअगअबलु ।
हलहलिअ मलअणिवइ
जसु जस तिहुअण पिवइ ।
वणरसिणरवइ लुलिअ
सअल उवरि जस फुरिअ ॥
( विमुखचलितो रणेऽचलः
परिहृत्य हयगजबलम् ।
हलहलितो मलयनृपति-
र्यस्य यशस्त्रिभुवनं पिबति ।

वाराणसीनरपतिर्लुलितः
सकलोपरि यशः स्फुरितम् ॥

एवं सर्वेषूह्यम्।

इत्युत्कच्छा ॥

---

अथ रोला।

यथेच्छं गुरुलघुभिश्चतुर्विंशतिमात्राः प्रतिचरणं भवन्ति, एवं पादचतुष्टययुता रोला। यथा—

पअभरदरदरु धरणी तरणिरह धुलिहिं झम्पिअ।
कमठपीठ धरपडिअ मेरुमन्दरसिर कम्पिअ ॥
कोहे चलिअ हम्मीरवीर गअजूहजुत्तो।
कट्टे किअउ आक्कन्द मुच्छि मेच्छके पुत्तो ॥
( पदभरदरदरिता धरणी तरणिरथो धूलिभिराच्छादितः।
कमठपीठं धरापतितं मेरुमन्दरशिरः कम्पितम् ॥
क्रोधेन चलितो हम्मीरवीरो गजयूथयुक्तः।
कष्टेन कृत आक्रन्दो मूर्च्छितो म्लेच्छपुत्रः ॥ )

अत्र एकादश गुरवो द्वौ लघू यदि पादे तदा रोला शुद्धा। प्रतिपादमेकैकगुरुह्रासे लघुद्वयवृद्धौ च करतालादिसंज्ञा भेदा द्वादश। यथा—कुन्द-करताल-मेघ-तालङ्क-काल-रुद्र-कोकिल-कमल-इन्द्र-शंभु-चामर गणेश्वरेति।

इति रोला ॥

---

अथ गन्धा।

प्रथमपादे सप्तदशवर्णाः, द्वितीयेऽष्टादश। मात्रासु त्वनियमः। द्वितीयार्धमपि तादृगेव सा गन्धा।

कएण चलन्ते कुम्म चलइ पुणवि असरणा।
कुम्म चलन्ते महि चलइ भुअणभअकरणा ॥
महिअ चलन्ते महिहरु तह अ सुरअणा।
चक्कवइ चलन्ते चलइ चक्क जह,तिहुअणा ॥
(कर्णे चलति कूर्मश्चलति पुनरप्यशरणे।
कूर्मे चलति मही चलति भुवनभयकरणी ॥
मह्यां चलन्त्यां महीधरस्तथा च सुरगणाः।
चक्रवर्तिनि चलति चलति चक्रं यथा त्रिभुवनम् ॥)

इति गन्धा ॥

---

अथ चतुष्पदा ।

चतुर्मात्राः सप्तगणा गुरुश्चेति त्रिंशन्मात्र एकः पादः, तादृशा एवान्ये त्रयः, एवं विंशत्यधिकशतं मात्रा भवन्ति । एवं चतुर्भिः पादैरेकः पादस्तादृशैश्चतुर्भिः पादैश्चतुःशतान्यशीत्यधिकानी मात्राः । एतावता चतुष्पदा भवति । तत्र लाघवाय एकपादोदाहरणम्—

जसु सीसह गङ्गा गोरि अधङ्गा गिम पिन्धिअ फणिहारा ।
कण्ठे ठ्ठिअ बीसा पिन्धण दीसा संतारिअ संसारा ॥
किरणावलिकन्दा बन्दिअ चन्दा णअणहि अणल फुरन्ता ।
सो मङ्गल दिज्जउ बहुसुह किज्जउ तुज्झ भवाणीकन्ता ॥
( यस्य शीर्षे गङ्गा गौरी अर्धाङ्गे ग्रीवायां पिनद्धः फणिहारः ।
कण्ठे स्थितं विषं परिधानं दिशः सन्तारितसंसारः ॥
किरणावलिकन्दो वन्दितश्चन्द्रः नयनेऽनलः स्फुरति ।
स मङ्गलं ददातु बहु सुखं करोतु तव भवानीकान्तः ॥ )

एतस्यानन्ता एव भेदाः ।

इति चतुष्पदा ॥

---

अथ घत्ता ।

चतुर्मात्रैः सप्तभिर्गणैस्त्रिभिर्लघुभिश्चैकः पादः । तत्र प्रथमं दशमात्रासु विरतिः, ततोऽष्टसु, ततस्त्रयोदशसु, एवंप्रकारकपादचतुष्टयेन घत्ता नाम । यथा—

रण दक्ख दक्ख हणु जिणु कुसुमधणु
अन्धअगन्धबिणासकरु ।
सो रक्खउ सङ्करु असुरभअङ्करु
गोरिनारि अद्धङ्गधरु ॥
( रणे दक्षो दक्षो हतो जितः कुसुमधनु-
रन्धकगन्धविनाशकरः ।
स रक्षतु शङ्करः असुरभयङ्करो
गौरीनार्यर्धाङ्गधरः ॥ )

इति घत्ता ॥

---

अथ घत्तानन्दः ।

षट्कल आदौ, ततस्त्रिकलास्त्रयः, ततः पञ्चकलः, ततः षट्कलः, ततो लघुद्वयम् । एवंप्रकारकपादचतुष्टयेन द्विषष्टिमात्रको घत्तानन्दः । एकादशसु सप्तसु त्रयोदशसु च यतिः । यथा—

जे वन्दिअ सिर गङ्ग हणिअ अणङ्ग
अद्धङ्गे परिकर धरणु ।

सो जोईजणमित्त हरेउ दुरित्त
सङ्काहरु सङ्करचरणु ॥
( येन वन्दिता शिरसि गङ्गा हतोऽनङ्गोऽर्धाङ्गे परिकरं धरति ।
स योगिजनमित्रं हरतु दुरितं शङ्काहरः शङ्करचरणः ॥'
इति घत्तानन्दः ॥

---

अथ षट्पदप्रकरणम् ।

काव्यनाम्नश्छन्दसः पादचतुष्टयेनोल्लालनाम्नः पादद्वयेन च षट्पदं भवति । प्रथमं द्वे मात्रे, ततः पञ्च चतुर्मात्रा गणाः, ततो द्वे मात्रे, इति चतुर्विंशतिमात्राभिः काव्यपदचतुष्टयम् । तत्रैकादशसु त्रयोदशसु च यतिः, उल्लालस्य पादे अष्टाविंशतिर्मात्राः, पञ्चदशसु त्रयोदशसु च यतिः । एवं पदद्वयम् । एतादृक् षट्पदम् । यथा—

पिन्धउ दिढसण्णाह बाहउप्पर पक्खर दइ ।
बन्धुसमदि रण धसउ सामिहम्मीर बअण लइ ।
उड्डउ णहपह भमउ खग्ग रिउसीस डालउ ।
पक्खर पक्खर ठेल्लि पेल्लि पव्वअ उप्फालउ ।
हम्मीरकज्ज जज्जल भणइ कोहाणल मुहमह जलउ ।
सुरताणसीस करवाल दइ तेज्जि कलेवर दिउ चलउ ॥
( परिधाय दृढसन्नाहं वाहोपरि पक्षरं दत्त्वा ।
बन्धूनां सम्मत्या रणं धर्षयामि स्वामिहम्मीरवचनं गृहीत्वा ।
उड्डयामि नभःपथं भ्रमामि खड्गं रिपुशिरसि पातयामि ।
पक्षरे पक्षरे ठेलयित्वा पेलयित्वा पर्वतमुत्फालयामि ।
हम्मीरकार्ये जज्जल्लो भणति क्रोधानलो मुखमध्ये ज्वलति ।
सुलतानशिरसि करवालं दत्त्वा त्यक्त्वा कलेवरं दिवं चलति॥ )

प्रकारान्तरमपि षट्पदे भवति । आदौ षट्कलो गणः, ततश्चत्वारश्चतुःकलाः, ततोऽन्ते द्विकलः, एवंविधैश्चतुर्भिश्चरणैः षण्णवतिमात्रा भवन्ति । तत उल्लालपदद्वयं पूर्ववदेव । उभयथापि द्विपञ्चाशदधिकं शतं मात्राणां षट्पदे भवति । अत्रोदाहरणम्—

जहा सरअससिबिम्ब जहा हरहारहंसा ठिअ ।
जहा फुल्लसिअकमल जहा सिरिखण्ड खण्डकिअ ॥
जहा गङ्गकल्लोल जहा रोसाणिअ रुप्पइ ।
जहा दुद्धवरसुद्धफेण फम्फाइतलुप्पइ ॥
पिअपाअपसाअदिट्ठिपलु णिहुअ हसइ जहा तरुणिजण ।
वरमन्ति चण्डेसर तह तुअ कित्ति देक्खु हरिबम्भ भणा ॥
( यथा शरच्छशिबिम्बं यथा हरहारहंसाः स्थिताः ।

यथा फुल्लसितकमलं यथा श्रीखण्डः खण्डीकृतः ॥
यथा गङ्गाकल्लोलो यथा रोषाणितं रूप्यम् ।
यथा दुग्धवरशुद्धफेनं उद्गम्य तपति ॥
प्रियपादप्रसादद्रष्टिपतितो निभृतं हसति यथा तरुणीजनः ।
वरमन्त्रिन्! चण्डेश्वर! तथा तव कीर्तिं दृष्ट्वा हरिब्रह्मा भणति ॥ )

काव्यस्वरूपं त्वादावन्ते च षट्कलो मध्ये त्रयश्चतुष्कलास्तृतीयो जो न्लौ वेति । इदं स्वतन्त्रस्य काव्यच्छन्दसः करणे । षट्पदे तूक्तैव विधा ज्ञेयाः । काव्यस्य भेदाः पञ्चचत्वारिंशत् । तत्र यत्र षण्णवतिर्लघूनां न तु गुरुः स शक्रः । तत एकैकगुरुप्रक्षेपेण लघुद्वयद्वयह्रासे च शम्भ्वाद्या भृङ्गान्ता भेदा भवन्ति । तथा च भृङ्गे अष्टौ लघवः प्रतिपादमेकादश लघुप्रकारेण समुदिते चतुश्चत्वारिंशद् गुरवस्ततो न ह्रासः । यथा—शक्र-शम्भु-शूर-गण्ड-स्कन्ध-विजय-दर्प-ताराङ्क-समर-सिंह-शीर्ष-उत्तेज-फणि-रक्षः-प्रतिधर्म-मराल-मृगेन्द्र-दण्ड-मर्कट-अनुबन्ध-वासण्ठ-कण्ठ-मयूर-बन्ध-भ्रमर-भिन्न-महाराष्ट्र-बलभद्र-राज-वलित-मयूख-मन्थान-बलिमोह-सहस्राक्ष-बाल-दर्पित-सरभ-दम्भ-उद्दम्भ-वलिताङ्क-तुरग-हार-हरिण-अन्ध-भृङ्गेति । तत्र शक्रस्योदाहरणम्—

जसु कर फणिवइ वलअ तरुणिवर तणुमह विलसइ ।
णअण अणल गल गरल विमल ससहर सिर णिवसइ ॥
सुरसरि सिरमह वहइ सअलमणदुरितदलणकर ।
हसि ससहरहर हरउ दुरित तुअ दिसउ अभअवर ॥
( यस्य करे फणिपतिर्वलयस्तरुणीवरा तनुमध्ये विलसति ।
नयने अनलो गले गरलं विमलः शशधरः शिरसि निवसति ॥
सुरसरिच्छिरोमध्ये वहति सकलमनोदुरितदलनकरः ।
हसित्वा शशधरधरो हरतु दुरितं तव दिशत्वभयवरम् ॥)

षट्पदे गणाशुद्ध्यादौ पङ्गुत्वादयो दोषा ग्रन्थान्तरादवसेयाः, विस्तरभयात्तु न प्रपञ्च्यन्ते । द्वात्रिंशल्लघ्ववधिकस्य काव्यस्य विप्रजातिः, ततश्चत्वारिंशल्लघ्ववधि क्षत्रियजातिः, ततोऽष्टाचत्वारिंशल्लघ्ववधि वैश्यजातिः अवशिष्टः शूद्र इति जातिभेदः । उल्लाललक्षणं तु—

त्रयश्चतुष्कला आदौ त्रिकलः षट्कलस्ततः ।
चतुष्कलोऽयं त्रिकल उल्लाले लक्षणं सदा ॥ इति ।

तत्र सर्वगुरुः षट्पदो यथा—

जाआ जा अद्धङ्ग सीस गङ्गा लोलन्ती ।
सव्वासा पूरन्ति सब्ब दुक्खा तोलन्ती ॥
णाआराआहार दीस बासा बासन्ता ।
वेआला जा सङ्ग णट्ट दुट्टा णासन्ता ॥

णाचन्ता कन्ता उच्छुब्बे ताले भूमीकम्पले ।
जा दिट्ठे मोक्खा पाबिज्ज सो तुह्माणं सुक्ख दे ॥
(जाया यस्यार्धाङ्गे शीर्षे गङ्गा लोलते ।
सर्वाशाः पूरयन्ती सर्वदुःखानि त्रोटयन्ती ॥
नागराजहारो दिशो वासांसि वसानः ।
वेताला यत्सङ्गे नष्टदुष्टान् नाशयन्तः ॥
नृत्यन्तः कान्तं तालकम्पितभूमयः ।
यद्दृष्टे मोक्षः प्राप्यते स युष्माकं सुखं ददातु ॥

अथ षट्पदभेदाः । तत्र काव्ये चतुश्चत्वारिंशद् गुरवः, उल्लाले च षड्विंशतिः । एवं मिलित्वा सप्ततिर्गुरवो द्वादश च लघवो यत्र स द्व्यशीत्यक्षरो अजयनामा प्रथमो भेदः, ततः सर्वलघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयप्रक्षेपेणैकैकवर्णवृद्धौ एकसप्ततिरजयाद्या भेदा भवन्ति । यथा—अजय-विजय-वलि-वर्ण-वीर-वेताल-बृहन्नल-मर्कट-हरि-हर-ब्रह्म-इन्दु-चन्दन-शुभंकर-शाल-सिंह-शार्दूल-कूर्म-कोकिल-खर-कुञ्जर-मदन-मत्स्य-सारङ्ग-शेष-सारस-पयोधर-कुन्द-कमल-कुन्द-वारण-शरभ-जङ्गम-शर-सुशरमसर-सारस-सरस--मेरु-सकल-मृग-सिद्ध-बुद्धि--कलकल--कमलाकर-धवल-मृतक-ध्रुव-वलय-किंनर-शाक-जन-मेधाकर-ग्रीष्म-गरुड-शशि-सूर्य-शल्य-नर-तुरग-मनोहर-गगन-रत्न-नव-हीर-भ्रमर-शेखर-कुसुमाकर-दीप-शङ्ख-वसु-शब्दाः । तथा च अजये वर्णाः ८२, गुरवः ७० लघवः १२। अन्त्ये शब्दे लघवः १५२ ।

इति षट्पदप्रकरणम् ॥

---

अथ पज्झटिका ।

प्रतिपादं चत्वारश्चतुष्कला गणास्तत्रान्तिमो जगण एव । एवं चतुर्भिः पादैश्चतुःषष्टिमात्राकं पज्झटिकाच्छन्दः । यथा—

जे गञ्जिअ गोलाहिवइ राउ
उद्दण्ड ओड्ड जसु भअ पलाउ ।
उरु बिक्कम बिक्कम जिणिअ जुज्झ
ताकण्ण परक्कम को ण बुज्झ ॥
(येन गंजितो गौडाधिपती राजा
उद्दण्ड ओड्रो यस्य भयेन पलायितः ॥
गुरुविक्रमो विक्रमो जितो युद्धे
तत्कर्णपराक्रमं को न बुद्ध्यते ॥)

इति पज्झटिका ॥

---

अथालिल्लिहः ।

प्रतिपादं षोडशमात्राः, अन्ते च मात्राद्वयं लघुद्वयात्मकं पादे च जगणो न भवति तच्छन्दोऽलिल्लिहसंज्ञम् । यथा—

जहि आसामविदेहाकिल्लउ,
सुत्थिर डाहररज्जा जिणि लिउ ।
कालिञ्जर जिणिह कित्ती थप्पिअ,
धण आरज्जिअ धम्मे अप्पिअ ॥

( येनासामविदेहदुर्गाणि,
सुस्थिरडाहरराज्यं जित्वा गृहीतम् ।
कालिञ्जरं जित्वा कीर्तिं स्थापयित्वा,
धनमर्जयित्वा धर्मे अर्पितम् ॥ )

इत्यलिल्लिहः ॥

---

अथ नवपद्प्रकरणम् ।

अनियतगुरुलघुक्रमाः षोडशमात्राः प्रतिपादं भवन्ति, तच्चतुःषष्टिमात्रं पादाकुलकम् । पञ्चदशमात्राभिः प्रथमतृतीयपञ्चमपादाः । पञ्चदशमात्राः, द्वितीये द्वादशमात्राः, चतुर्थे एकादश मात्राः, एवमष्टषष्टिमात्रा भवन्ति । एतदनन्तरं दोहाच्छन्दः समस्तमित्येवं नवपदं छन्दो रड्डा नाम । तत्र विषमपादेष्वादौ त्रिकलस्ततस्त्रयश्चतुष्कलाः, तत्रापि प्रथमेऽन्ते जगणश्चतुर्लघुर्वा, तृतीयपञ्चमयोर्भगणोऽन्ते द्वितीयपादे सर्वलघ्वन्तास्त्रयश्चतुष्कलाः, चतुर्थे द्वौ चतुष्कलौ, ततस्त्रयो लघव इति । ततउक्तलक्षणं दोहाच्छन्दः । यथा—

भमइ महुअर फुल्ल अरबिन्द,
णवकेसु काणण फुलिअ
सब्बदेस पिकराव चुल्लिअ,
सिअल पवण लहु वहइ,
मलअकुहर णवबेल्लि पेल्लिअ ।
चित्त मणोभव सर हणइ,
दूर दिगन्तर कन्त ।
के परि अप्प उबारिहउ,
एपरि मिलिअ दुरन्त ॥

( भ्रमति मधुकरः फुल्लारविन्दे,
नवकिंशुकैः काननं फुल्लम् ।
सर्वदेशः पिकरावैश्चुलुकितः ।
शीतलपवनो लघु वहति,

मलयकुहरे नववल्लीं क्षिप्त्वा ।
चित्तं मनोभूः शरैर्हन्ति,
दूरदिगन्तरे कान्तः
केन प्रकारेणात्मानमुद्धारयामि,
एवं परिमिलितो दुरन्तः ॥ )

एतद्भेदाः सप्त । तत्र प्रथमतृतीयपञ्चमपादेषु चतुर्दशमात्रा कलभी (१), द्वितीयचतुर्थयोरेकादश सा नन्दा(२)प्रथमतृतीयपञ्चमपादेषूनविंशतिर्द्वितीयचतुर्थयोरेकादश सा मोहिनी(३),विषमपादेषु पञ्चदश समयोरेकादश सा चारुसेनी(४),विषमेषु पञ्चदश समयोर्द्वादश सा भद्रा(५) विषमेषु पञ्चदश द्वितीये द्वादश चतुर्थे एकादश स राजसेनः(६), विषमेषु षोडश समयोरेकादश द्वादश वा सा तालङ्किनी(७)इति ।

इति नवपदप्रकरणम् ॥

---

अथ पद्मावती ।

द्विगुरुरन्तगुरुरादिगुरुः सर्वलघुरित्येतैश्चतुर्मात्रैः गणैः यथासम्भवं गणाष्टकघटितपादचतुष्टया पद्मावती । अत्र जगणो नायकपीडादिदोषदाता अतश्चण्डाल इत्युच्यतेऽतो न शुभः । यथा—

भअभञ्जिअ वङ्गा भग्गु कलिङ्गा तेलङ्गा रण मुक्कि चले ।
मरहट्ठा धिट्ठा लग्गिअ कट्ठा सोरट्ठा भअपाअ पले ॥
चम्पा रण कम्पा पव्वअ कम्पा ऊत्थाउत्थी जीउ हरे ।
कासीसर राणा किअउ पआणा विज्जाहर भण मन्तिवरे ॥
( भयभग्ना वङ्गा भग्नाः कलिङ्गास्तैलङ्गा रणं मुक्त्वा चलिताः ।
महाराष्ट्रा धृष्टा लग्नाः काष्ठासु सौराष्ट्रा भयेन पादे पतिताः ॥
चम्पा रणे कम्पिता पर्वताः कम्पिता उत्थायोत्थाय जीवं हरन्ति ।
काशीश्वरे राजनि कृतप्रयाणे विद्याधरो भणति मन्त्रिवरः ॥ )

इति पद्मावती ॥

---

अथ कुण्डलिका ।

पूर्वोक्ताया दोहाया यद्येकमर्धमपरं चार्धं पूर्वोक्तलक्षणकाव्येन युक्तं तदिदं चतुश्चत्वारिंशदधिकशतमात्राभिः शृङ्खलायमकानुप्रासवद्गुणालङ्कारवत्कुण्डलिकाख्यं छन्दः । अत्र चाविरम्य कुण्डलिकारेण पठनात्कुण्डलिकेति संज्ञा । यन्मते दोहा द्विपदा तन्मतेनेयं षट्पदा, यन्मते दोहा चतुष्पदा तन्मते कुण्डलिकाष्टपदेति । यथा—

ढोल्ला मारिअ ढिल्लिमह मुच्छिअ मेच्छसरीर ।
पुर जज्जल्ला मन्तिवर चलिअ वीर हम्मीर ।

चलिअ बीर हम्मीर पाअभर मेइणि कम्पइ ॥
दिग मग णह अन्धार धूलि सूरजरह झम्पइ ।
दिग मग णह अन्धार आणु खुरसाणक ओल्ला ।
दमलिदअसु विपक्ख मारु ढिल्लीमह ढोल्ला ॥
( ढोलं ताडयित्वा दिल्लीमध्ये मूर्छयित्वा म्लेच्छशरीराणि ।
पुरो जज्जलो मन्त्रिवरश्चलति वीरो हम्मीरः ।
चलिते वीरे हम्मीरे पादभरेण मेदिनी कम्पते ॥
दिङ्मार्गनभःस्वन्धकारे धूली सूर्यरथं झम्पयति ।
दिङ्मार्गनभःस्वन्धकारे आनीताः खुरसानकाः पुरुषाः ।
दलितासुर्विपक्षस्ताड्यते ढिल्लीमध्ये ढोलः ॥ )

इति कुण्डलिका ॥

---

अथ मदनान्तकः ।

यत्र प्रतिपादे विंशत्यक्षराणि पञ्चविंशतिश्च मात्राः, तत्रापि प्रथमश्चतुर्मात्रिको गणः, अन्ते एको गुरुः, मध्ये यथासुखमिश्रिता गुरुलघवो स मदनान्तकः । यथा—

भञ्जिअ मलअ चोलवइ णिबलिअ गञ्जिअ गुज्जरा ।
मालबराअ मलअगिरिअ लुक्कि परिहरि कुञ्जरा ॥
खुरसाणा खलिअ रणमह अहिअ लङ्घिअसाअरा ।
हम्मीर चलिअ हारब पलिअ रिउगणह काअरा ॥
( भग्नो मलयश्चोलपतिर्निर्बलीकृतो गञ्जिता गुर्जराः ।
मालवराजो मलयगिरौ निलीनः परिहृत्य कुञ्जरान् ॥
खुरसानाः स्खलिताः रणमध्येऽहिता लङ्घितसागराः ।
हम्मीरे चलिते हारवाः पलायिता रिपुगणाः कातराः ॥ )

इति मदनान्तकः ॥

---

अथ द्विपदी ।

आद्यन्तयोः षट्कलो गणो मध्ये चतुष्कलाश्चत्वारः । एवंविधपदद्वयरचिता द्विपदी । आदौ षट्कलस्ततः पञ्च चतुष्कलास्ततो गुरुरिति वा । यथा—

दाणव देब बेबि दुक्कन्तउ गिरिबरसिहर कम्पिओ ।
हअगअपाअघाअ उट्ठन्तउ धूलिहिं गअण झम्पिओ ॥
(दानवदेवाभ्यां द्वाभ्यामपि ढौक्यमानं गिरिवरशिखरं कम्पितम् ।
हयगजपादघातोत्थितधूलिभिर्गगनमाच्छादितम् ॥)

इति द्विपदी ॥

---

अथ खञ्जा।

नव चतुर्लघवस्ततो रगण एवं दशभिर्गणैरेकोनचत्वारिंशदक्षरैरेक-चत्वारिंशन्मात्राभिरर्धं यस्याः सा खञ्जा। द्वितीयमप्यर्धं तादृक्। यथा—

अहि ललइ महि चलइ गिरि खसइ हर खलइ
ससि घुमइ अमिअ वमइ मुअल जिबि उट्ठए॥
पुणु धसइ पुणु खसइ पुणु ललइ पुणु घुमइ
पुणु बमइ जिबिअ बिबिह समर परिदिट्ठए॥
(अहिर्ललयति मही चलति गिरिः पतति हरः स्खलति
शशी घूर्णते अमृतं वमति मृता जीवित्वोत्तिष्ठन्ति॥
पुनर्धर्षति पुनः स्खलति पुनर्ललति पुनर्घूर्णते
पुनर्वमति जीविता विविधं समरे परिदृश्यते॥)

इति खञ्जा॥

---

अथ शिखा।

यत्र प्रथमार्धे षट् चतुर्लघवो द्वितीयार्धे सप्त उभयोरप्यन्ते जगणो भवति सा शिखा। यथा—

फुलिअ महु भमर बहु रअणि-
पहु किरणबहु अवअरु बसन्त॥
मलअगिरिकुसुमधरि पवण वह
सहब कह सहि भण णिलअ णहु कन्त॥
(पुष्पितमधुके भ्रमरवध्वो रजनीप्रभुः
किरणबहुरवतरति वसन्तः॥
मलयगिरिकुसुमधरः पवनो वहति
सहे कथं सखि! भण निलये न हि कान्तः॥)

इति शिखा॥

---

अथ माला।

आद्यार्धे नव चतुर्लघवस्ततो रगणास्ततो द्वौ गुरू इत्येवं पञ्चचत्वा-रिंशन्मात्राः गाथोत्तरार्धेन द्वितीयार्धं सैषा माला। यथा—

बरिस जल भमइ घण मलअ सिअल पवण मणहरण
कणअ पिअरि णचइ बिजुरि फुल्लिआ णीबा।
पच्छरविच्छर हिअओ पिअओ णिलअं ण आवेइ॥
(वर्षति जलं भ्रमति घनो मलयशीतलः पवनो मनोहरणः
पीता नृत्यति विद्युत्फुल्ला नीपाः।
प्रस्तरविस्तरहृदयः प्रियो निलये नायाति॥)

इति माला॥

---

अथ चूलिका ।

यदि दोहाच्छन्दसि प्रत्यर्धं लघुगुरुद्वयरूपाः पञ्चकला अधिका दीयन्ते, तथा दोहाच्छन्दसो मात्राः ४८ अधिकाश्च १०, एवं अष्टपञ्चाशन्मात्रा भवन्ति तदा चूलिका नामच्छन्दः । यथा—

राआ लुद्ध समाज खल बहु कलहारिणि सेवक धुत्तउ ।
जीवण चाहसि सुक्ख जइ परिहर घरजण बहुगुणजुत्तउ ॥
(राजा लुब्धः समाजः खलः वधूः कलहकारिणी सेवको धूर्तः ।
जीवने वाञ्छसि सुखं यदि परिहर गृहजनं बहुगुणयुक्तमपि ॥)

इति चूलिका ॥

---

अथ सौराष्ट्रा ।

व्यत्यस्तार्धा दोहैव सौराष्ट्रा । यथा—

सो माणिअ पुणमन्त जासु भत्त पण्डिअ तनअ ।
जासु घरिणि गुणमन्ति सो वि पुहवि सगाहणिलअ ॥
(स मान्यः पुण्यवान्यस्य भक्तः पण्डितस्तनयः ।
यस्य गृहिणी गुणवती सोऽपि पृथिव्यां स्वर्गनिलयः ॥)

इति सौराष्ट्रा ॥

---

अथ काहलिः ।

सगणभगणचतुर्लघवो गणा गुरुश्चैको यत्र प्रतिपदं एकादशाक्षरश्चतुर्दशमात्रकश्च स काहलिः । यथा—

उचउत्थाणअ बिमलघरा तरुणी घरिणी बिणअपरा ।
बित्तकपूरलमुद्दघरा वरिसा समआ सुक्खकरा ॥
(उच्चोत्थानकं विमलं गृहं तरुणी गृहिणी विनयपरा ।
वित्तपूरितं मुद्रागृहं वर्षासमयः सुखकरः ॥)

इति काहलिः ॥

---

अथ मधुभारतम् ।

यत्र जगणान्तौ चतुर्मात्रौ (गणौ) प्रतिपादं तन्मधुभारतम् । यथा—

जसु चन्द सीस पिन्धणअ दीस ।
सो संभु पेउ महासुख देउ ॥
(यस्य चन्द्रः शीर्षे परिधानं च दिशः ।
स शंभुः पातु महासुखं ददातु ॥)

इति मधुभारतम् ॥

---

अथाभीरः ।

यत्र पादे जगणान्ता एकादशमात्राः स आभीरः । यथा—

सुन्दरि गुज्जरणारि लोअण दीहबिसारि ।
पीणपओहरभार लुल्लइ मोत्तिअहार ॥
( सुन्दरी गुर्जरनारी लोचनं दीर्घविसारि ।
पीनस्तनभारे लोलते मौक्तिकहारः ॥ )

इत्याभीरः ॥

---

अथ दण्डकाहलः ।

चत्वारश्चतुर्मात्रास्ततः षण्मात्रस्ततश्चतुष्कलौ गुरुश्चेति द्वात्रिंशन्मात्रा यदोद्दण्डकाहलः । सर्वा अस्मिन्मात्राः १२८ । यथा—

राअह भग्गन्ता दिगन्तलगन्त परिहरि हअगअघररमणी,
लोरहि भरु सरबरु पअपरुपरिकरु लोटइ पडिअतनु धरणी ।
पुणु उट्ठइ संभरि करदत्तग्गुलिबालतणअकरजमलकरे,
कासीसर राआ णेहलुकाआ करु माआ पुण थप्पि धरे ॥
( राजानो भग्ना दिगन्तरलग्नाः परिहृत्य हयगजगृहरमणीः,
रोदनैर्भृत्वा सरोवरं पादपतितपरिकरा लोटन्ते पतिततनवो धरण्याम् ।
पुनरुत्तिष्ठन्ति सम्भृत्य करदत्ताङ्गुलिबालतनयकरयमलधराः,
काशीश्वरो राजा स्नेहलकायः कृत्वा मायां पुनः स्थापयित्वा धृतवान्॥)

इति दण्डकाहलः ॥

---

अथ दीपकम् ।

आदौ गुर्वन्तश्चतुष्कलस्ततो गुर्वन्तः पञ्चकलस्तत एको लघुरित्येवं पादघटितं दीपकम् । यथा—

जसु हत्थ करवाल बीपक्खकुलकाल ।
सिर सोह बरछत्त संपुण्ण ससिमत्त ॥
(यस्य हस्ते करवालो बिपक्षकुलकालः ।
शिरसि शोभते वरच्छत्रं सम्पूर्णशशिवत् ॥)

इति दीपकम् ॥

---

अथ सिंहावलोकः ।

यथादौ चतुष्कलसगणौ ततः षट्कला गुरुश्चेति षोडशमात्रापादः सिंहावलोकः । यथा—

हणु उज्जरगुज्जरराअ दलं
दलदलिअ चलिअ मरहट्ठबलम् ॥

बलमोलिअमालअराअकुला
कुलउज्जलकलचुलिकण्णफुला ॥
(हतमुज्ज्वलगुर्जरराजदलं,
दरदलितचलितं महाराष्ट्रबलम् ।
बलमोटितमालवराजकुलः
कुलोज्ज्वलः कलचूरिः कर्णः स्फुरति ॥) इत्यलम् ।

इति सिंहावलोकः ॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां पञ्चमोऽध्यायः ॥

## षष्ठोऽध्यायः ।

एवं समादिवृत्तत्रयमभिधायेदानीं तेषामुत्पत्तिप्रदर्शनायाऽनुक्तानां च वृत्तानां कविप्रयोगेषु दृश्यमानानां सद्भावोपपत्तये प्रस्तारादयः षट्प्रत्यया व्याख्यातव्याः । प्रतीयते सङ्ख्यादिकमेभिस्ते प्रत्ययाः । सम्भावितेषु वृत्तेषु विश्वासापरपर्यायप्रत्ययव्यापकत्वाद्वा । ते च प्रस्ताराद्याः षट् । तदुक्तम्—

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ॥
सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १ ॥

तत्र नष्टोद्दिष्टादीनां प्रस्तारज्ञानाधीनत्वात्प्रस्तारं तावदाह—

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ॥
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ २ ॥

प्रस्तार्यवृत्तिजातिपादस्थवर्णसङ्ख्याकसर्वगुरौ पादे लिखिते सति तत्राद्यात्प्रथमाद् गुरोरधो लघुं स्थापयेत् । प्रथमत्वं च गुर्वपेक्षया न तु वर्णाऽपेक्षया । तथात्वे हि द्वितीयभेदे आद्यगुरोरभावात् तृतीयभेदानुपपत्तेः । तं लघुं न्यस्य यथोपरि पङ्क्तौ तथैवाधस्तनाधस्तनपङ्क्तौ, शेषं पादवर्णसङ्ख्यापूर्त्यवधि द्वितीयादिकं गुरुं लघु वा लिखेत्, यत्रोपरि गुरुस्तत्राधस्तादपि गुरुर्यत्रोपरि लघुस्तत्राधस्तादपि लघुरित्यर्थः । भूयः पुनरमुं पूर्वोक्तं विधिं लेखनरूपं कुर्यात्तृतीयादिपङ्क्तौ गुरुमध्ये आद्यगुरोरधो लघुः शेषं चोपरिवदेवेत्यर्थः ॥ २ ॥

एवं सति तृतीये भेदे आद्यस्थानस्य शून्यत्वात् तत्र किं लेख्यमित्यत

आह—

ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ॥

प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥ ३ ॥

ऊने न्यूने स्थाने गुरूनेव दद्याल्लिखेत् । बहुवचनमुत्तरोत्तरपङ्क्तावपि न्यूने गुरूणां प्राप्त्यर्थम् । ततश्च भूयःशब्दोऽपि वीप्सार्थो ज्ञेयः । तेन पुनः पुनर्गुर्वपेक्षया आद्याद् गुरोरधो लघुं लिखित्वा शेषमुपरिवदेव सम्पाद्य ऊने स्थाने गुरवो देया इत्यर्थः ।प्रस्तारकरणेऽवधिमाह–यावदिति । सर्वलघुः पादः प्रस्तारो वा यावद्भवमिति तावदेवं कुर्यात् । प्रस्तारोक्तिमुपसंहरति–प्रस्तारोयमिति । प्रस्तार्यते इति प्रस्तारः । प्रस्तार्यतेऽनेन च्छन्द इति वा । छन्दोविचितिश्छन्दःशास्त्रम् । तदुक्तम्—

स्थापयेल्लघुमधो गुरोः पुरः
स्याद्यथोपरि तथैव पूरयेत् ॥
पश्चिमं च गुरुभिः पुनः पुनः
सर्वलघ्ववधिरित्ययं विधिः ॥ इति ।

तदिदमुक्तादौ योज्यते । तत्रोक्तायां यथा—[१]ऽ, [२]।, (२) तस्या द्विविविकल्पत्वात् । अत्युक्तायां यथा—[१]ऽऽ, [२]।ऽ, [३]ऽ।, [४]॥ (४) । मध्यायां यथा—[१]ऽऽऽ, [२]।ऽऽ, [३]ऽ।ऽ, [४]॥ऽ, [५]ऽऽ।, [६]।ऽ।, [७]ऽ॥, [८]॥। (८) । एते मगणाद्य एव सिद्ध्यन्ति । चतुरक्षरायां प्रतिष्ठायां यथा—[१]ऽऽऽऽ, [२]।ऽऽऽ, [३]ऽ।ऽऽ, [४]॥ऽऽ, [५]ऽऽ।ऽ, [६]।ऽ।ऽ, [७]ऽ॥ऽ, [८]॥।ऽ. [९]ऽऽऽ।, [१०]।ऽऽ।, [११]ऽ।ऽ।, [१२]॥ऽ।, [१३]ऽऽ॥, [१४]।ऽ॥, [१५]ऽ।॥, [१६]॥॥, (१६) एवं सर्वेषां समवृत्तानां प्रस्तारे कृते पूर्वपूर्वापेक्षया उत्तरोत्तरस्य द्विगुणा भेदा भवन्ति(१) । अत्र मामकः सङ्ग्रहश्लोकः—

पादं सर्वगुरुं लिखेन्मुखगुरोश्चाधो लघुं पूर्ववच्छेषं मूलगुरोः पुनर्लघुमधो शेषं पुनः पूर्ववत् ॥
ऊने न्यस्य गुरूनशेषलघुकं पादं च यावत्पुनः
कार्योऽयं विधिरित्यचीक्लृपदमूं नारायणः प्रस्तृतिम् ॥
इति समप्रस्तारः ॥

---

(१) वर्णप्रस्तारज्ञानोपयोगिकोष्ठकानि ।

(१) उक्तायां यथा—

| |
|---|
| ऽ, प्रथमो भेदः । |
| ।, द्वितीयो भेदः । |

(२) अत्युक्तायां यथा—

| |
|---|
| ऽऽ, प्रथमः । |
| ।ऽ, द्वितीयः । |
| ऽ।, तृतीयः । |
| ॥, चतुर्थः । |

## अथार्धसमप्रस्तारः ।

अर्धसमेषु त्वर्धस्यैव पादतां प्रकल्प्य प्रस्तारः कार्यः, पाद इत्यस्योपलक्षणत्वात् । तदुक्तम्—'अर्धसमस्य प्रस्तारेऽर्धप्रस्तारः कार्यः' इति । तद्यथा—द्व्यक्षरपादे च्छन्दसि पादद्वयरूपस्यार्धस्य पादताकल्पनया चतुरक्षरपूर्वोक्तप्रस्तारवत्प्रस्तारे द्व्यक्षरच्छन्दसः षोडश भेदाः । तत्र प्रथम [१]SSSS. षष्ठ । [६]SIS, एकादश [११]SISI, [१६]IIII, षोडशानां भेदानां समवृत्तभेदत्वेनार्धसमभेदकत्वात्तान्परित्यज्य शुद्धार्धसमप्रस्तारः सिद्धो भवति । तदुक्तम्-"प्रस्तुतभेदकारी विकल्पः प्रस्तारक्रमायातोऽपि वर्जनीयः" इति। सङ्ख्यायां तु गणना कार्यैव । अन्यथा नष्टोद्दिष्टाद्यसिद्धेः । ततश्च द्वादश शुद्धार्धसमभेदाः । यथा—[१।२]ISSS, [२।३]SISS, [३।४]IISS, [४।५]SSIS, [५।७]SIIS, [६।८]IIIS, [७।९]SSSI, [८।१०]ISSI, [९।१२]IISI, [१०।१३]SSII, [११।१४]ISII, [१२।१५]SIII, एवमन्यत्रापि योज्यम् ।

इत्यर्धसमप्रस्तारः ॥

---

(३) मध्यायां यथा—

SSS, प्रथमः ।
ISS, द्वितीयः ।
SIS, तृतीयः ।
IIS, चतुर्थः ।
SSI, पञ्चमः ।
ISI, षष्ठः ।
SII, सप्तमः ।
III, अष्टमः ।

(४) प्रतिष्ठायां यथा—

SSSS, प्रथमः ।
ISSS, द्वितीयः ।
SISS, तृतीयः ।
IISS, चतुर्थः ।
SSIS, पञ्चमः ।
ISIS, षष्ठः ।
SIIS, सप्तमः ।
IIIS, अष्टमः ।
SSSI, नवमः ।
ISSI, दशमः ।
SISI, एकादशः ।
IISI, द्वादशः ।
SSII, त्रयोदशः ।
ISII, चतुर्दशः ।
SIII, पञ्चदशः ।
IIII, षोडशः ।

अथ विषमप्रस्तारः ।

विषमाणां तु प्रस्तारे पादचतुष्टयात्मकस्य च्छन्दसः पादस्थानीयत्वं प्रकल्प्य प्रस्तारः कार्यः । उक्तं हि—"विषमप्रस्तारे पादचतुष्टयस्य प्रस्तारः कार्यः" इति । यथा-ह्यक्षरस्य विषमवृत्तस्य पादकल्पनायां सर्वगुरोः SSSSSSSSपूर्ववदाद्यगुरोरधो लघुं विन्यस्य यथोपरीति गुरुसप्तकं लिखित्वा भूयः कुर्यादिति द्वितीयप्रस्ताराद्यगुरोरधो लघुः परतो यथोपरीति कृत्वा ऊने गुरून्दद्यात् । एवं सर्वलघुप्रस्तारं यावत्कृते षट्पञ्चाशदधिकं शतद्वयं भेदाः । तेषां मध्ये पूर्ववत्समार्धसमरूपत्वेन प्रस्तुतविषमप्रस्तारभेदकारित्वात्प्रथमः द्वितीयाश्च सप्तदशः सप्तदशोऽन्त्यं यावद्वर्जनीयाः । ते च यथा—प्रथमः S S S S S S S S, अष्टादशः । S S SIS S S, पञ्चत्रिंशः SISSSISS, द्विपञ्चाशः IISS II SS, एकोनसप्ततिः SS I SSS I S, षडशीतिः ISISISIS, त्र्यधिकशतं SIISSIIS, त्रिंशत्यधिकशतं IISIIISI, सप्तत्रिंशदधिकशतं SSSI SSSI, चतुःपञ्चाशदधिकशतं ISSIISSI, एकसप्तत्युत्तरशतं SISISISI, अष्टाशीत्यधिकशतं IISIIISI, पञ्चोत्तरद्विशतं SSIISSII, द्वाविंशत्युत्तरद्विशतं ISIIISII, एकोनचत्वारिंशदधिकद्विशतं SIIISIII, षट्पञ्चाशदधिकद्विशतसङ्ख्या I I I I I I I I, एवं षोडश । एषां मध्ये प्रथम SSSSSSSS, षष्ठ ISISISIS, एकादश SISISISI, षोडशाः I I I I I I I I समभेदाः । अन्ये द्वादशार्धसमभेदाः । शेषाश्चत्वारिंशदधिकशतद्वयं शुद्धविषमभेदाः । एवं सर्वत्र विषमेषु प्रस्तारभेदो ज्ञेयः ।

इति विषमप्रस्तारः ॥

---

अथ मात्राप्रस्तारः ॥

मात्राप्रस्तारे तूपरिपङ्क्तौ यथायोग्यं मात्राद्वयद्वयस्थान एकैकगुरुक्रमेण गुरूंल्लिखित्वा प्रथमगुरोरधो लघुं लिखित्वा शेषमुपरिपङ्क्तिवत्कुर्यात् । एवं सत्येका मात्रा न्यूना भवति, सा लघोः पूर्वं लघुरूपेण देया । तृतीयपङ्क्तौ प्रथमगुरोर्लघुं दत्त्वा शेषमुपरिवल्लिखित्वा न्यूनास्तिस्रो मात्राः, ता लघुगुरुरूपेण लघोः पूर्वं देयाः । एवंक्रमेणाद्यगुरोरधो लघौ दत्ते उपरिवच्छेषे लिखिते शेषा मात्रैका चेदाद्यलघोः पूर्वं लघुरूपेण देया । द्वे चेच्छेषे तदा तत एव पूर्वं गुरुरूपेणैव । एवं युग्मा गुरुरूपेणैवेति । तिस्रश्चेत्तदा एको लघुरेको गुरुश्चेति । पञ्च चेत्तदा एको लघुर्द्वौ गुरू चेत्येवंक्रमेण सर्वलघुप्रस्तारपर्यन्तं लिखेत् अत्रैवं कृते पूर्वोक्तषट्कलत्रयोदशगणप्रस्तारः । यथा—[१] SSS, [२] IISS, [३] ISIS, [४] SIIS, [५] IIIIS, [६] ISSI, [७] SISI, [८] IIISI, [९] SSII, [१०] IISII, [११] ISIII, [१२] SIIII, [१३] IIIIII (१३) पञ्चकलस्य सर्वगुरुभेदाभावादादिलघ्वाद्या एव भेदाः । यथा—[१] ISS,

SIS[२], IIIS[३], SSI[४], IISI[५], ISII[६], SIII[७], IIIII[८] एवमन्यत्रापि । विषमकलप्रस्तारेष्वादौ लघुं दत्त्वा प्रस्तारः कार्य इति(१) ॥ ३ ॥

इति प्रस्तारः ॥

---

अथ नष्टम् ।

अथ प्रस्तारपरिशोधनोपयोगि नष्टमाह—

**नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे च लः ॥**
**विषमे चैकमाधाय स्यादर्धेऽर्धे गुरुर्भवेत् ॥ ४ ॥**

अङ्क इत्यतः परं तत्रेत्यध्याहार्यम् । ततश्च नष्टस्य वृत्तस्य योऽङ्कस्तत्र समे सति लो लघुर्लेख्यः, तस्य चार्धेऽर्धे कृतेऽर्धाङ्के समे सति लघुर्विषमे त्वर्धीकरणाशक्तेरेकमधिकं क्षिप्त्वार्धयेत् । नष्टस्याङ्के विषमे सति गुरुर्भवेल्लेख्य इत्यर्थः, तदनन्तरं तस्मिन्विषमे एकमधिकमाधाय संयोज्य योऽङ्को जातस्तस्यार्धे विषमे सति गुरुः, समे तु लघुः । विषमे त्वर्धीकरणाशक्तेरेकमधिकं प्रक्षिप्यार्धयेत् । तस्मिन्नप्यर्धे विषमे गुरुः समे लघुरित्येवं विवक्षितनष्टवृत्ताक्षरसङ्ख्यापूरणं यावत्कुर्यात् । अर्धेऽर्धे इत्युभयत्र वीप्सया पुनः पुनः करणं सूचितम् । यथा ऽयत्तरे पञ्चमं वृत्तं की-

---

(१) मात्राप्रस्तारज्ञानोपयुक्तं कोष्ठकम् ।

पञ्चकलपर्यन्तं यथा—

| १ | २ | ३ | ४ | ५ | मात्राः |
|---|---|---|---|---|---|
| I | S | IS | SS | ISS | १ |
| | II | SI | IIS | SIS | २ |
| | | III | ISI | IIIS | ३ |
| | | | SII | SSI | ४ |
| | | | IIII | IISI | ५ |
| | | | | ISII | ६ |
| | | | | SIII | ७ |
| | | | | IIIII | ८ |

षट्कलप्रस्तारो यथा—

| | | | | | |
|---|---|---|---|---|---|
| SSS | १ | IIIIS | ५ | SSII | ९ |
| IISS | २ | ISSI | ६ | IISII | १० |
| ISIS | ३ | SISI | ७ | ISIII | ११ |
| SIIS | ४ | IIISI | ८ | SIIII | १२ |
| | | | | IIIIII | १३ |

दृगिति प्रश्ने कृते पञ्चमाङ्कस्य विषमत्वाद् गुरुं विन्यस्य सैकस्यार्धे त्र्यङ्कस्य विषमत्वाद् गुरुरेव। पुनः सैकस्यार्धे द्व्यङ्कस्य समत्वाल्लघुरिति। यथा— ऽऽ।. सोऽयं पञ्चमस्तगणः(१)। समोदाहरणं यथा—चतुरक्षरप्रस्तारे चतुर्थं वृत्तं कीदृगिति प्रश्ने समत्वाल्लघुस्तदर्धेऽङ्के द्व्यङ्के पुनर्लघुः शिष्टे द्व्यङ्केऽर्धित एकस्याऽसमत्वाद् गुरुः शिष्टैकाङ्क सैकेऽर्धिते पुनर्गुरुर्यथा—।।ऽऽ. एवं सर्वत्र (२)प्रथमे भेदे प्रथमाङ्कस्य विषमत्वात्सकार्धतायामपि विषमत्वात्सर्वगुरुता।

इति समनष्टम्॥

---

अथार्धसमनष्टम्।

अर्धसमानां तु नष्टे पूर्वोदाहृतद्व्यक्षरपादार्धसमप्रस्तारे पञ्चमो भेदः कीदृगिति प्रश्ने पञ्चानां विषमत्वाद् गुरुः, सैकेऽर्धे त्रयाणां विषमत्वात्पुनर्गुरुः, सैकेऽर्धे द्वयोः समत्वाल्लघुर्द्वयोरर्धे विषमत्वाद् गुरुरिति सिद्धमर्धम् ऽऽ।ऽ द्वितीयार्धेऽप्येवमेव। अत्र यदि समार्धसमयोः संसृष्टत्वं तदा पञ्चमत्वम्, यदा तु शुद्धार्धसमगणना तदा प्रथमस्य सर्वगुरोः सम-

---

(१) यथा—

| वृत्तजातिः | पृष्टो भेदः |
|---|---|
| ३ क्षरा | ५ मः |

५ अस्याङ्कस्य विषमत्वाद् गुरुं विन्यस्य
५+१=६ सैके
३ अर्धिते तस्य विषमत्वाद् गुरुं विन्यस्य
३+१=४ सैके
२ अर्धिते तस्य समत्वाल्लघुं विन्यस्य अविशिष्टे द्व्यङ्के न क्रिया जातेस्त्र्यक्षरात्वात्। एवं च जातं पञ्चमरूपं ऽ ऽ।, इति।

(२) यथा—

| वृत्तजातिः | पृष्टो भेदः |
|---|---|
| ४ अक्षरा | ४ र्थः |

४ अङ्कस्य समत्वाल्लघुं विन्यस्य
२ तस्मिन्नर्धिते तस्य समत्वाल्लघुं विन्यस्य
१ तस्मिन्नर्धिते तस्य विषमत्वाद् गुरुं विन्यस्य
१+१=२ सैके
१ अर्धिते तस्य विषमत्वाद् गुरुं विन्यसेत्।
एवं च जातं चतुर्थं रूपं।। ऽ ऽ इति।

त्वात्त्यागे चतुर्थता । नष्टसिद्धिस्तु संवलितसङ्ख्ययैवेत्युक्तं प्राक्, एवं सर्वत्रापि ।

इत्यर्धसमनष्टम् ॥

---

अथ विषमनष्टम् ।

विषमाणां नष्टे तु द्व्यक्षरविषमवृत्तस्य चतुर्थो भेदः कीदृगिति प्रश्ने उक्तविधाविधाने ॥SSSSSS अयं चतुर्थः । अत्रापि समार्धसमसंवलनेन चतुर्थता, शुद्धविषमभेदेषु तु प्रथमस्य समार्धसमतया त्यक्तत्वात्तृतीयता । एवं सर्वेष्वर्धसमविषमेषु योज्यम् ।

इति विषमनष्टम् ॥

---

अत्र मदीयः सङ्ग्रहश्लोकः—

पृष्टाङ्के विषमे समे गुरुलघू युग्मे तथैकाधिका
युग्मेऽर्धे विषमे समे गुरुलघू भूयोऽवशिष्टेऽर्धिते ॥
तद्वन्न्यस्य विवक्षितान्गुरुलघून्यावद्विदध्यादिदं
श्रीरामेश्वरभट्टसूनुरकरोन्नष्टे विधामीदृशीम् ॥

---

अथ मात्रावृत्ते नष्टम् ।

तत्र लाघवार्थं षण्मात्रप्रस्तारे उदाहरणमुच्यते । षण्मात्रप्रस्तारेषु सप्तमस्थाने कीदृशो गणोऽस्तीति प्रश्ने षडपि कलास्तावत्पृथक्स्थापनीयाः । तत्र प्रथमकलोपर्येकाङ्को देयः, द्वितीयकलायां द्व्यङ्क एव, एकाङ्कात्पूर्वं कस्यचिदङ्कस्याभावेनैकीकरणासम्भवात् । एककलोपर्यङ्कं द्वितीयकलोपर्यङ्कं चैकीकृत्य त्र्यङ्कं तृतीयकलोपरि, द्व्यङ्कत्र्यङ्कावेकीकृत्य पञ्चाङ्कं चतुर्थोपरि, त्र्यङ्कपञ्चाङ्कावेकीकृत्याष्टाङ्कं पञ्चमोपरि, पञ्चाष्टौ चैकीकृत्य त्रयोदशाङ्कं षष्ठोपरि विन्यसेत् । यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ३ | ५ | ८ | १३ |
| । | । | । | । | । | । |

एवं सर्वत्र पूर्वपूर्वकलाद्वयोपरिस्थाङ्कमेकीकृत्य परपरकलासु न्यसेत् । एवं कृते पृष्टाङ्कमन्तिमकलोपर्यङ्के लोपयेत् । अवशिष्टाङ्कऽव्यवहितपूर्वपूर्वतरमेवाङ्कं यथासम्भवं लुम्पेत् । तत्र यस्य यस्याङ्कस्य लोपो भवति तत्तदधस्तनकलास्वग्रिमकलामादाय गुरुतामेति । एवं यावत्सम्भवं कुर्यात् । प्रस्तुते पृष्टं सप्ताङ्कं त्रयोदशाङ्के विलोप्यावशिष्टषडङ्केऽष्टौ न लुप्यन्त इति पञ्च लोपयेत्, अवशिष्टे एकाङ्के त्रयो द्वौ वा न लुप्येते इति एकाङ्कस्य लोपे शून्यता । एवं कृते पञ्चमैकाङ्कलुप्तत्वात्तदधस्तने मात्रे चतुर्थप्रथमे पञ्चमद्वितीयमात्रे आदाय गुरुतां गच्छतः । एवं कृते सिद्धः षट्कलः सप्तमप्रस्तारः ।

| | | | |
|---|---|---|---|
| १ | ३ | ५ | १३ |
| ऽ | । | ऽ | । |
| २ | | ८ | |

एवं मात्रावृत्तेषु सर्वेषु ज्ञेयम् । बहङ्कवृद्धिप्रसङ्गात्तु नोदाहृतमस्माभिः । यदाहुः—

नष्टे सर्वाः कलाः कार्या अङ्कन्यासस्तु पूर्ववत् ।
पृष्ठोऽङ्कः शेषके लोप्यः परोऽप्यङ्कोऽत्र लुप्यते ॥
यस्य यस्य भवेल्लोपो व्युत्क्रमेण पुनः पुनः ।
तदधो गुरुतामेति परया कलया सह ॥ इति ।

उद्दिष्टस्य रीतेः पूर्वमुक्तत्वापूर्ववदिति । उद्दिष्टवदित्यर्थः । आर्याया मात्रावृत्तत्वादनया रीत्या नष्टसिद्धावपि तन्मात्रविषयो लघुरुपाय आर्याप्रकरणे प्रसङ्गादस्माभिरुक्तः ॥ ४ ॥

इति नष्टम् ॥

---

अथोद्दिष्टम् ।

अथ प्रस्तारशोधनायोपयुक्तमुद्दिशति—

उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान्समालिखेत् ॥
लघुस्था ये च तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ५ ॥

आद्यादक्षरादारभ्योपर्याद्यादेकाङ्कादारभ्य द्विगुणान्द्विगुणानङ्कानुत्तरोत्तरं लिखेत् । तत्र लेखने कृते सति लघुलेखोपरिस्था येऽङ्कास्तैर्मिश्रितैर्यथास्थानं योजितैरेकेनाधिकेन सहितरुद्दिष्टं भवेदिति आद्यद्विगुणशब्दयोरावृत्त्या व्यवहितान्वयेन च व्याख्येयम् । उपरीत्युपलक्षणम् । अधोलेखनेऽप्यक्षतेः । यथा—त्र्यक्षरे प्रस्तारेऽन्तगुरुर्भेदः कतिथ इति प्रश्ने न्यासः—

| | | |
|---|---|---|
| १ | २ | ४ |
| । | । | ऽ |

अत्र लघुस्थैकाङ्कद्व्यङ्कमेलने त्रय एकसहिताश्चत्वारो भवन्ति, ततश्चतुर्थभेदं कथयेत् । एवं चतुरक्षरे आद्यन्तगुरुः कतिथ इति प्रश्ने न्यासः—

| | | | |
|---|---|---|---|
| १ | २ | ४ | ८ |
| ऽ | । | । | ऽ |

अत्र लघुस्थाभ्यां द्व्यङ्कचतुरङ्काभ्यां सैकाभ्यां सप्त भवन्ति, ततः सप्तमोऽयं भेदः । एवं सर्वत्र ।

इति समोद्दिष्टम् ॥

---

अथार्धसमोद्दिष्टम्।

अर्धसमेऽपि चतुरक्षरार्धे ऽ ऽ । ऽ. अयं प्रस्तारः किंसङ्ख्याक इति प्रश्ने न्यासः—

| | | | |
|---|---|---|---|
| १ | २ | ४ | ५ |
| ऽ | ऽ | । | ऽ |

लघुस्थे चतुरङ्के सैकं पञ्चमो भेदः समार्धसमसंसृष्टतायाम्, शुद्धार्धसमेषु पूर्वन्यायेन चतुर्थः। एवं सर्वत्र।

इत्यर्धसमोद्दिष्टम्॥

---

अथ विषमोद्दिष्टम्।

विषमेष्वपि द्व्यक्षरपादकविषमवृत्ते ।। ऽ ऽ ऽ ऽ ऽ ऽ. अयं भेदः कतम इति प्रश्ने न्यासः। यथा ।। ऽ ऽ ऽ ऽ ऽ ऽ. (१ २ ४·८ १६ ३२ ६४ १२८) अत्र लघुस्थावेकद्व्यङ्कौ सैकौ चत्वारस्तावत्सङ्ख्याकं समार्धसममेलनेन जानीयात्, शुद्धविषमेषु तु तृतीयम्। एवं सर्वेषु विषमेषु ज्ञेयम्। अत्र सङ्ग्रहश्लोकः—

प्रथमाद् द्विगुणानङ्कान्प्रस्ताराद्यादुपर्यधो वास्येत्।
लघुगरङ्कैः सैकैर्मिलितैरुद्दिष्टमुद्दिष्टम्॥

इति विषमोद्दिष्टम्॥

---

अथ सूत्रोक्तोद्दिष्टप्रकारः।

सूत्रे तूद्दिष्टे प्रकारान्तरमुक्तम्। यद्वृत्तं जिज्ञासेत्तत्तद्भूमौ प्रस्तार्य तन्मध्यस्थलघुषु योऽन्त्यो लघुस्तदुपर्यधो वैकाङ्कं लिखित्वा तत्रैव तं द्विगुणयेत्। ततस्तत्पूर्वस्मिन्गुरौ लघौ वा तमङ्कं द्विगुणितं कृत्वा पूर्ववन्न्यसेत्। यदा त्वेवंप्रकारे क्रियमाणे गुरुमापद्यते सङ्ख्या तदा तन्मध्ये एकं त्यक्त्वा पुनरुत्तरोत्तरं द्विगुणितं कृत्वा गुरुस्थाने एकं त्यक्त्वा पुनर्द्विगुणनादिक्रमेण यावत्प्रस्तारपूर्तिं कुर्यात्, एवं कृते या सङ्ख्या सम्पद्यते तावतिथं तद्वृत्तं जानीयात्। यथा चतुरक्षरे गुरुलघू द्वौ गुरू चेति वृत्तं कतिथमिति प्रश्ने न्यासः—

| | | | |
|---|---|---|---|
| ३ | २ | | |
| ऽ | । | ऽ | ऽ |
| ४ | १ | | |

अत्र लघ्वधःसङ्ख्याङ्कं द्विगुणयेत्, तं च पूर्वस्माद्गुरोरधो द्विगुणितं चतुरङ्कं विलिख्य गुरुस्थसङ्ख्यात्वादेकं जह्यात्। अवशिष्टस्त्र्यङ्कस्तावतिथं वृत्तमिति।

इति सूत्रोक्तोद्दिष्टप्रकारः॥

---

अथ मात्रावृत्ते उद्दिष्टम् ।

उद्दिष्टवृत्तप्रस्तारं कृत्वा प्रथमकलायां प्रथमाङ्कं दद्यात्, द्वितीयकलायां नष्टन्यायेन द्व्यङ्कम्, ततस्तृतीयकलायामेकद्व्यङ्कौ मेलयित्वा त्र्यङ्कम्, चतुर्थ्यां द्वित्र्यङ्कौ मेलयित्वा पञ्चाङ्कमित्येवं पूर्वपूर्वाङ्कद्वयमेलनं कृत्वोत्तरोत्तरकलायां न्यसेन्नष्टवत् । गुरौ तु मात्राद्वयस्य वर्तमानत्वादङ्कासङ्करार्थमेकोऽङ्क उपरि देयो द्वितीयस्त्वध इति विशेषः । एवमङ्केषु स्थापितेष्वन्त्यकलायां योऽङ्कस्तन्मध्ये गुरुशिरसि स्थिता येऽङ्कास्तानेकीकृत्य पातयेत्, अवशिष्टाङ्कसङ्ख्यां पृष्टवृत्तस्य जानीयात् । यथा—आद्यन्तगुरुः षट्कलप्रस्तारः कतिथ इति पृष्टे न्यासः—

| | | | |
|---|---|---|---|
| १ | ३ | ५ | ८ |
| ऽ | । | । | ऽ |
| २ | | | १३ |

अत्र गुरुशिरस्थैकाङ्काष्टाङ्कौ मिलितौ नव तेऽन्त्यकलास्थत्रयोदशस्वपनेयाः, अवशिष्टाश्चत्वारः । सा सङ्ख्योद्दिष्टप्रस्तारस्य । एवं सर्वेषु मात्रावृत्तेष्वपि ज्ञेयम् ।

इति मात्रोद्दिष्टम् ॥

तदुक्तम्—

पूर्वस्यां प्रथमः समोऽङ्क उपरि स्थाप्यो युगायां द्वयं
संयुज्यकयुगौ त्रयं त्रिषु कलामूर्ध्नि द्वयेन त्रयम् ॥
एकीकृत्य च पञ्चकं जलनिधावेवं कृते लुप्यते
शिष्टे तद्गुरुमूर्धकाङ्क इह चेदुद्दिष्टबोधस्तदा ॥ इति ।

आर्यासु तु प्रकारान्तरमपि तत्प्रकरण एवाभ्यधायि ॥ ५ ॥

इत्युद्दिष्टप्रकरणम् ॥

अथैकद्व्यादिलगक्रिया ।

अथोक्तादिषु सर्वगुर्वेकलघुद्विलघुत्रिलघ्वादिपादकवृत्तकथनद्वारा प्रस्तारशोधनायैकद्व्यादिलगक्रियामाह—

वर्णान्वृत्तभवान्सैकानौत्तराधर्यतः स्थितान् ॥
एकादिक्रमतश्चैतानुपर्युपरि निक्षिपेत् ॥ ६ ॥
उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः ॥
उपर्याद्याद्गुरोरेवमेकद्व्यादिलगक्रिया ॥ ७ ॥

उक्तादिवृत्तनिष्ठान्वर्णान्वर्णसङ्ख्याकानङ्कान्सैकानेकेनाधिकेन सहितानौत्तराधर्येत उत्तराधरभावेन स्थितान्कुर्यादित्यध्याहारः । औत्तराधर्यत इति "गुणवचनब्राह्मणादिभ्यः कर्मणि च" (पा०स०५-१-१२४)

इति ब्राह्मणादित्वाद्भावे ष्यञ् । ततस्तसिः । एतान्पूर्वस्थापितानङ्कानेकद्वयादिक्रमेणोपर्युपर्यङ्के निक्षिपेन्मेलयेत् । मेल्यमानाङ्कसमसङ्ख्याया उपरि क्षेपो मेलनं, न तु स्वस्यैव । स्वरूपतस्तत्स्थाने शून्यताप्रसक्त्या द्वितीयादिमेलनावृत्त्यभावापत्तेः । अधस्तनमेकाङ्कं तदुपर्येकाङ्के मेलयित्वा द्व्यङ्कं कुर्यात्, तं तृतीयैकाङ्के संयोज्य त्र्यङ्कं कुर्यादित्येवमुत्तरोत्तरं कुर्यादित्यर्थः । उपान्त्यस्याप्यन्तमेलने प्रसक्तेऽपवादमाह—उपान्त्यत इति । उपान्त्यपर्यन्तं मेलनं कृत्वा तमन्त्येऽमेलयित्वैवं प्रत्यावृत्त्येकैकं त्यजन्निवर्तेत विरमेत् । अन्त्यश्च प्रथममेलने सर्वोपरितनः, द्वितीयमेलनावृत्तौ तदधोभावी द्वितीयः, तृतीयावृत्तौ तदधोभावी तृतीय इत्येवमुत्तरोत्तरो ज्ञेयः । उपान्त्यश्चान्त्याधोभावी । प्रतिमेलनावृत्तकमेकमङ्कं त्यक्त्वाऽधस्तनान्मेलयेदिति फलितार्थः । एकैकमिति वीप्सया सर्वाधस्तनाङ्कपर्यन्तं पुनःपुनर्मेलनावृत्तिः कार्येत्यसूसुचत् । सिद्धमाह—उपरीति । एवं कृत आद्यात्प्रथमाद् गुरोः सर्वगुरोर्भेदादुपर्यनन्तरमेकद्वित्र्यादीनां लघूनां क्रिया ज्ञेयेति शेषः । प्रथममेकः सर्वगुरुस्तदधस्तनाङ्कसङ्ख्या एकलघवः तदधोऽङ्कसङ्ख्या द्विलघवः, चतुर्थाङ्कसङ्ख्यास्त्रिलघवः, एवमधोभाव्यङ्कसङ्ख्याश्चतुर्लघ्वादिभेदा ज्ञेया इत्यर्थः । एवं प्रथमः सर्वगुरुः, द्वितीयाङ्के एकगुरवः, तृतीयाङ्के द्विगुरवः, चतुर्थाङ्के त्रिगुरवः, इत्यादिप्रकारेण गुरुक्रिया । अत्र त्र्यक्षरे उदाहरणं १. १. १. १. एवं सैकान्वृत्तवर्णसङ्ख्यानेकाङ्कान्न्यसेत् । चतुरक्षरे च यथा—१. १. १. १. १. ततोऽधस्तनमेकाङ्कं तदुपरिस्थैकाङ्के संयोज्य द्व्यङ्कं कुर्यात् । यथा—त्र्यक्षरे १. १. २. १ चतुरक्षरे च यथा—१. १. १. २. १. द्वितीयं तृतीये मेलयेत् । आद्ये यथा—१.३.२.१. द्वितीये यथा—१. १. ३. २. १. तृतीयं चतुर्थे मेलयेत् । चतुरक्षरोदाहरणे १. ४. ६. ३. २. १. । त्र्यक्षरे तु न मेलयेत् । उपान्त्यतो निवर्ततेत्युक्तेः । पुनस्त्र्यक्षरेऽधस्तनं द्वितीये मेलयेत् । यथा—१.३.३.१. त्र्यक्षरे एतावतैव सिद्धिः चतुरक्षरे त्वधस्तनं द्वितीये मेलयेत् । यथा-१. ३. ३. ४. १. द्वितीयं तृतीये यथा-१.४. ६. ४. १. ततो मेलनं नास्ति । एवं त्र्यक्षरे एकः सर्वगुरुर्भेदः, त्रय एकलघवः, त्रयो द्विलघवः, एकः सर्वलघुरिति । गुरुक्रियायां त्वेकः सर्वगुरुः, त्रय एकगुरवः, त्रयो द्विगुरवः, एकः सर्वलघुरिति सिद्धम् । चतुरक्षरे एकः सर्वगुरुः--ऽ ऽ ऽ ऽ. चत्वार एकलघवः—। ऽ ऽ ऽ (१), ऽ । ऽ ऽ (२), ऽ ऽ । ऽ (३), ऽ ऽ ऽ । (४), षट् द्विलघवः—। । ऽ ऽ (१), । ऽ । ऽ (२), ऽ । । ऽ (३), । ऽ ऽ । (४), ऽ । ऽ । (५), ऽ ऽ । । (६), चत्वारस्त्रिलघवः—। । । ऽ (१), ऽ । । । (२), । ऽ । । (३), । । ऽ । (४), एकः सर्वलघु भेदः—। । । ।. एवं गुरुभेदा अपि । एवं सर्वत्र ।

इति समलगक्रिया ॥

समवृत्तलगक्रियाज्ञानोपयुक्तानि कोष्ठकानि । तत्रोक्तायां छिमात्रविकल्पतया न कोष्ठकापेक्षा । अग्रे च गायत्रीपर्यन्तं दिङ्मात्रदर्शनाय कोष्ठकानि लिखितानि । उष्णिगादिष्वप्येवमेवोन्नेयानि ।

अत्युक्तायां यथा–

| | |
|---|---|
| २S | |
| २ | १S१। |
| १ | २ | 
| १ | १ |

मध्यायां यथा–

| | | |
|---|---|---|
| ३S | | |
| २ | २S१। | |
| १ | २ | १S२। |
| १ | २ | ३ |
| १ | १ | १ |

प्रतिष्ठायां यथा–

| | | | |
|---|---|---|---|
| ४S | | | |
| २ | ३S१। | | |
| १ | ३ | २S२। | |
| १ | ३ | ४ | १S३। |
| १ | २ | ३ | ३ |
| १ | १ | १ | १ |

सुप्रतिष्ठायां यथा-

| | | | | |
|---|---|---|---|---|
| १ | | | | |
| १ | ४ | | | |
| १ | ३ | ६ | | |
| १ | २ | ३ | ४ | |
| १ | १ | १ | १ | १ |

१ ५ऽ

५ ४ऽ१।

१० ३ऽ२।

१० २ऽ३।

५ १ऽ४।

१ ५।

गायत्र्यां यथा

| | | | | | |
|---|---|---|---|---|---|
| १ | | | | | |
| १ | ५ | | | | |
| १ | ४ | १० | | | |
| १ | ३ | ६ | १० | | |
| १ | २ | ३ | ४ | ५ | |
| १ | १ | १ | १ | १ | १ |

१ ६ऽ

६ ५ऽ१।

१५ ४ऽ२।

२० ३ऽ३।

१५ २ऽ४।

६ १ऽ५।

१ ६।

अथार्धसमलगक्रिया ।

अर्धसमे तु विशेषः । द्व्यक्षरार्धसमानां षोडश भेदाः पूर्वोक्तरीत्या । तन्मध्ये प्रथमषष्ठैकादशषोडशांश्चतुरो भेदान्ह्रापयेत् । यथा—चतुरक्षरप्रस्तारे एकद्व्यादिलगक्रियायां कृतायां प्रथमान्त्यौ त्याज्यौ समत्वात्, षष्ठैकादशौ द्विलघुत्ववृत्तसङ्ख्याबोधके षडङ्के स्याज्यौ । एवं कृते न्यासः ४ ४ ४, ततश्चत्वार्येकलघूनि, चत्वारि द्विलघूनि, चत्वारि त्रिलघूनि वृत्तानीति द्व्यक्षरार्धसमभेदा द्वादश । एवमन्यत्राप्येकद्व्यादिलघुकान्समभेदानेकद्व्यादिलघुकवृत्तसङ्ख्याबोधकाङ्के पातयित्वाद्यान्त्यौ च भेदौ त्यक्त्वाऽवशिष्टाङ्कैरेकद्व्यादिलगक्रियाऽर्धसमेषूह्या ।

इत्यर्धसमलगक्रिया ॥

---

अथ विषमलगक्रिया ।

विषमेषु तु द्व्यक्षरपादस्य कथ्यते । अष्टाक्षरजातेस्तावदेकद्व्यादिलगक्रियायां पूर्वोक्तरीत्या कृतायां न्यासः । १ । ८ । २८ । ५६ । ७० । ५६ । २८ । ८ । १ । अत्र समार्धसमरूपत्वात्प्रस्तारकरणोक्तप्रकारेण षोडश भेदा यथास्थानं पात्याः । यथा एकलघवो हेयेषु न सन्ति, द्विलघवश्चत्वारस्तदीयेऽष्टाविंशत्यङ्के हेयाः, त्रिलघवो हेयेषु न सन्त्येव, चतुर्लघवः षट् सप्तत्यङ्के हेयाः, पञ्चलघवस्तु हेयेषु न सन्त्येव, षट्लघवश्चत्वारोऽष्टाविंशत्यङ्के हेयाः, सप्त लघवो न सन्तीति आद्यान्त्यौ चैकाङ्कौ त्याज्यौ । एवं कृते द्व्यक्षरविषमस्य एकद्व्यादिलगक्रियाङ्कन्यासः—८ । २४ । ५६ । ६४ । ५६ । २४ । ८ । अत्राष्टावेकलघवश्चतुर्विंशतिः द्विलघव इत्यादि पूर्ववत्कथनीयम् । एवमन्येष्वपि विषमेष्वपि ज्ञेयम् ।

इति विषमलगक्रिया ॥

---

सङ्ग्रहश्लोकः—

छन्दोवर्णमितानुपर्यधरगान्सैकान्मुखाङ्कांल्लिखे-
देकैकं शिरसि त्यजन्नधरगानूर्ध्वेषु संयोजयेत् ॥
भेदः सर्वगुरुर्मुखे तदनु चैकद्व्यादिलघ्वन्विता
प्रान्ते सर्वलघुः क्रिया लघुगतैवं स्याद् गुरूणामपि ॥

---

अथ भास्कराचार्योक्तो लगक्रियाप्रकारः ।

भास्कराचार्यैस्तु लीलावत्यां लघुगुरुक्रियायां प्रकारान्तरमभ्यधायि । तदुच्यते—वृत्तपादाक्षरसङ्ख्याङ्कानेकाद्यङ्कानुपरि व्युत्क्रमेण विन्यस्य

तदधस्तानेव क्रमेण न्यसेत्। ततोऽधस्तनेन स्वोपरिस्थो भाज्यः, भागेन लब्धेन तदग्रिमो गुणयः, तदधस्तनेन च भाज्यः। लब्धेनाग्रिमं गुणयेत्, तदधस्तनेन भागं हरेत्, इत्येवं यावदङ्कसमाप्ति कार्यम्। लब्धाङ्काश्च क्रमेण स्थाप्याः। एवं कृते लब्धाङ्केषु प्रथमेनैकगुरवो ज्ञेयाः, द्वितीयेन द्विगुरव इत्यादि ज्ञेयम्। इदं षडक्षरपादे गायत्रीवृत्ते योज्यते न्यासः—

| | | | | | |
|---|---|---|---|---|---|
| ६ | ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ | ६ |

अत्रैकेन षण्णां भागे लब्धाः षट्, षड्भिः पञ्चसु गुणितेषु ३० द्वाभ्यां भक्ते लब्धाः १५, एतैश्चतुर्षु गुणितेषु ६० त्रिभिर्भागे लब्धं २०, एभिस्त्रिषु गुणितेषु ६० चतुर्भिर्भागे लब्धं १५, एतैर्द्वयोर्गुणनेन ३० पञ्चभिर्भागे लब्धं ६, एतैरेकस्मिन्गुणितं षडेव षड्भिर्भागे लब्धं १, एतेषां क्रमेण विभक्तानां न्यासः—६। १५। २०। १५। ६। १। एकगुरवः ६, द्विगुरवः १५, त्रिगुरवः २०, चतुर्गुरवः १५, पञ्चगुरवः ६, सर्वगुरुः सर्वलघुरेकः स्वतःसिद्ध एव। एवमन्यत्रापि योज्यम्। तदाहुर्लीलावतीकाराः—

एकाद्येकोत्तरा अङ्का व्यस्ता भाज्याः क्रमस्थितैः।
परः पूर्वेण सङ्गुण्यस्तत्परस्तत्परेण च॥
एकद्वित्र्यादिभेदाः स्युरिदं साधारणं स्मृतम्।
छन्दश्चित्युत्तरे छन्दस्युपयोगोऽस्ति तद्विदाम्॥ इति।

---

अथ सूत्रकारोक्तो लगक्रियाप्रकारः।

अथैकद्व्यादिलघुगुरुक्रियासिद्ध्यर्थमेव सूत्रकारोक्तो मेरुप्रस्तारः। तत्र प्रथममेकं चतुरस्रं कोष्ठं लिखेत्। तदध उभयतोऽर्धनिष्क्रान्तं कोष्ठद्वयम्। तदधस्तथैव त्रयम्। तदधस्तथैव चतुष्टयम्। इत्येवं षड्विंशतिकोष्ठलेखनं यावत्कार्यम्। उपरि कोष्ठे एकाङ्को देयः तथा प्रतिपङ्क्ति आद्यन्तकोष्ठेषु एकाङ्क एव। तृतीयपङ्क्तौ मध्यमकोष्ठे शून्ये तदुपरिगतकोष्ठद्वयगतैकाङ्कावेकीकृत्य द्व्यङ्कं न्यसेत्। एवं चतुर्थपङ्क्तौ मध्यकोष्ठयोरुपरिगतकोष्ठद्वयाङ्कमेकीकृत्य त्र्यङ्कौ। एवं सर्वत्रोपरितनकोष्ठद्वयाङ्कमेकीकृत्याधस्तनकोष्ठे दद्यात्। एवं षड्विंशतिकोष्ठकपङ्क्ति यावत्कार्यम्। तदुक्तम्—

आदावेकं लिखेत्कोष्ठं तदधो द्वे च संलिखेत्।
तदधस्त्रीणि कोष्ठानि एवं रूपेण वर्धयेत्॥
आदावन्ते लिखेदेकं मध्यं कोष्ठं च पूरयेत्।
लेख्यकोष्ठोपरिप्रान्तरग्रिमाङ्केन संयुतैः॥ इति।

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | १ | | | | | | | | | | | | | |
| १ | १ | १ | २ | | | | | | | | | | | |
| २ | १ | २ | १ | ४ | | | | | | | | | | |
| ३ | १ | ३ | ३ | १ | ८ | | | | | | | | | |
| ४ | १ | ४ | ६ | ४ | १ | १६ | | | | | | | | |
| ५ | १ | ५ | १० | १० | ५ | १ | ३२ | | | | | | | |
| ६ | १ | ६ | १५ | २० | १५ | ६ | १ | ६४ | | | | | | |
| ७ | १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | १२८ | | | | | |
| ८ | १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | २५६ | | | | |
| ९ | १ | ९ | ३६ | ८४ | १२६ | १२६ | ८४ | ३६ | ९ | १ | ५१२ | | | |
| १० | १ | १० | ४५ | १२० | २१० | २५२ | २१० | १२० | ४५ | १० | १ | १०२४ | | |
| ११ | १ | ११ | ५५ | १६५ | ३३० | ४६२ | ४६२ | ३३० | १६५ | ५५ | ११ | १ | २०४८ | |
| १२ | १ | १२ | ६६ | २२० | ४९५ | ७९२ | ९२४ | ७९२ | ४९५ | २२० | ६६ | १२ | १ | ४०९६ |

( एवं षड्विंशतिकोष्ठकपङ्क्ति यावत्पूरणीयम् । )

अत्रोद्धारप्रकारोऽयं मेरोः—अत्र द्विकोष्ठायां द्वितीयपङ्क्तौ एकाक्षर पादाया उक्तायाँ लगक्रिया । तृतीयायां द्वितीयपङ्क्तौ अत्युक्ताया इत्येवं क्रमेण षड्विंशतिजातीनां निवेशः । स चैकाङ्कोपरिगतप्रतिपङ्क्तिगतद्विती-यकोष्ठस्थाङ्केन ज्ञेयः । तत्र द्वितीयपङ्क्तावेकं सर्वलघु, एकं सर्वगुरूक्ता-याम् । तृतीयपङ्क्तावेकं सर्वगुरु द्वे एकलघुनी एकं सर्वलघ्वित्यत्युक्ता-याम् । चतुर्थपङ्क्तावेकं सर्वगुरु, त्रीण्येकलघूनि, त्रीणि द्विलघूनि, एकं सर्वलघ्वितिप्रकारेणैकद्वित्र्यादिलघुगुरुक्रिया सर्वेषु ज्ञेयेति सूचिमेरुप्र-स्तारः । गुरुलघुसङ्ख्यासूचकत्वात्सूचिः मेरुसंस्थानत्वाच्च मेरुरिति ।

इति मेरुप्रस्तारः ॥

---

अथ पताकाप्रस्तारः ।

अत्र प्रस्तारे कृते सर्वगुरुः कुत्र स्थानेऽस्ति, तदपेक्ष्यैकन्यूनगुरुः कु-त्रास्ति । ततोऽप्येकन्यूनगुरुः कुत्रास्ति, इत्येवंप्रकारे प्रश्ने तत्स्थानज्ञानार्थं पताकाप्रस्ताराः कथ्यन्ते । यत्सङ्ख्याक्षरप्रस्तारे प्रश्नस्तद्दक्षरसङ्ख्या-कान्कोष्ठानेकाधिकांल्लिखित्वा तेषूद्दिष्टवदेकाङ्कादारभ्योत्तरोत्तरद्विगुणा अ-ङ्का देयाः । ततः प्रथमाङ्केन द्यादीनां संयोजनं कृत्वा द्यङ्कादधः कोष्ठका-न्कृत्वा तेषु संयुक्ताङ्कांल्लिखेत् । अन्तिमेन प्रथमाङ्को न योज्यः । तावत्स-ङ्ख्यस्य तत्र वृत्तस्याभावात् । ततो द्वितीयाङ्कं तृतीयकोष्ठाद्यङ्कैरुपास्य-

पर्यन्तैः संयोज्य तृतीयकोष्ठाधः कोष्ठकान् कृत्वा तेषु लिखेत्, द्वितीयाङ्क-कोष्ठाधःस्थरप्यङ्कैस्तृतीयकोष्ठस्थितचतुरङ्कं संयोज्य तस्यामेव पङ्क्ताव-धो लिखेत्, एवं चतुरङ्कमष्टादिभिः संयोज्याष्टमाङ्काऽधो लिखेत्, तद-धोऽपि चतुरङ्काधःपङ्क्तिस्थैरष्टमाङ्कं संयोज्य लिखेत्, एवं सर्वत्र याव-दङ्कसमाप्ति लेख्यम्। एवं क्रियमाणे यत्र प्रस्तारसङ्ख्याधिकसङ्ख्या पठ्यते सा न लेख्या। एकत्र लिखिता चापरत्र न लिखितव्या किन्तु तदग्रिमसङ्ख्यायोगस्तदधःसङ्ख्यायोगो वा कार्यः। एवं सर्वत्र। तथा च प्रथमस्थाने सर्वगुरुः द्वितीयपङ्क्तिस्थेषु द्वितीयादिस्थानेषु विवक्षितसर्वगुरुमध्ये एकं न्यूनं कृत्वा तावद्गुरुकभेदस्थानानि। एवं तृतीयादिपङ्क्तिष्वेकैकगुरुन्यूनप्रस्तारस्थानानि। यद्वा प्रथमः सर्वगुरुर्द्वितीयपङ्क्तावेकलघुस्थानानि, तृतीयपङ्क्तौ द्विलघुस्थानानीत्यादि ज्ञेयम्। तदुक्तम्—

एको द्वावथ चत्वारस्ततोऽष्टाविति वर्धनम्।
पूर्वं परेण संयोज्य तदधो लेखयेद् बुधः॥
अन्तिमाङ्कावधिं नैव लङ्घयेदत्र कुत्रचित्।
एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्॥

अत्रोदाहरणमेकाक्षरे १। २ अस्य द्विविकल्पत्वादेकस्थानस्थ एकगुरुः, द्वितीयस्थ एकलघुरिति। एतावतैव सिद्धिः। द्व्यक्षरे यथा—

| | | |
|---|---|---|
| १ | २ | ४ |
| | ३ | |

अत्रैकाङ्कद्व्यङ्कयोः संयोजने त्र्यङ्को द्व्यङ्काधो लेख्यः, तस्य चतुर्विकल्पत्वात्तावतैव सिद्धिः। प्रथमस्थानस्थैकः सर्वगुरुः, द्वितीयतृतीयस्थानस्थौ एकगुरुरेकलघुर्वा, चतुर्थस्थानस्थः सर्वलघुरिति। त्र्यक्षरे यथा—

| | | | |
|---|---|---|---|
| १ | २ | ४ | ८ |
| | ३ | ६ | |
| | ५ | ७ | |

अत्र पञ्चाङ्कस्य चतुरङ्कयोजनं न कार्यम्, नवमभेदाभावात्। तेन त्र्यङ्कस्य चतुरङ्कस्य संसृष्टौ सप्त षडधो निवेश्या इति।

चतुरक्षरे पताका यथा—

| | | | | |
|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ |
| | ३ | ६ | १२ | |
| | ५ | १० | १४ | |
| | ९ | ७ | १५ | |
| | | ११ | | |
| | | १३ | | |

अत्रैकं द्वाभ्यां सह त्रयं द्व्यङ्काधः, एकं चतुर्भिः सह पञ्च त्र्यङ्काधः, एकाष्टयोगे नव पञ्चाधः, द्विचतुर्योगे षट् चतुरधः, द्व्यष्टयोगे दश षडधः, द्विषोडशयोगो न कार्यः। त्रिचतुर्योगे सप्त दशाधः पञ्चचतुर्योगे नव एकत्र लिखितत्वान्न लेख्याः, त्र्यष्टयोग एकादश सप्ताधः, त्रिषोडशयोगो न कार्यः। पञ्चाष्टयोगे त्रयोदश एकादशाधः, चतुरष्टयोगे द्वादशाष्टाधः, चतुःषोडशयोगो न कार्यः, षडष्टयोगे चतुर्दश द्वादशाधः, दशाष्टयोगो न, सप्ताष्टयोगे पञ्चदश चतुर्दशाधः। अत्र प्रथमस्थाने सर्वगुरुः, द्वित्रिपञ्चनवस्थाने त्रिगुरवः एकलघवो वा, चतुःषट्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विगुरवो द्विलघवो वा, अष्टद्वादशचतुर्दशपञ्चदशस्थानेष्वेकगुरवस्त्रिलघवो वा, षोडशस्थाने सर्वलघुरिति योजना।

पञ्चाक्षरपताका यथा—

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ |
| | ३ | ६ | १२ | २४ | |
| | ५ | १० | २० | २८ | |
| | ९ | १८ | १४ | ३० | |
| | १७ | ७ | २२ | ३१ | |
| | | ११ | २६ | | |
| | | १९ | १५ | | |
| | | १३ | २३ | | |
| | | २१ | २७ | | |
| | | २५ | २९ | | |

षडक्षरपताका यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
| | ३ | ६ | १२ | २४ | ४८ | |
| | ५ | १० | २० | ४० | ५६ | |
| | ९ | १८ | ३६ | २८ | ६० | |
| | १७ | ३४ | १४ | ४४ | ६२ | |
| | ३३ | ७ | २२ | ५२ | ६३ | |
| | | ११ | ३८ | ३० | | |
| | | १९ | २६ | ४६ | | |
| | | ३५ | ४२ | ५४ | | |
| | | १३ | ५० | ५८ | | |
| | | २१ | १५ | ३१ | | |
| | | ३७ | २३ | ४७ | | |
| | | २५ | ३९ | ५५ | | |
| | | ४१ | २७ | ५९ | | |
| | | ४९ | ४३ | ६१ | | |
| | | | ५१ | | | |
| | | | २९ | | | |
| | | | ५३ | | | |
| | | | ४५ | | | |
| | | | ५७ | | | |

अनयोरेकद्व्यादिगुरुस्थानं पूर्ववदेव वक्तव्यम् ।

इति पताकोद्भावनिका ॥

---

अथ मात्रामेरुप्रस्तारः ।

तत्रककलद्विकलत्रिकलादिषु कति सर्वगुरवः कति चैकगुर्वादय इति बुभुत्सायां तद्बोधार्थं तत्प्रस्तारः । यथा—उपर्येककोष्ठं लिखित्वा तदधः कोष्ठद्वययुतं पङ्क्तिद्वयं तदधः कोष्ठत्रययुतं पङ्क्तिद्वयं ततः कोष्ठचतुष्टययुतं पङ्क्तिद्वयं इत्येवंरूपेण यावदिच्छमेकैकं कोष्ठं वर्धयित्वा पङ्क्तिद्वयं द्वयं लेख्यम् । एवं कृते उपरि कोष्ठके एकाङ्को देयः, सर्वपङ्क्त्यन्तकोष्ठे च स एव देयः, पङ्क्त्यादिकोष्ठेषु एकान्तरेण द्व्यादयोऽङ्का वृद्ध्या देयाः । यथा—प्रथमपङ्क्तिप्रथमकोष्ठे

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| | १ | १ | | | | | | | | |
| २ | १ | १ | २ | | | | | | | |
| ३ | २ | १ | ३ | | | | | | | |
| ४ | १ | ३ | १ | ५ | | | | | | |
| ५ | ३ | ४ | १ | ८ | | | | | | |
| ६ | १ | ६ | ५ | १ | १३ | | | | | |
| ७ | ४ | १० | ६ | १ | २१ | | | | | |
| ८ | १ | १० | १५ | ७ | १ | ३४ | | | | |
| ९ | ५ | २० | २१ | ८ | १ | ५५ | | | | |
| १० | १ | १५ | ३५ | २८ | ९ | १ | ८९ | | | |
| ११ | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ | | | |
| १२ | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ | | |
| १३ | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | ३७७ | | |
| १४ | १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० | |
| १५ | ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ | |

प्रथमाङ्कः, द्वितीयपङ्क्त्याद्यकोष्ठे द्वितीयाङ्कः, तृतीयपङ्क्त्याद्ये एकाङ्कः, चतुर्थपङ्क्त्याद्ये त्र्यङ्कः, तत एकः, ततश्चतुष्टयमिति क्रमेणाद्यकोष्ठपूरणमिति । एवमाद्यन्तकोष्ठपूरणे कृते समानकोष्ठकपङ्क्तिद्वयमध्ये उपरिपङ्क्तिमध्यस्थितशून्यकोष्ठेषु पूरणीयकोष्ठोपरिस्थकोष्ठद्वयाद्यकोष्ठाङ्केन तदुपरिस्थितकोष्ठाग्रिमकोष्ठाङ्कमेकीकृत्य योऽङ्कस्तं दद्यात् । द्वितीयपङ्क्तिमध्यस्थकोष्ठेषु तु पूरणीयकोष्ठोपरिस्थकोष्ठाङ्केन तदुपरिस्थितकोष्ठद्वयमध्येऽन्त्यकोष्ठाङ्कमेकीकृत्य दद्यात् । एवं कोष्ठपूरणे कृते प्रथमकोष्ठे एककलस्य न्यासः, द्वितीयपङ्क्तौ द्विकलस्य, तृतीयपङ्क्तौ त्रिकलस्य, चतुर्थ्यां चतुष्कलस्य, पञ्चम्यां पञ्चकलस्येत्येवं क्रमेण न्यासः । तत्रैककले एक एव सर्वलघुरेकलघुरूपः, द्विकले एकः सर्वगुरुरेकगुरुरूप एकः सर्वलघुर्द्विलघुरूपः । त्रिकले सर्वगुर्वभावाद् द्वावेकगुरू एकः सर्वलघुः, चतुर्थपङ्क्तौ चतुष्कले सर्वगुर्वात्मक एकः, एकगुर्वात्मकं त्रयं, सर्वलघुरेकः, पञ्चम्यां पञ्चकलेषु सर्वगुर्वभावाद् द्विगुर्वात्मकं त्रयमेकगुर्वात्मकं चतुष्कं सर्वलघुरेकः । षष्ठ्यां षट्कलेषु एकः सर्वगुरुः, षट् द्विगुरवः पञ्चैकगुरवः, एकः सर्वलघुरित्येवं ज्ञेयम् । तत्तत्पङ्क्त्यङ्कानेकीकृत्य तत्तत्सङ्ख्या च ज्ञेया । यथा—षट्कले एक-षट्-पञ्चैकाङ्कानां मेलने त्रयोदश प्रागुक्ता भेदा भवन्ति । एवमन्यत्र ।

इति मात्रामेरुप्रस्तारः ॥

---

अथ मात्राखण्डमेरुः ।

यद्वा मात्रावृत्तेषु कत्येकगुरवः, कति द्विगुरव इत्यादिज्ञानार्थं खण्डमात्रामेरुः कार्यः । यथा—उपर्येकः कोष्ठो लेख्यः, तदधो दक्षिणतो वामतो वातिक्रान्तैककोष्ठकं कोष्ठद्वयवत्पङ्क्तिद्वयम् । तदधस्तथैव कोष्ठत्रयवत्पङ्क्तिद्वितयम् । तदधस्तथैव कोष्ठचतुष्टयवत्पङ्क्तिद्वयम्, तदधः कोष्ठपञ्चकोपेतपङ्क्तिद्वयमित्येवंप्रकारेण यावदिच्छं कुर्यात् । एवं कोष्ठेषु लिखितेषु कोष्ठबहिर्निर्गमप्रदेशेऽन्त्यकोष्ठेषु एकद्वि-एकत्र्येकचतुरादिक्रमेणैकान्तरेणैकोत्तरवृद्ध्याङ्का देयाः, द्वितीयप्रदेशेऽन्त्यकोष्ठेषु सर्वत्रैकाङ्का देयाः । मध्यकोष्ठे तु स्वोपरि कोष्ठाङ्केन तदुपरि कोष्ठपुरःस्थितकोष्ठाङ्कमेकीकृत्य पूर्ववल्लिखेत् । यथा—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | | १ | १ | २ |
| | | | | | | २ | १ | ३ |
| | | | | | १ | ३ | १ | ५ |
| | | | | | ३ | ४ | १ | ८ |
| | | | | १ | ६ | ५ | १ | १३ |
| | | | | ४ | १० | ६ | १ | २१ |
| | | | १ | १० | १५ | ७ | १ | ३४ |
| | | | ५ | २० | २१ | ८ | १ | ५५ |
| | | १ | १५ | ३५ | २८ | ९ | १ | ८९ |
| | | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ |
| | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ |
| | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | ३७७ |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| ८ | ८४ | २५२ | ३३०. | २२० | ७८ | १४ | १ | ९८७ |

अत्र प्रथमपङ्क्तावेकमात्रस्य न्यासः । द्वितीयपङ्क्तौ द्विकलस्य, तृतीयायां त्रिकलस्येत्येवं पूर्ववन्न्यासः । सर्वगुर्वेकगुर्वादिकथनं च पूर्ववदेव कार्यम् । प्रतिपङ्क्तिप्रस्तारसङ्ख्याज्ञानार्थं तत्तत्पङ्क्तिस्थान्सर्वानङ्कानेकीकृत्य सिद्धमङ्कमेकाङ्कात्परतो बहिर्लिखेत् । मात्रामेरौ मात्राखण्डमेरौ च सम्मतिः ।

आदावेकं न्यसेत्कोष्ठं तदधः पङ्क्तियुग्मके ।
द्वौ द्वौ च तदधस्त्रींस्त्रीनेवं रूपेण वर्धनम् ॥
अन्तकोष्ठेषु सर्वेषु प्रथमाङ्कं न्यसेत्सुधीः ।
आदौ चैकं ततो द्वौ च पुनश्चैकं ततस्त्रयम् ॥

एकान्तरं च वृद्धाङ्कमेवं रूपेण पूरणम् ।
मध्यकोष्ठं ततः प्राज्ञैः पूरणीयं शिरःस्थितैः ॥
शिरःस्थितोर्ध्वकाग्राङ्कमेकीकृत्य प्रपूरयेत् ।
एवं क्रमेण सिद्धः स्यान्मात्रामेरुर्न संशयः ॥ ७ ॥

इति खण्डमात्रामेरुः ॥(१)

---

अथ सङ्ख्यानम् ।

अथ क्रमप्राप्तां सङ्ख्यामाख्याति—

लगक्रियाङ्कसन्दोहे भवेत्सङ्ख्या विमिश्रिते ॥
उद्दिष्टाङ्कसमाहारः सैका वा जनयेदिमाम् ॥ ८ ॥

---

(१) अथ मर्कटी ।

मात्रामर्कटीवर्णमर्कटीभेदेन द्विधा सा । तत्र इयतीनां मात्राणां प्रस्तारे इयन्तो गुरुवर्णाः इयन्तो लघवः इयन्तः सर्वे सम्भूय वर्णाः इयत्यः कलाः इत्यादि सर्वमेकत्र मात्राच्छन्दसामनया ज्ञायते इतिमात्रामर्कट्युपयोगः । तथैव वर्णमर्कट्याऽपि प्रस्तारजन्या छन्दःसङ्ख्या तदन्तर्गता लघुगुरुवर्णसङ्ख्या लघुगुर्वन्ता रूपसङ्ख्या सर्वकलासङ्ख्या इत्यादि सर्वमेकत्र वर्णच्छन्दसां ज्ञायत इति वर्णमर्कट्युपयोगः । तत्रादौ मात्रामर्कट्या रीतिः प्रस्तूयते—तथाहि—ऊर्ध्वा रेखाः षट् लेख्याः।यावतीनां मात्राणां मर्कट्याश्चिकीर्षा तावत्य अधोरेखा लेख्याः । एवं कृते यथेष्टकोष्ठकानि भविष्यन्ति तत्र अपेक्षितमात्रापर्यन्तं प्रथमपङ्क्त्यां क्रमेण एकद्वित्रिचतुराद्यङ्का लेख्याः। द्वितीयपङ्क्त्यां एकद्वित्रिपञ्चाष्टादिभेदसङ्ख्या लेख्या । तृतीयपङ्क्त्यां ऊर्ध्वकोष्ठद्वयस्थाङ्कयोर्गुणनफलाङ्काः क्रमेण लेख्याः । एवं च सा पङ्क्तिः सर्वकलाबोधिका भवति । चतुर्थपञ्चमपङ्क्त्योः पूर्वं षष्ठ्यां पङ्क्त्यामङ्का लेख्याः। ते यथा षष्ठपङ्क्त्याः प्रथमकोष्ठे एकाङ्को लेख्यः तमङ्कं द्विगुणीकृत्य तृतीयपङ्क्तिस्थद्वितीयकोष्ठस्थिताङ्कं ह्रापयित्वा शिष्टमङ्कं षष्ठपङ्क्त्यां द्वितीयकोष्ठे न्यसेत् । पुनस्तमङ्कं द्विगुणीकृत्य तृतीयपङ्क्तिस्थतृतीयकोष्ठस्थिताङ्के ह्रापयित्वा शिष्टमङ्कं षष्ठपङ्क्त्यां तृतीयकोष्ठे न्यसेत् । एवं यावत्पङ्क्तिसमाप्ति कार्यम् । सेयं षष्ठी पङ्क्तिः लघ्वक्षरबोधिका भवति । पञ्चमपङ्क्त्यां प्रथमकोष्ठे (०) शून्यं स्थापयेत् । द्वितीयादिकोष्ठेषु षष्ठपङ्क्तिस्थिता एकाद्यङ्काः क्रमेण स्थाप्याः । सा चेयं पञ्चमीपङ्क्तिर्गुर्वक्षरविबोधिना भवति चतुर्थपङ्क्त्यामधोऽधःस्थितकोष्ठद्वयस्थाङ्कयोर्मेलनाङ्कः स्थाप्यः । सैषा चतुर्थी पङ्क्तिः स्यात्सर्ववर्णविबोधिनी । इति यथा ।—

लगक्रियायां पूर्वोक्तायां येऽङ्काः सिद्धास्तेषां समूहे मिलिते योजिते सति योऽङ्कः सा सङ्ख्या भवेत्। त्र्यक्षरे यथा—१. ३. ३. १. एतेषामेकत्रित्र्येकाङ्कानां मेलनेऽष्टौ प्रस्ताराः। चतुरक्षरे च—१. ४. ६. ४. १. एषामेकचतुःषट्चतुरेकाङ्कानां मेलने षोडश। प्रकारान्तरेण सङ्ख्यामाह—उद्दिष्टेति। पूर्वोक्तानामुद्दिष्टानामङ्कानां सैक एकसहितः समाहारो मेलनम्, अथवेमां सङ्ख्यां जनयेदुत्पादयेत्। तद्यथा—त्र्यक्षरे एकद्विचतूरूपा उद्दिष्टाङ्काः सप्त एकमेलनेऽष्टौ सा तस्य सङ्ख्या, चतुरक्षरे च एकद्विच-

सप्तमात्रापर्यन्तं मर्कटीचक्रम्।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | जात्यङ्काः | १ | २ | ३ | ४ | ५ | ६ | ७ |
| २ | भेदाः | १ | २ | ३ | ५ | ८ | १३ | २१ |
| ३ | सर्वमात्राः | १ | ४ | ९ | २० | ४० | ७८ | १४७ |
| ४ | सर्ववर्णाः | १ | ३ | ७ | १५ | ३० | ५८ | १०९ |
| ५ | गुरवः | ० | १ | २ | ५ | १० | २० | ३८ |
| ६ | लघवः | १ | २ | ५ | १० | २० | ३८ | ७१ |

इति मात्रामर्कटीप्रकारः ॥

---

अथ वर्णमर्कटी।

तत्र मात्रामर्कटीवत् चक्रं विलिख्य प्रथमपङ्क्तिकोष्ठेषु क्रमेण एकद्वित्रिचतुराद्यङ्का यावदपेक्षं लेख्याः। द्वितीयपङ्क्तौ द्विचतुरष्टषोडशादयो वृत्तभेदाङ्का लेख्याः। तृतीयपङ्क्तौ तदूर्ध्वस्थितकोष्ठद्वयद्वयस्थिताङ्कयोर्गुणनफलाङ्काः क्रमेण स्थाप्याः। चतुर्थपञ्चमपङ्क्त्योः तृतीयपङ्क्तिस्थिताङ्कार्धाङ्काः क्रमेण लेख्याः। षष्ठपङ्क्तौ पञ्चमपङ्क्तिस्थिताङ्कांस्त्रिगुणीकृत्य येऽङ्का भवेयुस्तान् क्रमेण न्यसेत्। एवं च-आद्यपङ्क्तिर्वृत्तवर्णसङ्ख्यासम्बोधिनी भवेत्। पङ्क्तिर्द्वितीया भवति वृत्तभेदविबोधिनी। तृतीया सर्ववर्णानां समाहाराङ्कमादिशेत्। चतुर्थी गुरुवर्णानां सर्वसङ्ख्यां प्रबोधयेत्। पञ्चमी लघुवर्णानां सर्वसङ्ख्यां समादिशेत्। षष्ठी च सर्वमात्राणां सर्वसङ्ख्यां प्रकीर्तयेत। इति सिद्धं वर्णमर्कटीचक्रम्। यथा—

तुरष्टाङ्कमेलने १५ सैका षोडश सा तस्य सङ्ख्या । एवं प्रकारद्वयमन्यत्राऽप्युन्नेयम् । इदं चोपलक्षणम् । प्रस्तारगणनयापि सङ्ख्याज्ञानसिद्धेः, प्रथमवृत्तसङ्ख्याद्विगुणोत्तरोत्तरवृत्तसङ्ख्येति सिद्धेश्च । अर्धसमविषमयोरपि पूर्वोक्तरीत्या लगक्रियोद्दिष्टाङ्कमेलनेन सङ्ख्या ज्ञेयेति । सङ्ग्रहपद्यं तु सङ्ख्याध्वनोरेकमेव वक्ष्यते ।

---

अथ सूत्रोक्तः सङ्ख्यानप्रकारः ।

सूत्रे तु सङ्ख्याऽऽनयनेऽन्यः प्रकार उक्तः । यथा—यत्सङ्ख्यां जिज्ञासेत तज्जातिनिष्ठाक्षरसङ्ख्याङ्के भूमौ स्थापिते अर्धमपनयेत् । अर्धकरणे भागद्वयस्य कृतत्वाद्या सङ्ख्या लब्धा तां भूमौ पृथक् स्थापयेत् । अवशिष्टार्धसङ्ख्या यदि समा ततस्तस्यामर्धितायां द्व्यङ्कस्य लब्धस्य पूर्ववल्लब्धाङ्काधस्तान्न्यासः कार्यः । एवमुत्तरत्र । यदा त्वर्धसङ्ख्या वृत्ताक्षरसङ्ख्यैव वा विषमा, तदार्धीकरणाशक्तेरेकं रूपमपनीय शून्यं पूर्ववद् द्व्यङ्कादधः स्थापयेत् । एवमेकपर्यन्तकरणेऽधःस्थितशून्यस्थाने एकाङ्कं निधाय द्विगुणयेत् । तौ द्वौ तस्योपरिष्टादर्धस्थाने निधाय तया सङ्ख्यया सैव गुणनीया, ततो गुणिताङ्कमुपरिस्थाने निक्षिपेत्, तत्स्थानं यदि शून्यस्य तदा तन्न्यस्तमङ्कं द्विगुणयेत्, यदि त्वर्धस्थानं तदा तयैव सङ्ख्यया गुणयेत्, एवमुपरिस्थानपर्यन्ते कृते योऽङ्को

उष्णिक्पर्यन्तबोधकं मर्कटीचक्रम् ।

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| १ | वृत्ताङ्काः | १ | २ | ३ | ४ | ५ | ६ | ७ |
| २ | भेदसं० | २ | ४ | ८ | १६ | ३२ | ६४ | १२८ |
| ३ | वर्णसङ्ख्या | २ | ८ | २४ | ६४ | १६० | ३८४ | ८९६ |
| ४ | गुरुवर्णसं० | १ | ४ | १२ | ३२ | ८० | १९२ | ४४८ |
| ५ | लघुवर्णसं० | १ | ४ | १२ | ३२ | ८० | १९२ | ४४८ |
| ६ | मात्रासं० | ३ | १२ | ३६ | ९६ | २४० | ५७६ | १३४४ |

इतिवर्णमर्कटी कारः ॥

---

जातः स इष्टवृत्तसङ्ख्या ज्ञेयेति। अत्रोदाहरणम्—गायत्रे षट्सङ्ख्यायामर्धेऽपनीते द्व्यङ्के स्थापिते अवशिष्टास्त्रयस्तेषु रूपमपनीय द्व्यङ्काधः शून्यं स्थाप्यम्। यथा—२। ०. अवशिष्टद्विसङ्ख्यातोऽर्धेऽपनीते शून्याधो द्विसङ्ख्या लेख्या। यथा—२।०।२।. ततोऽवशिष्टं रूपं तदपनीय द्व्यङ्काधः शून्यं स्थाप्यम्। यथा—२।०।२।०. अधः शून्ये एकाङ्कं द्विगुणं न्यस्य तं द्व्यङ्कमर्धस्थाने स्थितमपनीय तत्स्थाने निधाय तं तावद्गुणं कुर्यात्। ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति तेषामुपरिष्टाच्छून्यस्थाने तं निधाय शून्यस्थानाङ्कत्वाद् द्विगुणयेत्। ततोऽष्टौ भवन्ति। तानप्यर्धस्थाने निधाय तावद्गुणान्कुर्यात्, तेनाष्टावष्टभिर्गुणिताश्चतुःषष्टिर्भवन्ति गायत्र्यां समवृत्तानि। एवं सर्वत्र समवृत्तसङ्ख्या ज्ञेया। सा च तत्र तत्र दर्शितैव। यदा तु शुद्धार्धसमवृत्तसङ्ख्यां जिज्ञासेत तदा समसङ्ख्या तयैव गुणनीया सिद्धेऽङ्के समसङ्ख्यां पातयेत्। अवशिष्टा शुद्धार्धसमसङ्ख्या भवति। यथा त्र्यक्षरे समसङ्ख्या ८ तैरेव गुणिताश्चतुःषष्टिस्तन्मध्येऽष्टस्वपनीतेषु षट्पञ्चाशच्छुद्धार्धसमानि। एवं सर्वत्र। यदा तु तत्तज्जातिषु शुद्धविषमसङ्ख्या जिज्ञासिता तदा सङ्ख्यायां तयैव गुणितायां या सञ्जाता तां पुनस्तयैव गुणयेत्। सिद्धेऽङ्के समार्धसमे अपनीय शिष्टा सङ्ख्या शुद्धविषमस्य। यथा—त्र्यक्षरे समानि(८)तैरेव गुणने चतुःषष्टिः ६४ पुनरेतयैव तद्गुणने चत्वारि सहस्राणि षण्णवतिः। अङ्कतोऽपि ४०९६। समार्धसममेलने६४एतेष्वपनीतेष्ववशिष्टं ४०३२ इयं शुद्धा विषमसङ्ख्या। यदा तु समार्धसमविषमाणि समुदितानि, तदा समार्धसमे नापनेये। पूर्वैव तत्सङ्ख्या। एवमन्यत्राऽपि ज्ञेयम्। यदैतज्जात्यन्तानि कति समवृत्तानि इति सङ्ख्याजिज्ञासा तदा विवक्षितप्रान्तच्छन्दःसमवृत्तसङ्ख्यां द्विगुणयेत् तन्मध्ये द्वावपनयेत्। शिष्टा विवक्षितजातिपर्यन्तानां समवृत्तसङ्ख्या। यथा चतुरक्षरे षोडश समवृत्तानि तेषां द्वैगुण्ये द्वात्रिंशत्। द्वयोरपनये तदन्तानां सङ्ख्या ३०। एवमुक्तभेदाः षट्कोट्य एकसप्ततिर्लक्षाणि अष्टौ सहस्राणि अष्टौ शतानि चतुःषष्टिश्चेति। अङ्कतोऽपि ६७१०८८६४। एतद्द्वैगुण्ये एतस्य द्वयोर्हाने च त्रयोदशकोट्यो द्वाचत्वारिंशल्लक्षाः सप्तदशसहस्राणि सप्तशतानि षड्विंशत्यधिकानि। अङ्कतोऽपि १३४२१७७२६। एतावन्ति सर्वाणि समवृत्तानि। तदुक्तम्—

विवक्षितान्तजातेस्तु भेदा द्विगुणितास्ततः।
द्विहीनाः सर्वसङ्ख्यायां ते स्युरुक्तादिजा इति॥ ८॥

इति सङ्ख्यानम्॥

---

अथाऽध्वयोगः ।

अथाऽध्वयोगमाह—

**सङ्ख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः ॥**
**वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम् ॥ ९ ॥**

या समादिवृत्तानां तत्तज्जातिषु सङ्ख्या पूर्वमुक्ता सा द्विगुणा एकोनेति सद्भिः प्रस्तारादिज्ञैरध्वा वृत्तप्रस्तारख्याप्यः प्रदेशस्तत्तज्जातिषूक्तः स्वस्वग्रन्थेषु । त्र्यक्षरे यथा सङ्ख्याऽष्टरूपा द्विगुणा षोडश एकोना पञ्चदश भवन्ति सोऽयं तस्य अध्वा पञ्चदशाङ्गुलायां भुवि तद्वृत्तं प्रस्तार्यते इति भावः । चतुरक्षरेऽपि तथाकरणे एकत्रिंशत् स तस्य । एवमर्धसमविषमयोः । उक्तेऽर्थे उपपत्तिमाह—वृत्तस्येति । वृत्तस्य=वृत्तप्रस्तारस्य व्यासतो व्याप्तिरङ्गुलिमिता । वृत्ताधश्चाङ्गुलिं कुर्यात् । त्यक्तामिति शेषः । अङ्गुलायामा गुरुलघवः कार्याः, प्रस्तारान्तरालं चाङ्गुलिमितमेव कार्यमित्यर्थः । अत्र चोद्दिष्टाङ्कलेखनाय मध्येऽङ्गुलावस्थापनम्, अङ्गुलन्यूनाधिकपरिमाणानां गुरुलघूनामुद्दिष्टाङ्कानां च लेखनं सम्भवेऽप्यननुगतस्याशास्त्रार्थत्वादगुणमिति सिद्ध्यर्थमङ्गुलिनियमनं कृतं न तु व्यसनिमात्रतया । न च प्रथमप्रस्तारेऽप्युद्दिष्टकरणायोपर्यङ्गुलमितभूमिग्रहे पूर्णैव द्विगुणा सङ्ख्याऽध्वा स्यात् न त्वेकोनेति वाच्यम् । प्रथमस्य सर्वत्र सर्वगुरुत्वेनैव नियमादुद्दिष्टकरणानपेक्षणात् । न चैवमन्तिमस्यापि सर्वलघुत्वेन ज्ञातत्वाद् द्व्यूना द्विगुणा सङ्ख्याऽध्वा स्यादिति वाच्यम् । कोष्टयवश्रिकप्रस्तारेषु सर्वलघोः सामान्यत अन्त्यत्वज्ञानेऽपि कतिथोऽयमिति विशेषाज्ञाने गणनाव्यतिरेकेणापि तावत्सङ्ख्याक इति ज्ञानार्थमुद्दिष्टकरणापेक्षणात् । एतेनैतदपास्तं यत्केचिदाहुः—"षष्ठः प्रत्ययोऽध्वयोगपरिच्छित्तिः इत्येके सोऽल्पफलत्वात्पुरुषेच्छानुविधायित्वेनानियतत्वाच्चनोक्तः" इति ॥९॥ सङ्ख्याध्वनोः सङ्ग्रहपद्यम्—

सैकोद्दिष्टाङ्ककूटाल्लगकरणगताङ्कैर्विमिश्रैः परेषां
पूर्वद्वैगुण्यतो वा भवति गणनया प्रस्तृतीनां च सङ्ख्या ॥
वृत्ते वृत्तान्तरे चाङ्गुलिपरिमितता स्यात्तदेकेन हीना
सङ्ख्यैव द्विःकृताध्वा विधिरयमुदितो भट्टनारायणेन ॥

इत्यध्वयोगः ।

---

इदानीं निर्व्यूढप्रतिज्ञाभारो ग्रन्थकारः स्वग्रन्थे श्रोतृभिः प्रवृत्तिविशेषः कार्य इति सूचनार्थं स्ववंशपित्रादिगुणप्रतिपादनपूर्वकं ग्रन्थकृतिमुपसंहरति—

**वंशेऽभूत्कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता**
**विप्रः पव्येकनामा विमलतरमतिर्वेदतत्त्वार्थबोधे ॥**

केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त-

श्छन्दस्तेनाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥ १० ॥

कश्यपस्य महर्षेर्वंशे गोत्रे प्रकटः प्रसिद्धो गुणसमुदायो यस्य स तादृशः पव्येकाख्यो विप्रो ब्राह्मणोऽभूत् । कीदृक् । शिवो देवता येषां ते शिवपूजकाः शैवास्तत्सिद्धान्तस्य वेत्ता ज्ञाता । शैवागमवेत्तेत्यर्थः । तथा वेदानां तत्त्वार्थस्याऽबोधितस्यार्थस्य बोधे ज्ञाने निर्मलतरबुद्धिस्तस्य पव्येकस्य पुत्रः केदारनामा । कीदृक् । शिवचरणयुगलसेवामात्रैकाग्रचेतास्तेन केदारेणाभिरामं मनोज्ञं सङ्क्षेपेणैव लक्ष्यलक्षणयोरभिधानात् , ग्रन्थान्तरेभ्योऽतिशयवत् । वृत्तरत्नाकरनामकं छन्दः लक्षणया छन्दःशास्त्रप्रकरणं प्रविरचितं कृतम् । यद्यपि "कर्तरि च" ( पा०सू०२-२-१६ ) इति कर्त्रर्थतृजन्तस्य षष्ठ्या सह समासो निषिद्धस्तथापि "जनिकर्तुः प्रकृतिः" ( पा०सू० १-४-३० ) इति ज्ञापकेन निषेधस्याऽनित्यताज्ञापनात् शैवसिद्धान्तवेत्तेतिषष्ठी समासः । केचित्तु तृन्नन्तेन समासः इति तन्न तृनो योगे "न लोकाव्ययनिष्ठाखलर्थतृनाम्" ( पा०सू० २-३-६९ ) इति षष्ठीनिषेधात् । इति सर्वं मनोहरम् ॥ १० ॥

---

भट्टश्रीनागनाथात्समजनि विबुधश्चाङ्गदेवाख्यभट्टः

प्रासोष्टासौ तनूजं रघुपतिनिरतं भट्टगोविन्दसंज्ञम् ॥

विश्वामित्राऽन्ववायाम्बुधिविधुरधिकं वर्धते तत्तनूजो

विद्याब्धौ लब्धपारः प्रथितपृथुयशा भट्टरामेश्वराख्यः ॥

नारायणेन सुधिया काश्यां निवसता सता ॥

वृत्तरत्नाकरे टीका तद्भुवा रचिताऽञ्चिता ॥

ग्रन्थेऽस्मिन्गुणगणवत्त्वमुच्यते चे-

त्स्वं कार्यं गुणगणवन्न मन्यते कः ॥

तत्सन्तः शिरसि कृताञ्जलिस्तु याचे

शोध्यं तत्सदसदिहोदितं मया यत् ॥

याति विक्रमशके द्विखषड्भू ( १६०२ ) सम्मिते सितगकार्तिकरुद्रे ॥

ग्रन्थपूर्तिसुकृतं किल कुर्मो रामचन्द्रपदपूजनपुष्पम् ॥

इति श्रीविद्वन्मुकुटमाणिक्यश्रीभट्टरामेश्वरसूरिसू-
नुनारायणभट्टविरचितायां वृत्तरत्नाकरटी-
कायां प्रस्ताराध्यायः षष्ठः समाप्तः ॥

## समाप्तश्चायं वृत्तरत्नाकरः ।

# परिशिष्टम् । १

## वृत्तरत्नाकरकारिकाणामकारादिवर्णानुक्रमसूची ।


| सं० | कारिकाः | अध्या० | श्लो० |
|---|---|---|---|
| | **अ** | | |
| १ | अङ्कग्रयो यस्य चत्वारः | १ | १४ |
| २ | अनन्तरोदीरितलक्ष्मभाजौ | ३ | ३० |
| ३ | अधिभूतरसादीनां | १ | १२ |
| ४ | अभ्ध्यष्टाभिर्जलधरमाला | ३ | ६३ |
| ५ | अभिनवतामरसं नजजाद्यः | ३ | ६८ |
| ६ | अयुग्भवा चारुहासिनी | २ | २० |
| ७ | अयुजि ननरला गुरुः समे | ४ | ९ |
| ८ | अयुजि नयुगरेफतो यकारो | ४ | १० |
| ९ | असमे सजौ सगुरुयुक्तौ | ४ | ५ |
| १० | अस्मिन्नेव तृतीयके यदा | ५ | ११ |
| ११ | अष्टार्धे गाद्यभ्यस्ता | २ | ४१ |
| १२ | अस्य युग्मरचिताऽपराऽन्तिका | २ | १९ |
| | **आ** | | |
| १३ | आख्यानकी तौ जगुरू ग ओजे | ४ | ६ |
| १४ | आद्यं दलं समस्तं | २ | ६ |
| १५ | आपातलिका कथितेयं | २ | १४ |
| १६ | आरभ्यैकाक्षरात्पादात् | १ | १७ |
| १७ | आर्याद्वितीयकेऽर्धे | २ | ९ |
| १८ | आर्यापूर्वार्धं यदि | २ | ११ |
| १९ | आर्याप्रथमदलोक्तं | २ | ८ |
| २० | आर्याशकलद्वितयं | २ | १० |
| | **इ** | | |
| २१ | इत्थमन्यास्वतुर्थात् | २ | २८ |
| २२ | इत्थं किलान्यास्वपि मिश्रितासु | ३ | ३१ |
| २३ | इत्युक्ताश्छन्दसां संज्ञाः | १ | २२ |

| सं० | कारिकाः | अध्या० | श्लो० |
|---|---|---|---|
| २४ | इन्दुवदना भजसनैः सगुरुयुग्मैः | ३ | ८२ |
| २५ | इह नवमालिका नजभयैः स्यात् | ३ | ६४ |
| २६ | इह तोटकमम्बुधिसैः प्रथितम् | ३ | ४८ |
| | **उ** | | |
| २७ | उक्ताऽत्युक्ता तथा मध्या | १ | १६ |
| २८ | उक्ता वसन्ततिलका तभजा जगौ गः | ३ | ७६ |
| २९ | उदीच्यवृत्तिर्द्वितीयलः | २ | १६ |
| ३० | उद्दिष्टं द्विगुणानाद्यात् | ६ | ५ |
| ३१ | उद्धर्षिणीयमुदिता मुनिसैतवेन | ३ | ८१ |
| ३२ | उपस्थितमिदं ज्सौ ताद्गकारौ | ३ | ४४ |
| ३३ | उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत् | ३ | ७३ |
| ३४ | उपान्त्यतो निवर्तेत | ६ | ७ |
| ३५ | उपेन्द्रवज्रा जतजास्ततो गौ | ३ | २९ |
| ३६ | उभयार्धयोर्जकारौ | २ | ५ |
| | **ऊ** | | |
| ३७ | ऊने दद्याद् गुरूनेव | ६ | ३ |
| | **ओ** | | |
| ३८ | ओजयोर्जेन वारिधेः | २ | २३ |
| ३९ | ओजे तपरौ जरौ गुरुश्चेत् | ४ | ४ |
| | **क** | | |
| ४० | क्रौञ्चपदा भ्मौ स्भौ नननान्गौ | ३ | १०९ |
| | **ग** | | |
| ४१ | गु श्रीः | ३ | १ |
| ४२ | गौ स्त्री | ३ | २ |
| | **च** | | |
| ४३ | चतुर्ग्रहैरतिरुचिरा जभस्जगाः। | ३ | ७१ |
| ४४ | चतुर्जगणं वद मौक्तिकदाम | ३ | ५४ |
| ४५ | चन्द्रवर्त्म निगदन्ति रनभसैः | ३ | ४५ |
| ४६ | चपलावक्त्रमयुजोर्नकारश्चेत् | २ | २४ |
| ४७ | चरणत्रयं व्रजति लक्ष्म | ५ | ७ |

| सं० कारिकाः | अध्या० | श्लो० |
|---|---|---|
| **ज** | | |
| ४८ जतौ जगौ गो विषमे समे चेत् | ४ | ७ |
| ४९ जतौ तु वंशस्थमुदीरितं जरौ | ३ | ४६ |
| ५० जभौ जरौ वदति पञ्चचामरम् | ३ | ६७ |
| ५१ जसौ जसयला वसुग्रहयतिश्च | ३ | ६४ |
| ५२ जोऽन्लावथाम्बुधेर्विश्लोकः | २ | ३३ |
| ५३ ज्ञेया सप्ताश्वषड्भिर्मरभनययुता | ३ | १०२ |
| ५४ ज्ञेयाः सर्वान्तमध्यादि | १ | ८ |
| **त** | | |
| ५५ तदूर्ध्वं चण्डवृष्ट्यादि | १ | १८ |
| ५६ तद्युगलाद्वानवासिका स्यात् | २ | ३४ |
| ५७ तरुणं सर्षपशाकं | १ | ११ |
| ५८ तुरगरसयतिर्नौ ततौ गः क्षमा | ३ | ६९ |
| ५९ तृतीययुग्दक्षिणान्तिका | २ | १५ |
| ६० तेनेदं क्रियते छन्दः | १ | ३ |
| ६१ तोऽब्धेस्तत्पूर्वाऽन्या भवेत् | २ | ३० |
| ६२ त्जौ जो गुरुणेयमुपस्थिता | ३ | २७ |
| ६३ त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः | ३ | ५८ |
| ६४ त्यौ स्तस्तनुमध्या | ३ | ७ |
| ६५ त्रिगुणनवलघुरवसितिगुरुरिति | २ | ४२ |
| ६६ त्रिष्टुप् च जगती चैव | १ | २० |
| ६७ त्रिष्वंशकेषु पादौ | २ | ३ |
| ६८ त्री रजौ मलौ भवेत् | ३ | १०३ |
| ६९ त्सौ चेद्वसुमती | ३ | १० |
| **द** | | |
| ७० दिङ्मुनिवंशपत्रपतितं | ३ | ९५ |
| ७१ दोधकवृत्तमिदं | ३ | ३० |
| ७२ द्विगुणितवसुलघु | २ | ३१ |
| ७३ द्विगुरुयुतसकल | ५ | ४ |
| ७४ द्विः सप्तच्छिदलोला | ३ | ८३ |
| ७५ द्विहतहयलघु | ३ | ८४ |
| ७६ द्रुतविलम्बितमाह नभौ भरौ | ३ | ४९ |

| सं० कारिकाः | अध्या० | श्लो० |
|---|---|---|
| **ध** | | |
| ७७ धीरैरभाणि ललिता तभौ जरौ | ३ | ५६ |
| ७८ धृतिश्चातिधृतिश्चैव | १ | २१ |
| **न** | | |
| ७९ नजजलगैर्गदिता सुमुखी | ३ | ३२ |
| ८० नजभजरैः सदा भवति वाणिनी | ३ | ९२ |
| ८१ ननततगुरुभिश्चन्द्रिकाश्वर्तुभिः | ३ | ७५ |
| ८२ ननभमलघुगैः प्रहरणकलिता | ३ | ७८ |
| ८३ ननभरसहिता महितोज्ज्वला | ३ | ६१ |
| ८४ ननमयययुतेयं मालिनी भोगिलोकः | ३ | ८७ |
| ८५ ननरलगुरुभिश्च भद्रिका | ३ | ४१ |
| ८६ ननरसलघुगः स्वरैरपराजिता | ३ | ७७ |
| ८७ ननसगगुरुरचितावृन्ता | ३ | ४० |
| ८८ नयसहितौ न्यौ कुसुमविचित्रा | ३ | ५२ |
| ८९ नयुगं सकारयुगलं च | ५ | ८ |
| ९० नरजगैर्भवेन्मनोरमा | ३ | २६ |
| ९१ नवरसरसशरयतियुतमपवाहाख्यम् | ३ | १११ |
| ९२ नोम्बुधेश्चेन्नविपुला | २ | २९ |
| ९३ नौ पादेऽथ तृतीयके | ५ | १० |
| ९४ नष्टस्य यो भवेदङ्कः | ६ | ४ |
| **प** | | |
| ९५ पञ्चाश्वैश्छिन्ना वैश्वदेवी | ३ | ६२ |
| ९६ पर्यन्ते र्यौ तथैव शेष | २ | १३ |
| ९७ पादादाविह वर्णस्य | १ | १० |
| ९८ पादे सर्वगुरावाद्यात् | ६ | २ |
| ९९ पिङ्गलादिभिराचार्यैः | १ | ४ |
| १०० पूर्वेण युतोऽथ | २ | १७ |
| १०१ प्रचितकसमभिधो | ३ | ११४ |
| १०२ प्रतिचरणविवृद्धरेफाः | ३ | ११३ |
| १०३ प्रथममधिवसति | ५ | ५ |
| १०४ प्रथममितरचरणसमुत्थं | ५ | ३ |
| ४०५ प्रथममुदितवृत्ते | ५ | २ |

| सं० | कारिकाः | अध्या० | श्लो० |
|---|---|---|---|
| १०६ | प्रथमाङ्घ्रिसमो यस्य | १ | १५ |
| १०७ | प्रमाणिका जरौ लगौ | ३ | १७ |
| १०८ | प्रमिताक्षरा सजससैरुदिता | ३ | ६० |
| १०९ | प्रमुदितवदना भवेन्नौ च रौ | ३ | ५१ |
| ११० | प्रस्तारो नष्टमुद्दिष्टम् | ६ | १ |
| १११ | प्राक् प्रतिपादितमर्धे | २ | ७ |
| | **ब** | | |
| ११२ | बाणरसैः स्याद्भतनगगैः श्रीः | ३ | ३६ |
| ११३ | बाणाष्टनवसु यदिलश्चित्रा | २ | ३५ |
| | **भ** | | |
| ११४ | भवति नजावथ मालती जरौ | ३ | ६६ |
| ११५ | भवति नजौ भजौ रसहितौ प्रभद्रकम् | ३ | ८८ |
| ११६ | भत्रयमोजगतं गुरुणी चेत् | ४ | २ |
| ११७ | भुजगशिशुभृता नौ मः | ३ | २० |
| ११८ | भुजङ्गप्रयातं भवेद्यैश्चतुर्भिः | ३ | ५५ |
| ११९ | भुवि भवेन्नभजरैः प्रियम्वदा | ३ | ५७ |
| १२० | भूतमुनीनैर्यतिरिह भतनाः | ३ | १०८ |
| १२१ | भेनाब्धितो भाद्विपुला | २ | २७ |
| १२२ | भौगिति चित्रपदा गः | ३ | १२ |
| १२३ | भ्गौ गिति पङ्क्तिः | ३ | ६ |
| १२४ | भ्मौ सगयुक्तौ रुक्मवतीयम् | ३ | २४ |
| १२५ | भ्रत्रिनगैः स्वरात्खमृषभगज | ३ | ९१ |
| १२६ | भ्रौ नरना रनावथ गुरुः | ३ | १०५ |
| | **म** | | |
| १२७ | मत्ताक्रीडा मौ त्नौ नौ न्लिगति | ३ | १०७ |
| १२८ | मत्ता ज्ञेया मभसगयुक्ता | ३ | २५ |
| १२९ | मन्दाक्रान्ता जलधिषडगैर्म्भौ | ३ | ९७ |
| १३० | माणवकं भात्तलगाः | ३ | १४ |
| १३१ | मात्रासमकं नवमोल्गान्तं | २ | ३२ |
| १३२ | मुखपादोऽष्टभिर्वर्णैः | ५ | १ |
| १३३ | मुनिगुहकार्णवैः कृतयति | ३ | ६४ |
| १३४ | मुनिशरविरतिर्नौम्यौ पुटोऽथम् | ३ | ५० |

| सं० कारिकाः | अध्या० | श्लो० |
|---|---|---|
| १३५ मो नारी | ३ | ३ |
| १३६ मो मो गो गो विद्युन्माला | ३ | १३ |
| १३७ मो नाः षट् सगगिति | ३ | १११ |
| १३८ मौक्तिकमाला यदि भतनाद्गौ | ३ | ४३ |
| १३९ म्गौ चेत्कन्या | ३ | ५ |
| १४० म्नौ गौ हंसरुतमेतत् | ३ | १५ |
| १४१ म्तौ न्सौ गावक्षग्रहविरतिरसम्बाधा | ३ | ७६ |
| १४२ म्नौ ज्गौ चेति पणवनामकम् | ३ | २२ |
| १४३ म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम् | ३ | ७० |
| १४४ म्भौ न्लौ गः स्याद् भ्रमरविलसितम् | ३ | ३७ |
| १४५ म्यरस्तजभ्नगैर्लान्तैः | १ | ६ |
| १४६ म्रभ्नैर्यानां त्रयेण | ३ | १०४ |
| १४७ म्रौ म्यौ यान्तौ भवेतां सताष्टभिः | ३ | ९० |
| १४८ म्सौ गः स्यान्मदलेखा | ३ | ११ |
| १४९ म्सौ ज्गौ शुद्धविराडिदं मतम् । | ३ | २१ |
| १५० म्सौ ज्भौ गो प्रथमाङ्घ्रिरेकतः | ५ | ६ |


य


| | | |
|---|---|---|
| १५१ यदतीतविविधलक्ष्मयुतैः | २ | ३७ |
| १५२ यदा समावोजयुग्मकौ | २ | १८ |
| १५३ यदिह नजौ भजौ भजभलगाः | ३ | १०६ |
| १५४ यदिह नयुगलं ततः सप्त रेफाः | ३ | ११२ |
| १५५ यस्य पादचतुष्केऽपि | १ | १६ |
| १५६ यस्यां लः सप्तमो युग्मे | २ | २५ |
| १५७ युक् समं विषमं चायुक् | १ | १३ |
| १५८ युजोर्जेन सरिद्भर्तुः | २ | २२ |


र


| | | |
|---|---|---|
| १५९ रसयुगहयैर्न्सौ म्रौ स्लौ गो | ३ | ९६ |
| १६० रसै रुद्रैश्छिन्ना यमनसभला गः | ३ | ९३ |
| १६१ रसैर्जसजसा जलोद्धतगतिः | ३ | ५३ |
| १६२ रान्नराविह रथोद्धता लगौ | ३ | ३८ |
| १६३ रान्नसाविह हलमुखी | ३ | १९ |
| १६४ रैश्चतुर्भिर्युता स्रग्विणी सम्मता । | ३ | ५६ |

| सं० कारिकाः | अध्या० | श्लो० |
|---|---|---|
| १६५ रो मृगी | ३ | २ |
| १६६ जौ रगौ मयूरसारिणी स्यात् । | ३ | २३ |
| १६७ जौ समानिका गलौ च | ३ | १६ |
| **ल** | | |
| १६८ लक्ष्मैतत्सप्त गणा | २ | १ |
| १६९ लगक्रियाङ्कसन्दोहे | ६ | ८ |
| **व** | | |
| १७० वक्त्रं नाद्यान्नसौ स्याताम् | २ | २१ |
| १७१ वदन्त्यपरवक्त्राख्यं | ४ | ११ |
| १७१ वर्णान्वृत्तभवान्सैकान् | ६ | ६ |
| १७३ वसुहययतिरिह मणिगुणनिकरः | ३ | ८६ |
| १७४ वस्वीशाश्वच्छेदोपेतं | ३ | ११० |
| १७५ वातोर्मीयं कथिता म्भौ तगौ गः | ३ | ३५ |
| १७६ वितानमाभ्यां यदन्यत् | ३ | १८ |
| १७७ विद्युल्लेखा मो मः | ३ | ९ |
| १७८ विनिमयविनिहित | २ | ४० |
| १७९ विषमाक्षरपादं वा | ५ | १२ |
| १८० विषमे यदि सौ सलगा दले | ४ | १ |
| १८१ वृत्तस्य ला विना वर्णाः | २ | ३८ |
| १८२ वेदार्थशैवशास्त्रज्ञः | १ | २ |
| १८३ वेदै रन्ध्रैर्म्तौ यसगा | ३ | ७२ |
| १८४ वंशेऽभूत्कश्यपस्य | ६ | १० |
| **श** | | |
| १८५ शशिवदना न्यौ | ३ | ८ |
| १८६ शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः | ३ | ३४ |
| १८७ शिखिगुणितवसुलघुरचित | २ | ३९ |
| १८८ श्येनिका रजौ रलौ गुरुर्यदा | ३ | ४२ |
| **ष** | | |
| १८९ षडध्यायनिबद्धस्य | १ | ५ |
| १९० षड्विषमेऽष्टौ समे कलास्ताः | २ | १२ |
| १९१ षष्ठे द्वितीयलात्पर | २ | २ |

| सं० कारिकाः | अध्या० | श्लो० |
|---|---|---|
| स | | |
| १९२ सङ्ख्यैव द्विगुणैकोना | ६ | ९ |
| १९३ सजना नयौ शरदशयतिरियमेला | ३ | ८९ |
| १९४ सजसा जगौ भवति मञ्जुभाषिणी | ३ | ७४ |
| १९५ सजसादिमे सलघुकौ च | ५ | ६ |
| १९६ सयुगात्सगुरू विषमे चेत् | ४ | ३ |
| १९७ सयुगात्सलघू विषमे गुरुः | ४ | ८ |
| १९८ सर्वगुर्मो मुखान्तलौ | १ | ७ |
| १९९ संलङ्घ्य गणत्रयमा | २ | ४ |
| २०० सानुस्वारो विसर्गान्तो | १ | ९ |
| २०१ सिंहोन्नतेयमुदिता मुनिकाश्यपेन | ३ | ८० |
| २०२ सुखसन्तानसिद्ध्यर्थं | १ | १ |
| २०३ सर्याश्वैर्मसजास्ततः सगुरवः | ३ | १०१ |
| २०४ सतवस्याऽखिलेष्वपि | २ | २६ |
| २०५ स्यादयुग्मके रजौ रयौ समे चेत् | ४ | १२ |
| २०६ स्यादिन्द्रवज्रा यदि तौ जगौ गः | ३ | २८ |
| २०७ स्यादिन्द्रवंशा ततजै रसंयुतैः | ३ | ४७ |
| २०८ स्याद्भूतर्त्वश्वैः कुसुमितलतावेल्लिता | ३ | १०० |
| २०९ स्रगिति भवति रसनवकयतिरियम् | ३ | ८५ |
| २१० स्वरशरविरतिर्ननौ रौ प्रभा | ३ | ६५ |
| २११ स्वागतेति रनभाद् गुरुयुग्मम् | ३ | ३९ |
| ह | | |
| २१२ हयदशभिर्नजौ भजजला गुरु | ३ | ९८ |

# परिशिष्टम् । २

## वृत्तरत्नाकरे प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि ।

सं० नाम

१ पिङ्गल (१–४) पिङ्गलनाग (२–४) नागराज (२–३,५) भुजङ्गेश (२–८) मुनि (२–६,९,)

२ सैतव (२–२६।३–८१)

२ काश्यप (३ ८०)

४ छन्दोविचिति (६–३)

---

# परिशिष्टम् । ३

## वृत्तरत्नाकरटीकायां प्रमाणत्वेनोपन्यस्तानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि ।

| सं० | नामानि | पृ० पं० |
|---|---|---|
| १ | अभियुक्त | १०–७. |
| २ | कर्पूरमञ्जरी | १२६–२४. |
| ३ | कविकल्पलता | १७–२,१८. |
| ४ | काश्यप | ९१–५. |
| ५ | किरात | ६-९. ७-४. |
| ६ | कुमारसम्भव | ११–६.४८–२१. |
| ७ | क्षेत्रराज | २–५,१०. |
| ८ | छन्दश्चूडामणि | १२७–११. |
| ९ | छन्दोमाणिक्य | २४–२२.२५–१५. |
| १० | छन्दोविचिति | ३६–१३.१४३–१०. |
| ११ | जयदेव | १८–४.५२–८. |
| १२ | नैषधीय | ६–९. |
| १३ | न्याय | ४–१० |
| १४ | पाणिन्याचार्य ( पाणिनि ) | ८–१२,१६.१५–९. |

| संं० | नामानि | पृ० पंं० |
|---|---|---|
| १५ | प्राकृतपिङ्गल | १२७-१०. |
| १६ | भरतादि | १७-२१.८६-६. |
| १७ | भर्तृहरि | १७-२२. |
| १८ | भामह | ६-१६.७-१.४८-१८. |
| १९ | भारत | १२३-१७. |
| २० | भास्कराचार्य ( लीलावतीकार ) | १५५-२९.१५६-१२. |
| २१ | माघ | ६-९.७-४.११-७.४८-२४ १२५-६,२७.१२६-१. |
| २२ | माण्डव्य | १०५-१२. |
| २३ | रात | १०५-१२. |
| २४ | रामकुतूहल | ५६-६. |
| २५ | रामायण | ११-१४ |
| २६ | वामन | १८-४.५२-८. |
| २७ | विश्वप्रकाश | २-१०. |
| २८ | वृद्ध | १३-२०.७१-९.८६-३. |
| २९ | शाकुन्तला | १२६-१६. |
| ३० | शम्भु | १२७-११. |
| ३१ | शुक्लाम्बरादि | १७-२१. |
| ३२ | श्रुति | १-६. |
| ३३ | सरस्वतीकण्ठाभरण | ११-११. |
| ३४ | साम्प्रदायिक ( सम्प्रदाय ) | ४८-२८.४४-४. |
| ३५ | सेतुकाव्य | १२२-१२. |
| ३६ | सैतव | ४५-१६.६१-७. |
| ३७ | हलायुध | ३६-८. |

( वृत्तिकार )

पिङ्गलाचार्यस्य बहुभिर्नामभिर्बहुषु च स्थलेषु टीकाकर्त्रोल्लेखनमकारि। तथैव वृत्तिकारस्य तद्वृत्तेश्च परःशतेषु स्थलेषु नामोल्लेखो दृश्यतेऽत्र ग्रन्थे इति न तन्नामान्युपरि लिखितानि। केवलं वृत्तिकारस्य 'हलायुध' इति नाम्नैकवारमेवोल्लेख इति तन्नामोपरि गणितमेव। टीकायाः किलास्याः प्राधान्येनोपजीव्यं पिङ्गलसूत्राणि हलायुधभट्टप्रणीता तद्वृत्तिश्चेति द्वयमिति तन्नामोल्लेखस्तन्मतोल्लेखः पदे पदे भाव्य एव। अतो नोपरि तन्नामोल्लिखितम्। अपरं चाऽत्र 'केचित्' 'कैश्चित्' 'कश्चित्' 'अन्ये' इत्यादिपदैरज्ञातग्रन्थानां ग्रन्थकर्तॄणामज्ञातनामपण्डितानां वा मतोल्लेखो बहुत्र दृश्यते। तत्राऽपि केन नाम्ना तदुल्लेखः करणीय इति तदपि वर्जितम्। वृत्तरत्नाकरकारकेदारस्याऽपि बहुत्र नामोल्लेखो वर्त्तते तट्टीकैव चेयमतस्तदुल्लेखोऽपि वर्जित इति ज्ञेयम्।

---

# परिशिष्टम् । ४

## वृत्तरत्नाकरटीकायां प्रमाणत्वेन उदाहरणत्वेन प्रत्युदाहरणत्वेन चोपन्यस्तानां पद्यानामकारादिवर्णाऽनुक्रमसूचीपत्रम् ।


| सं० | पद्यानि | पृ० | पं० |
|---|---|---|---|
| | अ | | |
| १ | अक्षरे परिशुद्धये तु | ६ | १३. |
| २ | अगा मुरारी भवदुःख भारी | १२६, | २६. |
| ३ | अत्र मे सखि ! शिखण्डमण्डने | १३, | ३२. |
| ४ | अथ प्रजानामधिपः प्रभाते | १२, | १३. |
| ५ | अथ वासवस्य वचनेन | ७, | २७. |
| ६ | अथानाथाः प्रकृतयः | ४७, | १६. |
| ७ | अधरकिसलये कान्तदन्तक्षते | १२४, | १६. |
| ८ | अध्वन्यानां जनयति मुदमुच्चैः | १२४, | २५. |
| ९ | अनुक्तयतिकेऽप्येवं | १, | १७. |
| १० | अन्तकोष्ठेषु सर्वेषु | १६२, | १८. |
| ११ | अन्तिमाङ्कावधि नैव | १५८, | १५. |
| १२ | अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना | १५, | १२. |
| १३ | अयि विजहीहि दृढोपगूहनं | १२३, | ३२. |
| १४ | अलिवाचालितविकसितचूते | ५३, | ६. |
| १५ | अवर्णात्सम्पत्तिः | ६, | १७. |
| १६ | अस्मत्पितृकृते नव्ये | ५९, | ६. |
| १७ | अस्या वक्त्राब्जमवजितपूर्णेन्दुशोभं विभाति | १५, | १६. |
| १८ | अहि ललइ महि चलइ गिरि खसइ हर खलइ | १३९, | ४. |
| | आ | | |
| १९ | आकरो निवहोत्पत्ति | २, | ९. |
| २० | आगमविद्यैकनिधिः | ३६, | १५. |
| २१ | आदावन्ते लिखेदेकं | १५६, | २८. |
| २२ | आदावेकं न्यसेत्कोष्ठं | १६२. | १६. |
| २३ | आदावेकं लिखेत्कोष्ठं | १५६, | २६. |
| २४ | आदौ तावद् गणच्छन्दः | ३, | ६. |
| २५ | आपातलिकादिषु चेदेकः | ४३, | ७. |

| सं० | पद्यानि | पृ० | पं० |
|---|---|---|---|
| | इ | | |
| २६ | इति धौतपुरन्ध्रिमत्सरान् | १२५, | ७. |
| २७ | इत्थं रथाश्वेभनिषादिनां प्रगे | ७३, | ७. |
| २८ | इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे | १५, | २०. |
| २९ | इयं सखे ! चन्द्रमुखी | ४८, | १ |
| ३० | इहिकारौ बिन्दुयुतौ | १२, | १६. |
| | उ | | |
| ३१ | उच्चउत्थाणअ बिमलघरा | १४०, | २०. |
| ३२ | उत्तिष्ठमानस्तु परः | ४७, | ४. |
| | ए | | |
| ३३ | एकत्र पादे चरणद्वये वा | ७१, | ९. |
| ३४ | एकद्वित्र्यादिभेदाः स्युः | १५६, | १५. |
| ३५ | एकस्वरोपसर्गेण | १७, | ३. |
| ३६ | एकाद्येकोत्तरा अङ्काः | १५६, | १३. |
| ३७ | एकान्तरं च वृद्धाङ्कम् | १६३, | १. |
| ३८ | एकैव भवति पथ्या | ३६, | ९. |
| ३९ | एको द्वाविति चत्वारः | १५८, | १३. |
| ४० | एकोनसहस्राक्षर | १०६, | ६. |
| ४१ | एतासां राजति सुमनसां दाम कण्ठावलम्बि | १४, | २६. |
| ४२ | एवमपरार्धसङ्ख्या | २६, | ५. |
| ४३ | एवं तदार्या नृपवीरसिंह | ११. | १७. |
| ४४ | एवं यथायथोद्वेगः | १७, | १९. |
| | क | | |
| ४५ | कण्ण चलन्ते कुम्म चलइ पुणवि असरणा | १३१, | २४. |
| ४६ | कनकप्रभा पृथुनितम्बशालिनी | १२४, | १३. |
| ४७ | कन्दर्परूप जबतें तुम लीन्ह कृष्ण | १२६, | ३२. |
| ४८ | करुणाविषये करुणां | ३०, | २. |
| ४९ | कलिवशविवशः सम्प्रत्ययं जीवलोकः | १५, | ४. |
| ५० | कस्ते दारिद्र्यदावानल वदतु यशो वावदूकोऽपि दाने | १५, | ९. |
| ५१ | कान्तावदनसरोजं | ११७, | २४. |
| ५२ | कामिनीभिः सह प्रीतिः | ४७, | १४. |
| ५३ | कुञ्जरकुम्भपीठपीनोन्नतकुचकलशा | १२५, | २. |
| ५४ | कुन्दकोमलकुड्मलद्युतिदन्तपङ्क्तिविराजिता | १२५, | २२. |
| ५५ | कुड्मलदन्ती विकटनितम्बा | १२३, | २९. |

| सं० | पद्यानि | पृ० | पं० |
|---|---|---|---|
| ५६ | कृतार्थाश्च कृतार्थानां | ११, | १५. |
| ५७ | कः खो गो घश्च लक्ष्मीं | ६, | २२. |
| ५८ | क्वचित्तु पदमध्येऽपि | १३, | २५. |
| ५९ | क्वचिदग्रे प्रसरता | ४८, | १९. |
| ६० | क्वचिदपि संयुक्तपरः | १२, | ११. |
| | ग | | |
| ६१ | गणानुद्दिष्टगाथायाः | २७, | १९. |
| ६२ | गीतिचतुष्टयमित्थं | ३६, | ११. |
| ६३ | गृहीतप्रत्युद्गमनीयवस्त्रा | ११, | ६. |
| ६४ | गुणिनामपि निजरूप | १०, | १. |
| ६५ | ग्रन्थेऽस्मिन्गुणगणवरत्नमुच्यते चेत् | १६८, | २२. |
| | च | | |
| ६६ | चन्दा कुन्दा कासा | १२९, | २३. |
| ६७ | चन्दो चन्दणहारो | १२७, | २८. |
| ६८ | चित्तं मम रमयति | ११७, | १८, |
| | छ | | |
| ६९ | छन्दोवर्णमितानुपर्यधरगान् | १०५, | २४. |
| | ज | | |
| ७० | जगणविहीना विषमे | २६, | ३. |
| ७१ | जसु कर फणिवइ बलअ | १३४, | १७. |
| ७२ | जसु चन्द सीस | १४०, | २७. |
| ७३ | जसु सीसइ गङ्गा गोरि अधङ्गा | १३२, | ६. |
| ७४ | जसु हत्थ करबाल | १४१, | २३. |
| ७५ | जह एहाउं ओइएणे | १२, | ३. |
| ७६ | जहा सरअससिबिम्ब जहा | १३३, | २८. |
| ७७ | जहि आसामविदेहाकिल्लउ | १३६, | ४. |
| ७८ | जा अद्धङ्गे पव्वई | १३०, | ६. |
| ७९ | जाआ जा अद्धङ्ग सीस गङ्गा लोलन्ती | १३४, | ३२. |
| ८० | जे गञ्जिअ गोलाहिवइ राउ | १३५, | २५. |
| ८१ | जे बन्दिअ सिरगङ्ग हणिअ अणङ्ग | १३२, | ३३. |
| ८२ | जं जं आणेइ गिरिं | १२९, | १३. |
| | ढ | | |
| ८३ | ढोल्ला मारिअ ढिल्लिमह | १३७, | ३२. |
| | त | | |
| ८४ | ततः कुमुदनाथेन | ४८, | ४. |

| सं० | पद्यानि | पृ० | पं० |
|---|---|---|---|
| ८५ | तथाऽऽद्रियन्ते न बुधाः सुधामपि | १६, | ६. |
| ८६ | तथाऽपि यन्मय्यपि ते | ४८, | ८. |
| ८७ | तनुवाग्विभवोऽपि सन् | ८, | ३. |
| ८८ | तव मन्त्रकृतो दूरात् | ४७, | २१. |
| ८९ | तव ह्रियाऽपह्रियो मम ह्रीरभूत् | ११, | २१, |
| ९० | तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी | १४, | १३. |
| ९१ | तस्याः खुरन्यासपवित्रपांसुम् | ८, | १. |
| ९२ | तुरगशताकुलस्य परितः. | १२६, | २. |
| ९३ | तृष्णां त्यज धर्मं भज | ६४, | १०. |
| ९४ | त्रयश्चतुष्कला आदौ | १३४, | २९. |
| ९५ | त्रिभिस्त्रिभिर्गणैः पादौ | १०, | ६. |
| ९६ | त्रिभुवनसुखहेतवे | १०६, | ११. |
| | **द** | | |
| ९७ | दश धर्मं न जानन्ति | १२३, | १८. |
| ९८ | दाणवदेव बेवि दुक्कन्तउ | १३८, | २९. |
| ९९ | दानं भोगो नाशः | १०, | ३. |
| १०० | दीर्घाक्षरमपि जिह्वा | १२, | २७. |
| १०१ | दीर्घं संयोगपरं तथा | ८, | ८. |
| १०२ | दुःखं मे प्रक्षिपति हृदये | १७, | १४. |
| १०३ | दुःसोढो दाशरथिमहिमा | १५, | २. |
| १०४ | दूरारूढप्रमोदं हसितमिव | १७, | ९. |
| १०५ | देवताचकाः शब्दाः | ७, | २. |
| १०६ | दैत्याऽधिपप्राणमुषां नखानाम् | १७, | १२. |
| | **ध** | | |
| १०७ | धत्ते शोभां कुवलयदामश्यामे | १२४, | २. |
| १०८ | धनं प्रदानेन श्रुतेन कर्णौ | १२, | २. |
| | **न** | | |
| १०९ | नत्वा गणेशं वाग्देवीं | १, | ५. |
| ११० | नपुंसकमिति ज्ञात्वा | ४८, | ६. |
| १११ | नमस्तस्मै महादेवा | १४, | ४. |
| ११२ | नमः शिवाय कृष्णाय | १६, | ५. |
| ११३ | नवसहकारपुष्पमधुनिष्कलकण्ठतया | १२५, | १७. |
| ११४ | नष्टाङ्के प्रथमे भक्ते | २८, | २४. |
| ११५ | नष्टे सर्वाः कलाः कार्याः | १४९, | ३. |

| सं० | पद्यानि | पृ० | पं० |
|---|---|---|---|
| ११६ | नारायणेन सुधिया | १६८, | २०. |
| ११७ | निजगृहे जयिनं सिसृणां पुरां | १६, | ११. |
| ११८ | नित्यं प्राक्पदसम्बद्धा | १३, | २८. |
| ११९ | नोक्ता उक्तादिभेदा ये | ५६, | ३. |
| | **प** | | |
| १२० | पअभरदरदरुधरणी | १३१, | ९. |
| १२१ | पढमं बारह मत्ता | १२८, | ३. |
| १२२ | पद्मारभ्यते नित्यं | २५, | १३. |
| १२३ | पद्यं चतुष्पदं तच्च | १८, | २०. |
| १२४ | परिहर माणिणि ! माणं | १२८, | २३. |
| १२५ | पर्याप्तं तप्तचामीकरकटकतटे | १४, | २३. |
| १२६ | पादं सर्वगुरुं लिखेन्मुखगुरोः | १४३, | २२. |
| १२७ | पिन्धउ दिढसण्णाह | १३३, | १२. |
| १२८ | पीनोन्नतकुचकलशा | ३६, | २९. |
| १२९ | पुनर्भजेत्पुनर्लब्धं | २८, | २६. |
| १३० | पुरुषश्रेष्ठतमः स पूरुषः | ४२, | १३. |
| १३१ | पूर्वस्यां प्रथमः समोऽङ्क उपरि | १५१, | १५. |
| १३२ | पूर्वान्तिमस्वरः सन्धौ | १३, | २७. |
| १३३ | पूर्वार्धे षष्ठो जः | २४, | २३. |
| १३४ | पृथ्वीजलशिखिवाताः | ४, | २९. |
| १३५ | पृष्ठाङ्के विषमे समे गुरुलघू | १४८, | ११. |
| १३६ | प्रणमत चरणारविन्दद्वयं | १२४, | ५. |
| १३७ | प्रणमत भवबन्धक्लेशनाशाय | १४, | २५. |
| १३८ | प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् | १७, | ८. |
| १३९ | प्रथमकथितदण्डकश्चण्डवृष्टि | १०६, | २६. |
| १४० | प्रथमाद् द्विगुणानङ्कान् | १५०, | १२. |
| १४१ | प्रस्मृतः किमथवा पठितो नु | १६, | १०. |
| १४२ | प्राप्य नाभिह्रदमज्जनमाशु | ११, | ७. |
| १४३ | प्रोल्लसत्कुण्डलप्रोत | ४७, | ७. |
| | **फ** | | |
| १४४ | फुल्लिअमहुभमरबहु | १३९, | १६. |
| | **ब** | | |
| १४५ | बरिसइ कणअह बिट्ठी | १२९, | ७. |
| १४६ | बरिसजल भमइ घण | १३९, | २८. |

| सं० | पद्यानि | पृ० | पं० |
|---|---|---|---|
| १४७ | बाले ! भूपतिमौलिलालितपद | १६, | २. |
| १४८ | बिमुह चलिअ रण अचलु | १३०, | २६. |
| | भ | | |
| १४९ | भअभञ्जिअ बङ्गा भग्गु कलिङ्गा | १३७, | १७. |
| १५० | भञ्जिअ मलअ चोलबइ णिबलिअ | १३८, | १६. |
| १५१ | भट्टश्रीनागनाथात्समजनि | १६८, | १६. |
| १५२ | भमइ महुअर फुल्लअरबिन्द | १३६, | २२. |
| १५२ | भवद्गिरामवसर | ४८, | २५. |
| १५४ | भावं शृङ्गारसारस्वतमिह | १८, | ४. |
| १५५ | भुवि सुरगुरुदेशीयाः कियन्तो न सन्ति | १५, | ३. |
| १५६ | भृत्याश्चेत्स्यादुदासो | ६, | १. |
| | म | | |
| १५७ | मनौ मित्रे भयौ भृत्यौ | ५, | १०. |
| १५८ | मन्दः कवियशःप्रार्थी | ८, | ३. |
| १५९ | मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः | १७, | १२. |
| १६० | महाकविं कालिदासं | ४७, | १२. |
| १६१ | मस्त्रिगुरुस्त्रिलघुश्च नकारः | ४, | १९. |
| १६२ | माणिणि ! माणहि काइं | १२, | १६. |
| १६३ | मित्रान्मित्रादयः स्युः | ५, | २०. |
| १६४ | मित्रान्मित्रं विधत्ते | ५; | २५. |
| १६५ | मुञ्चहि सुन्दरि ! पाअं | १२९, | ३. |
| १६६ | मो भूमिः श्रियमातनोति | ४, | २२. |
| | य | | |
| १६७ | यतिः सर्वत्र पादान्ते | १३, | २२. |
| १६८ | यथा पिनाकपाणिं प्र | १७, | ५. |
| १६९ | यद्ध्यस्तेण जगतां | ४८, | २२, |
| १७० | यदा तीव्रप्रयत्नेन | ११, | १२. |
| १७१ | यदि सुखमनुपममपरमभिलषसि | ५७, | ८. |
| १७२ | यस्य यस्य भवेल्लोपः | १४९, | ५. |
| १७३ | यस्य विलासवतीनां | ३७, | २. |
| १७४ | यस्याः पादे प्रथमे | १०, | ७. |
| १७५ | या कुचगुर्वी मृगशिशुनयना | १२४, | ९. |
| १७६ | याति विक्रमशके छिखषड्भू | १६८, | २६. |

| सं० | पद्यानि | पृ० | पं० |
|---|---|---|---|
| १७७ | यियक्षमाणेनाहूतः | ४७. | ३३. |
| १७८ | युक्तपरत्वनिमित्तक | ११, | ३. |
| १७९ | युयुत्सुनेव कवचम् | ४७, | १७. |
| १८० | यो लक्ष्मीं रक्ष दाहं | ६, | २५. |
| १८१ | यः पुरतो वक्त्रयतिमिष्टम् | ४३, | २. |
| | र | | |
| १८२ | रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा | १६, | ३. |
| १८३ | रघुकुलनलिनविकसनशशभृति | ५८, | ९. |
| १८४ | रण दक्ख दक्ख हणु जिणु | १२३, | १९. |
| १८५ | राअह भग्गन्त दिगन्त लगन्त | १४१, | ११. |
| १८६ | राआ लुद्ध समाज खल | १४०, | ५. |
| १८७ | राक्षसाधिपबलं प्रणाशयां— | १६, | १५. |
| १८८ | रामेशं वा प्रतिदिनमुताहो रमेशं भजामः | १५, | ५. |
| | ल | | |
| १८९ | लभेत सिकतासु तैलमपि यत्नतः पीडयन् | १७, | २३. |
| १९० | लोकवत्प्रतिपत्तव्यः | ४७, | ३२. |
| १९१ | लोके प्रसिद्धनामा | २६, | ८. |
| १९२ | लोभं लम्भय विलयं | ११५, | ३. |
| | व | | |
| १९३ | वन्दे गुरुं रामेश्वरं | ४७, | २८. |
| १९४ | वित्तर्तें सञ्चवू युक्तते भोगवूं | १२६, | २९. |
| १९५ | विवक्षितान्तजातेस्तु | १६६, | ३०. |
| १९६ | विषयान्विषधरविषमान् | ३६, | २४. |
| १९७ | विषयान्विषमान्विषोपमान् | ४२, | १६. |
| १९८ | विष्णुं रुद्रं च खलु भजतां | १७, | ६. |
| | श | | |
| १९९ | शत्रोर्मित्रं च शून्यं | ६, | ५. |
| २०० | शब्दतो वाऽर्थतो वाऽपि | १२३, | २३. |
| २०१ | शहजे किल जे विणिन्दिए | १२६, | २०. |
| २०२ | शिरःस्थितोर्ध्वकाग्राङ्क | १६३, | ३. |
| २०३ | शैलशिखानिकुञ्जशयितस्य हरेः श्रवणे | १२४, | १०, |
| २०४ | श्यामा कामाकुला रामा | १४, | ८. |
| २०५ | श्रिया जुष्टं दिव्यैः | १२५, | २८. |
| २०६ | श्रुतिपरिपूर्णवक्त्रमतिसुन्दरवाग्विभवं | १२५, | १२. |

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम् ॥
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम् ॥ इति भारवी ।

उत्पलिनीति केचित् ।

सजसा सगौ च कथितः कलहंसः ॥ ७ ॥

यमुनाविहारकुतुके कलहंसो
व्रजकामिनीकमलिनीकृतकेलिः ॥
जनचित्तहारिकलकण्ठनिनादः
प्रमदं तनोतु तव नन्दतनूजः ॥

सिंहनादः क्वापि ।

सजसौ जगौ च भवति प्रबोधिता ॥ ८ ॥

शयिता मृषा चटुलमाननिद्रया
रतिकेलिकुञ्जनिलये विलासिनी ॥
मुरवैरिणा वदनचुम्बनादिना
स्मितमाततान सपदि प्रबोधिता ॥

भवति मृगेन्द्रमुखं नजौ जरौ गः ॥ ९ ॥

गुरुभुजवीर्यभरं हरिं मदान्धा
युधि समुपेत्य न दानवा जिजीवुः ॥
क्षुधितमृगेन्द्रमुखं मृगा उपेत्य
क्व नु खलु बिभ्रति जीवनस्य योगम् ॥

(१४) शर्करी । (चतुर्दशाक्षरा वृत्तिः ।)

मो गौ नौ मश्चेच्छरनवभिरसम्बाधा ॥ १ ॥

वीर्याग्नौ येन ज्वलति रणवशात्क्षिप्ते
दैत्येन्द्रे जाता धरणिरियमसम्बाधा ॥
धर्मस्थित्यर्थं प्रकटिततनुसम्बन्धः
साधूनां बाधां प्रशमयतु स कंसारिः ॥

ज्ञेयं वसन्ततिलकं तभजा जगौ गः ॥ २ ॥

फुल्लं वसन्ततिलकं तिलकं वनाल्या
लीलापरं पिककुलं कलमत्र रौति ॥
वात्येष पुष्पसुरभिर्मलयाद्रिवातो
यातो हरिः स मधुरां विधिना हताः स्मः ॥

सिंहोद्धता क्वापि ।

ननरसलघुगैः स्वरैरपराजिता ॥ ३ ॥

यदनवधिभुजप्रतापकृतास्पदा
यदुनिचयचमूः परैरपराजिता ॥
अजयत समरे समस्तरिपुव्रजं
स जयति जगतां गतिर्गरुडध्वजः ॥

ननभनलगिति प्रहरणकलिका ॥ ४ ॥

व्यथयति कुसुमप्रहरणकलिका
प्रमदवनभवा तव धनुषि तता ॥
विरहविपदि मे शरणमिह ततो
मधुमथनगुणस्मरणमविरतम् ॥

मात्तो नो मो गौ यदि गदिता वासन्तीयम् ॥ ५ ॥

भ्राम्यद्भृङ्गीनिर्भरमधुरालापोद्गीतैः
श्रीखण्डाद्रेरद्भुतपवनैर्मन्दान्दोला ॥
लीलालोला पल्लवविलसद्धस्तोल्लासैः
कंसारातौ नृत्यति सदृशी वासन्तीयम् ॥

द्विःसप्तच्छिदि लोला म्सौ म्भौ गौ चरणे चेत् ॥ ६ ॥

मुग्धे ! यौवनलक्ष्मीर्विद्युद्विभ्रमलोला
त्रैलोक्याद्भुतरूपो गोविन्दोऽतिदुरापः ॥
तद्वृन्दावनकुञ्जे गुञ्जद्भृङ्गसनाथे
श्रीनाथेन समेता स्वच्छन्दं कुरु केलिम् ॥

स्वरभिदि यदि नौ तौ च नान्दीमुखी गौ ॥ ७ ॥

सरसखगकुलालापनान्दीमुखीयं
लहरिभुजलया चारुफेनस्मितश्रीः ॥
मुरहर ! कलयासक्तिमासाद्य किं ते
प्रमुदितहृदया भानुजा नृत्यतीह ॥

(१५) अतिशर्करी । (पञ्चदशाक्षरा वृत्तिः)

गुरुनिधनमनुलघुरिह शशिकला ॥ १ ॥

मलयजतिलकसमुदितशशिकला
व्रजयुवतिलसदलिकगगनगता ॥
सरसिजनयनहृदयसलिलनिधि
व्यतनुत विततरभसपरितरलम् ॥

स्रगियमपि च रसनवरचितयतिः ॥ २ ॥

अयि ! सहचरि ! रुचिरतरगुणमयी
म्रदिमवसतिरनपगतपरिमला ॥
स्रगिव निवस विलसदनुपमरसा
सुमुखि ! मुदितदनुजदलनहृदये ॥

वसुमुनियतिरिति मणिगुणनिकरः ॥ ३ ॥

नरकरिपुरवतु निखिलसुरगति-
रमितमहिमभरसहजनिवसतिः ॥
अनवधिमणिगुणनिकरपरिचितः
सरिदधिपतिरिव धृततनुविभवः ॥

ननमयययुतेयं मालिनी भोगिलोकैः ॥ ४ ॥

मृगमदकृतचर्चा पीतकौशेयवासा
रुचिरशिखिशिखण्डाबद्धधम्मिल्लपाशा ।
अनृजु निहितमंसे वंशमुत्क्वाणयन्ती
धृतमधुरिपुलीला मालिनी पातु राधा ॥

एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः ॥ ५ ॥

पायाद्वो गोविन्दः कालिन्दीकूलद्रोणीचक्रे
रासोल्लासक्रीडद्गोपीभिः सार्धं लीलाखेलः ॥
मन्दाकिन्यास्तीरोपान्ते स्वैरक्रीडाभिर्लोलो
यद्वद्देवानामीशः स्ववँश्यामिः खेलन्तीभिः ॥
मा कान्ते ! पक्षस्यान्ते पर्याकाशे देशे स्वाप्सीः
कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत् ॥
क्षुत्क्षामः प्राटंश्चेतश्चेतो राहुः क्रूरः प्राद्या-
त्तस्माद्ध्वान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्तव्या ॥

इति कण्ठाभरणः ।

विपिनतिलकं नसनरेफयुग्मैर्भवेत् ॥ ६ ॥

विपिनतिलकं विकसितं वसन्तागमे
मधुकृतमदैर्मधुकरैः क्वणद्भिर्वृतम् ॥
मलयमरुता रचितलास्यमालोकय-
न्व्रजयुवतिभिर्विहरति स्म मुग्धो हरिः ॥

तूणकं समानिकापदद्वयं विनान्तिमम् ॥ ७ ॥

सा सुवर्णकेतकं विकाशि भृङ्गपूरितं
पञ्चबाणबाणजालपूर्णहेमतूणकम् ॥
राधिका वितर्क्य माधवाद्य मासि माधवे
मोहमेति निर्भरं त्वया विना कलानिधे ! ॥

म्रौ मो यौ चेद्रवेतां सप्ताष्टकैश्चन्द्रलेखा ॥ ८ ॥

विच्छेदे ते मुरारे ! पाण्डुप्रकाशा कृशाङ्गी
म्लानच्छायं दुकूलं न भ्राजते बिभ्रती सा ॥
राधाम्भोदस्य गर्भे लीना यथा चन्द्रलेखा
किंचार्ता त्वां स्मरन्ती धत्ते ध्रुवं जीवयोगम् ॥

चित्रा नाम च्छन्दश्चित्रं चेत्त्रयो मा यकारौ ॥ ९ ॥

गोपालीलीलालोला यद्वत्कलिन्दात्मजान्ते
खेलन्मुक्ताहारारण्यस्रग्लसन्मूर्धचित्रा ॥
कंसारातेर्मूर्तिस्तद्वन्मे हृदि क्रीडतीयं
कोऽन्यः स्वर्गो मोक्षो वास्माद्धियते तन्न जाने ॥

(१६) अष्टिः । (षोडशाक्षरा वृत्तिः ।)

चित्रसंज्ञमीरितं समानिकापदद्वयं तु ॥ १ ॥

विद्रुमारुणाधरौष्ठशोभि वेणुवाद्यहृष्ट-
बल्लवीजनाङ्गसङ्गजातमुग्धकण्टकाङ्ग ! ॥
त्वां सदैव वासुदेव ! पुण्यलभ्यपाद ! देव !
वन्यपुष्पचित्रकेश ! संस्मरामि गोपवेश ! ॥

भ्रत्रिनगैः स्वराङ्कमृषभगजविलसितम् ॥ २ ॥

यो हरिरुच्चखान खरतरनखशिखरै-
र्दुर्जयदैत्यसिंहसुविकटहृदयतटम् ॥
किं न्विह चित्रमेतदखिलमपहृतवतः
कंसनिदेशदृप्यदृषभगजविलसितम् ॥

गजतुरगविलसितमिति शम्भौ ।

भात्समतनगैरष्टच्छेदे स्यादिह चकिता ॥ ३ ॥

दुर्जयदनुजश्रेणी दुश्चेष्टाशतचकिता
यद्भुजपरिघत्राता याता साध्वसविगमम् ॥
दीव्यति दिविषन्माला शश्वन्नन्दनविपिने
गच्छत शरणं कृष्णं तं भीता ! भवरिपुतः ॥

प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम् ॥ ४ ॥

सुरद्रुमूलमण्डपे विचित्ररत्ननिर्मिते
लसद्वितानभूषिते सलीलविभ्रमालसम् ॥
सुराङ्गनाभवल्लवीकरप्रपञ्चचामर-
स्फुरत्समीरवीजितं सदाच्युतं भजामि तम् ॥

म्भौ नो म्नौ गो मदनललिता वेदैः षड्तुभिः ॥ ५ ॥

विभ्रश्यत्स्रग्गलितचिकुरा धौताधरपुटा
ग्लायत्पत्रावलिकुचतटोच्छ्वासोर्मितरला ॥
राधाऽत्यर्थं मदनललितान्दोलालसवपुः
कंसाराते रतिरसमहो चक्रेऽतिचटुलम् ॥

नजभजरैर्यदा भवति वाणिनी गयुक्तैः ॥ ६ ॥

स्फुरतु ममाननेऽद्य ननु वाणि ! नीतिरम्यं
तव चरणप्रसादपरिपाकतः कवित्वम् ॥
भवजलराशिपारकरणक्षमं मुकुन्दं
सततमहं स्तवैः स्वरचितः स्तवानि नित्यम् ॥

यभौ न स्रौ गश्च प्रवरललितं नाम वृत्तम् ॥ ७ ॥

भुजोत्क्षेपः शून्ये चलवलयझङ्कारयुक्तो
मुधा पादन्यासः प्रकटिततुलाकोटिनादः ॥
स्मितं वक्त्रेऽकस्माद्दृशि पटुकटाक्षोर्मिलीला
हरौ जीयादीदृक्प्रवरललितं बल्लवीनाम् ॥

द्विगुणितवसुलघुभिरचलधृतिरिह ॥ ८ ॥

तरणिदुहितृतटरुचिरतरवसति-
रमरमुनिमुखजनविहितनुतिरिह ॥
मुररिपुरभिनवजलधररुचितनु-
रचलधृतिरुदयति सुकृतिहृदि खलु ॥

गरुडरुतं नजौ भजतगा यदा स्युस्तदा ॥ ९ ॥

भ्रमरमयूरमानसमुदे पयोदध्वनि-
र्गरुडरुतं मुरारिभुजगेन्द्रसन्त्रासने ॥
धरणिभरावतारविधिडिण्डिमाडम्बरः
स जयति कंसरङ्गभुवि सिंहनादो हरेः ॥

(१७) अत्यष्टिः। (सप्तदशाक्षरा वृत्तिः।)

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ १ ॥

कराद्स्य भ्रष्टे ननु शिखरिणी दृश्यति शिशो-
विलीनाः स्मः सत्यं नियतमवधेयं तदखिलैः ॥
इति भ्रस्यद्गोपानुचितनिभृतालापजनितं
स्मितं बिभ्रद्देवो जगदवतु गोवर्धनधरः ॥

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ २ ॥

दुरन्तदनुजेश्वरप्रकरदुस्थपृथ्वीभरं
जहार निजलीलया यदुकुलेऽवतीर्याशु यः ॥
स एष जगतां गतिर्दुरितभारमस्मादृशां
हरिष्यति हरिः स्तुतिस्मरणचाटुभिस्तोषितः ॥

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः॥ ३ ॥

नूतनवंशपत्रपतितं रजनिजललवं
पश्य मुकुन्द ! मौक्तिकमिवोत्तममरकतगम् ॥
एष च तं चकोरनिकरः प्रपिबति मुदितो
वान्तमवेत्य चन्द्रकिरणैरमृतकणमिव ॥
सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले ॥
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः ॥ इति भारवौ।

वंशपत्रपतितेति केचित्।

मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम् ॥ ४ ॥

प्रेमालापैः प्रियवितरणैः प्रीणितालिङ्गनाद्यै-
र्मन्दाक्रान्ता तदनु नियतं वश्यतामेति बाला ॥
एवं शिक्षावचनसुधया राधिकायाः सखीनां
प्रीतः पायात्स्मितसुवदनो देवकीनन्दनो नः ॥

नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ॥ ५ ॥

व्यधित स विधिर्नेत्रं नीत्वा ध्रुवं हरिणीगणा-
द्व्रजमृगदृशां सन्दोहस्योल्लसन्नयनश्रियम् ॥
यदयमनिशं दूर्वाश्यामे मुरारिकलेवरे
व्यकिरदधिकं बद्धाकाङ्क्षे विलोलविलोचनम् ॥

यदि भवतो नजौ भजजला गुरु नर्दटकम् ॥ ६ ॥

व्रजवनितावसन्तलतिकाविलसन्मधुपं
मधुमथनं प्रणम्रजनवाञ्छितकल्पतरुम् ॥
विभुमभिनौति कोपि सुकृती मुदितेन हृदा
रुचिरपदावलीघटितनर्दटकेन कविः ॥

हयऋतुसागरैर्यतियुतं यदि कोकिलकम् ॥ ७ ॥

लसदरुणेक्षणं मधुरभाषणमोदकरं
मधुसमयागमे सरसकेलिभिरुल्लसितम् ॥
अलिललितद्युतिं रविसुतावनकोकिलकं
ननु कलयामि तं सखि ! सदा हृदि नन्दसुतम् ॥

वेदर्त्वश्वैर्मभनमयला गश्चेत्तदा हारिणी ॥ ८ ॥

यस्या नित्यं श्रुतिकुवलये श्रीशालिनी लोचने
रागः स्वीयोऽधरकिसलये लाक्षारसारञ्जनम् ॥
गौरी कान्तिः प्रकटरुचिरा रम्याङ्गरागच्छटा
सा कंसारेरजनि न कथं राधा मनोहारिणी ॥

भाराक्रान्ता मभनरसला गुरुः श्रुतिषड्हयैः ॥ ९ ॥

भाराक्रान्ता मम तनुरियं गिरीन्द्रविधारणा-
त्कम्पं धत्ते श्रमजलकणं तथा परिमुञ्चति ॥
इत्याव्रुवञ्जयति जलदस्वनाकुलबल्लवी
संश्लेषोत्थं स्मरविलसितं विलोक्य गुरुं हरिः ॥

( १८ ) धृतिः । ( अष्टादशाक्षरा वृत्तिः । )

स्याद् भूतर्त्वश्वैः कुसुमितलतावेल्लिता म्तौ नयौ यौ ॥ १ ॥

क्रीडत्कालिन्दीललितलहरीवारिभिर्दाक्षिणात्यै-
र्वातैः खेलद्भिः कुसुमितलता वेल्लिता मन्दमन्दम् ॥
भृङ्गालीगीतैः किसलयकरोल्लासितैर्लास्यलक्ष्मीं
तन्वाना चेतो रभसतरलं चक्रपाणेश्चकार ॥

ग्राम्याब्जानूपं पिशितलवणं शुष्कशाकं नवान्नं
गौडं पिष्टान्नं दधि सकृशरं निर्जलं मद्यमम्लम् ॥
धाना वल्लूरं समसनमथो गुर्वसात्म्यं विदाहि
स्वप्नं चारात्रौ श्वयथुगदवान्वर्जयेदङ्गनां च ॥ इतिवैद्यके ।

नजभजरैस्तु रेफसहितैः शिवैर्हयैर्नन्दनम् ॥ २ ॥

तरणिसुतातरङ्गपवनैः सलीलमान्दोलितं
मधुरिपुपादपङ्कजरजःसुपूतपृथ्वीतलम् ॥

मुरहरचित्रचेष्टितकलाकलापसंस्मारकं
क्षितितलनन्दनं व्रज सखे ! सुखाय वृन्दावनम् ॥
अहृत धनेश्वरस्य युधि यः समेतमायोधनं
तमहमितो विलोक्य विबुधैः कृतोत्तमायोधनम् ॥
विभवमदेन निह्नुतह्रियातिमात्रसम्पन्नकं
व्यथयति सत्पथादधिगताथवेह सम्पन्न कम् ॥ इतिभट्टौ ।

इह ननरचतुष्कसृष्टं तु नाराचमाचक्षते ॥ ३ ॥

दिनकरतनयातटीकानने चारुसञ्चारिणी
श्रवणनिकटकृष्टमेणेक्षणा कृष्ण ! राधा त्वयि ॥
ननु विकिरति नेत्रनाराचमेषातिहृच्छेदनं
तदिह मदनविभ्रमोद्भ्रान्तचित्तां विधत्स्व द्रुतम् ॥
रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां
प्रियसुहृदि बिभीषणे सङ्क्रमय्य श्रियं वैरिणः ॥
रविसुतसहितेन तेनानुयातः ससौमित्रिणा
भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ इति रघौ ।

मन्दाक्रान्ता नपरलघुयुता कीर्तिता चित्रलेखा ॥ ४ ॥

शङ्केऽमुष्मिञ्जगति मृगदृशां साररूपं यदासी-
दाकृष्येदं व्रजयुवतिसभा वेधसा सा व्यधायि ॥
नैतादृक्चेत्कथमुदधिसुतामन्तरेणाच्युतस्य
प्रीतं तस्यां नयनयुगमभूच्चित्रलेखाद्भुतायाम् ॥

मः सोजः सतसा दिनेशऋतुभिः शार्दूलललितम् ॥ ५ ॥

कृत्वा कंसमृगे पराक्रमविधिं शार्दूलललितं
यश्चक्रे क्षितिभारकारिषु दरं चैद्यप्रभृतिषु ॥
सन्तोषं परमं तु देवनिवहे त्रैलोक्यशरणं
श्रेयो नः स तनोत्वपारमहिमा लक्ष्मीप्रियतमः ॥

( १९ ) अतिधृतिः । ( ऊनविंशत्यक्षरा वृत्तिः । )

रसर्त्वश्वैर्य्मौ न्सौ ररगुरुयुतौ मेघविस्फूर्जिता स्यात् ॥ १ ॥

कदम्बामोदाढ्या विपिनपवनाः केकिनः कान्तकेका
विनिद्राः कन्दल्यो दिशि दिशि मुदा दर्दुरा दृप्तनादाः ॥
निशा नृत्यद्विद्युद्विलसितलसन्मेघविस्फूर्जिता चे-
त्प्रियः स्वाधीनोऽसौ दनुजदलनो राज्यमस्मात्किमन्यत् ॥

उदञ्चत्कावेरीलहरिषु परिष्वङ्गरङ्गे लुठन्तः
कुहूकण्ठी कण्ठीरवरवलवत्रासितप्रोषितेभाः ॥
अमी चैत्रे मैत्रावरुणितरुणीकेलिकङ्केलिमल्ली-
चलद्वल्लीहल्लीसकसुरभयश्चण्ड चञ्चन्ति वाताः ॥

इति कस्यचित् ।

भवेत्सैव च्छाया तयुगगयुता स्याद्द्वादशान्ते यदा ॥ २ ॥

अभीष्टं जुष्टो यो वितरति लसद्दोश्चारुशाखोज्ज्वलः
स्फुरन्नानारत्नस्तबकिततनुश्चित्रांशुकालम्बितः ॥
न यस्याङ्घ्रेश्छायामुपगतवतां संसारतीव्रातप-
स्तनोति प्रोत्तापं जयति जगतां कंसारिकल्पद्रुमः ॥

सूर्याश्वैर्यदि मः सजौ सतनगाः शार्दूलविक्रीडितम् ॥ ३ ॥

गोविन्दं प्रणमोत्तमाङ्ग ! रसने ! तं घोषयाहर्निशं
पाणी ! पूजयतं मनः ! स्मर पदे ! तस्यालयं गच्छतम् ॥
एवं चेत्कुरुताखिलं मम हितं शीर्षादयस्तद् ध्रुवं
न प्रेक्षे भवतां कृते भवमहाशार्दूलविक्रीडितम् ॥

म्रौ म्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराह सुरसाम् ॥ ४ ॥

कामक्रीडासतृष्णो मधुसमयसमारम्भरभसा-
त्कालिन्दीकूलकुञ्जे विहरणकुतुकाकृष्टहृदयः ॥
गोविन्दो बल्लवीनामधररससुधां प्राप्य सुरसां
शङ्के पीयूषपानः प्रचयकृतसुखं व्यस्मरदसौ ।

मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम् ॥ ५ ॥

शश्वल्लोकानां प्रकटितकदनं ध्वस्तमालोक्य कंसं
हृष्यच्चेतोभिस्त्रिदिववसतिभिर्व्योमसंस्थैर्विमुक्तम् ॥
मुग्धामोदेन स्थगितदशदिगाभोगमाहूतभृङ्गं
मौलौ दैत्यारेर्न्यपतदनुपमं स्वस्तरोः फुल्लदाम ॥

(२०) कृतिः । (विंशत्यक्षरा वृत्तिः ।)

ज्ञेया सप्ताश्वषड्भिर्मरभनययुता भ्लौ गः सुवदना ॥ १ ॥

प्रत्याहृत्येन्द्रियाणि त्वदितरविषयान्नासाग्रनयना
त्वां ध्यायन्ती निकुञ्जे परतरपुरुषं हर्षोत्थपुलका ॥
आनन्दाश्रुप्लुताक्षी वसति सुवदना योगैकरसिका
कामार्तिं त्यक्तुकामा ननु नरकरिपो ! राधा मम सखी ॥

सजजा भरौ सलगा यदा कथिता तदा खलु गीतिका ॥ २ ॥

करतालचञ्चलकङ्कणस्वनमिश्रणेन मनोरमा
रमणीयवेणुनिनादरङ्गिमसङ्गमेन सुखावहा ॥
बहुलानुरागनिवासरासससमुद्भवा तव रागिणं
विदधौ हरिं खलु बल्लवीजनचारुचामरगीतिका ॥

इति महाकाव्ये ।

वृत्तमीदृशं तु नामतो रजौ रजौ रजौ गुरुर्लघुश्च ॥ ३ ॥

चित्रवृत्तिलीलया निसर्गरम्यदेहरूपविभ्रमेण
राजमानसद्वयोर्विलाससम्पदा कलाकुतूहलेन ॥
यः समं व्रजाङ्गनाजनैः सुराङ्गनानिभैः सुखं समेत्य
विष्णुरुल्ललास चित्तपद्मकोषषट्पदः स मे सदाऽस्तु ॥

रसाश्वाश्वैः शोभा नयुगगजठरा मेघविस्फूर्जिता चेत् ॥ ४ ॥

सदा पुष्यन्मीलत्सरसिजयुगला मध्यनम्रा फलाभ्यां
तयोरूर्ध्वं राजत्तरलकिसलयाश्लिष्टसुस्निग्धशाखा ॥
लसन्मुक्तारक्तोत्पलकुवलयवच्चन्द्रबिम्बाञ्चिताग्रा-
महो शोभा मौलौ मिलदलिपटलैः कृष्ण! सा कापि वल्ली ॥

(२१) प्रकृतिः । (एकविंशत्यक्षरा वृत्तिः ।)

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥ १ ॥

व्याकोषेन्दीवराभा कनककपलसत्पीतवासाः सुहासा
बर्हैश्चन्द्रकान्तैर्वलयितचिकुरा चारुकर्णावतंसा ॥
अंसन्यासक्तवंशीध्वनिसुखितजगद्वल्लवीभिर्लसन्ती
मूर्तिर्गोपस्य विष्णोरवतु जगति नः स्रग्धरा हारिहारा ॥

नजभजजा जरौ यदि तदा गदिता सरसी कवीश्वरैः ॥ २ ॥

चिकुरकलापशैवलकृतप्रमदासु लसद्रसोर्मिषु
स्फुटवदनाम्बुजासु विलसद्भुजबालमृणालवल्लिषु ॥
कुचयुगचक्रवाकमिथुनानुगतासु कलाकुतूहली
व्यरचयदच्युतो व्रजमृगीनयनासरसीषु विभ्रमम् ॥
तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः
प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता ॥
परिचलतो बलानुजबलस्य पुरः सततं धृतश्रिय-
श्चिरगलितश्रियो जलनिधेश्च तदाऽभवदन्तरं महत् ॥

इति माघे ।

(२२) आकृतिः । (द्वाविंशत्यक्षरा वृत्तिः ।)

मौ गौ नाश्चत्वारो गो गो वसुभुवनयतिरिति भवति हंसी ॥ १ ॥

साधं कान्तेनैकान्तेऽसौ विकचकमलमधुसुरभि पिबन्ती
कामक्रीडाकूतस्फीतप्रमदसरसतरमलघु रसन्ती ॥
कालिन्दीये पद्मारण्ये पवनपतनपरितरलपरागे
कंसराते ! पश्य स्वच्छं सरभसगतिरिह विलसति हंसी ॥

सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा ॥ २ ॥

माधवमासि विकस्वरकेसरपुष्पलसन्मदिरामुदितै-
र्भृङ्गकुलैरुपगीतवने वनमालिनमालि ! कलानिलयम् ॥
कुञ्जगृहोदरपल्लवकल्पिततल्पमनल्पमनोजरसं
तं भज माधविकामृदुनर्तनयामुनवातकृतोपगमा ॥

(२३) विकृतिः । ( त्रयोविंशत्यक्षरा वृत्तिः । )

नजभजभा जभौ लघुगुरू बुधैस्तु गदितेयमद्रितनया ॥ १ ॥

खरतरशौर्यपावकशिखापतङ्गनिभभग्नदृप्तदनुजो
जलधिसुताविलासवसतिः सतां गतिरशेषमान्यमहिमा ॥
भुवनहितावतारचतुरश्चराचरधरोऽवतीर्ण इह हि
क्षितिवलयेऽस्ति कंस ! शमनस्तवेति तमवोचदद्रितनया ॥
विलुलितपुष्परेणुकपिशं प्रशान्तकलिकापलाशकुसुमं
कुसुमनिपातचित्रवसुधं सशब्दनिपतद्द्रुमोत्कशकुनम् ॥
शकुननिनादनादितककुब्विलोलविपलायमानहरिणं
हरिणविलोचनाधिवसतिं बभञ्ज पवनात्मजो रिपुवनम् ॥

इति भट्टौ । अश्वललितमिदमन्यत्र ।

मत्ताक्रीडं वस्विष्वाशायति मयुगगयुगमनुलघुगुरुभिः ॥ २ ॥

मुग्धोन्मीलन्मत्ताक्रीडं मधुसमयसुलभमधुरमधुरसा-
घ्राने याने किंचित्स्पन्दत्पदमरुणनयनयुगलसरसिजम् ॥
रासोल्लासक्रीडत्कम्रव्रजयुवतिवलयविहितभुजरसं
सान्द्रानन्दं वृन्दारण्ये स्मरत हरिमनघचरणपरिचयम् ॥

( २४ ) संकृतिः । ( चतुर्विंशत्यक्षरा वृत्तिः । )

भूतमुनीनैर्यतिरिह भतनाः
स्मौ भनयाश्च यदि भवति तन्वी ॥ १ ॥

माधव ! मुग्धैर्मधुकरविरुतैः कोकिलकूजितमलयसमीरैः
कम्पमुपेता मलयजसलिलैः प्लावनतोऽप्यविगततनुदाहा ॥

पद्मपलाशैर्विरचितशयना देहजसञ्ज्वरभरपरिदूनै-
निंश्वसती सा मुहुरतिपरुषं ध्यानलये तव निवसति तन्वी ॥

( २५ ) अतिकृतिः । ( पञ्चविंशत्यक्षरा वृत्तिः । )

क्रौञ्चपदा स्याद्भो मसगा-
श्चेदिषुशरवसुमुनियतिमनुलघुगैः ॥ १ ॥

क्रौञ्चपदालीचित्रिततीरा मदकलखगकुलकलरुचिरा
फुल्लसरोजश्रेणिविलासा मधुमुदितमधुपरभसकरी ॥
फेनविलासप्रोज्ज्वलहासा ललितलहरिभरपुलकितसुतनुः
पश्य हरेऽसौ कस्य न चेतो हरति तरलगतिरहिमकिरणजा॥

( २६ ) उत्कृतिः । ( षड्विंशत्यक्षरा वृत्तिः । )

वस्वीशाश्वैश्छेदोपेतं ममतनयुग-
लसजजगैर्भुजङ्गविजृम्भितम् ॥१॥

हेलोदञ्चन्यञ्चत्पादप्रकटविकटनटनभरो रणत्करतालक-
श्चारुप्रेङ्खच्चूडाबर्हः श्रुतितरलनवकिसलयस्तरङ्गितहारधृक् ॥
त्रस्यन्नागस्त्रीभिर्भक्त्या मुकुलितकरकमलयुगं कृतस्तुतिरच्युतः
पायान्नश्छिन्दन्कालिन्दीह्रदकृतनिजवसतिबृहद्भुजङ्गविजृम्भितम्॥

दण्डकः ।

यदिह नयुगलं ततः सप्तरेफास्तदा
चण्डवृष्टिप्रपातो भवेद्दण्डकः ॥ १ ॥

प्रलयघनघटामहारम्भमेघावलीचण्डवृष्टिप्रपाताकुलं गोकुलं
सपदि समवलोक्य सव्येन हस्तेन गोवर्धनं नाम शैलं दधल्लीलया ॥
कमलनयन ! रक्ष रक्षेति गर्जत्रसन्मुग्धगोपाङ्गनानन्दितो
गलदभिनवधातुधाराविचित्राङ्गरागो मुरारातिरस्तु प्रमोदाय नः ॥

प्रतिचरणविवृद्धरेफाः स्युरर्णोऽर्णव-
व्यालजीमूतलीलाकरोद्दामशङ्खादयः ॥ २ ॥

जयजयजगदीशविष्णोहरेरामदामोदरश्रीनिवासाच्युतानन्तनारायण
त्रिदशगणगुरो मुरारे मुकुन्दासुरारे हृषीकेश पीताम्बर श्रीपते माधव ॥
गरुडगमन कृष्ण वैकुण्ठ गोविन्द विश्वम्भरोपेन्द्र चक्रायुधाधोक्षज श्रीनिधे
बलिदमननृसिंहशौरेभवाम्भोधिघोरार्णसित्वंनिमज्जन्तमभ्युद्धरोपेत्यमाम्॥
एवमर्णवादीनामप्युदाहरणानि बोध्यानि ।

प्रचितकसमभिधो धीरधीभिः स्मृतो
दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ ३ ॥

मुरहर यदुकुलाम्भोधिचन्द्र प्रभो देवकीगर्भरत्न त्रिलोकैकनाथ
प्रचितकपटसुरारिव्रजोद्दामदन्तावलस्तोमविद्रावणे केसरीन्द्र ॥
चरणनखरसुधांशुच्छटोन्मेषनिःशेषितध्यायिचेतोनिविष्टान्धकार
प्रणतजनपरितापोग्रदावानलोच्छेदमेघ प्रसीद प्रसीद ॥

यत्र दृश्यते गुरोः परो लघुः
क्रमात्स उच्यते बुधैरशोकपुष्पमञ्जरीति ॥ ४ ॥

मूर्ध्नि चारुचम्पकस्रजा सलीलवेष्टनं लसल्लवङ्गचारुचन्द्रिका कचेषु
कर्णयोरशोकपुष्पमञ्जरीवतंसको गले च कान्तकेसरोपक्लृप्तदाम ॥
फुल्लनागकेसरादिपुष्परेणुरूषणं तनौ विचित्रमित्युपात्तवेश एष
केशवः पुनातु नः सुपुष्पभूषितः सुमूर्तिमानिवागतो मधुर्विहर्तुमत्र ॥

सगणः सकलः खलु यत्र भवे-
त्तमिह प्रवदन्ति बुधाः कुसुमस्तबकम् ॥ ५ ॥

विरराज यदीयकरः कनकद्युतिबन्धुरवामदृशः कुचकुड्मलगो
भ्रमरप्रकरेण यथावृतमूर्तिरशोकलताविलसत्कुसुमस्तबकः ॥
स नवीनतमालदलप्रतिमच्छवि बिभ्रदतीव विलोचनहारि वपु-
श्चपलारुचिरांशुकवल्लिधरो हरिरस्तु मदीयहृदम्बुजमध्यगतः ॥

यत्र रेफः परं स्वेच्छया गुम्भितः
स स्मृतो दण्डको मत्तमातङ्गलीलाकरः ॥ ६ ॥

हेमगौरे वसानोऽशुके शक्रनीलासिते वर्ष्मणि स्पष्टदिव्यानुलेपाङ्किता
तारहारांशुवत्तोनभश्चित्रमालाञ्चितो भव्यभूषोज्ज्वलाङ्गः समं सीरिणा ॥
अञ्जनाभाम्बरेणेन्दुकुन्दाभदेहेन लीलापरीहासहासोर्मिकौतूहलैः
कंसरङ्गाद्रिगः पातु नश्चक्रपाणिर्गतिक्रीडया मत्तमातङ्गलीलाकरः ॥

लघुर्गुरुर्निजेच्छया यदा निवेश्यते
तदैष दण्डको भवत्यनङ्गशेखरः ॥ ७ ॥

उदेत्यसौ सुधाकरः पुरो विलोकयाद्य राधिके विजृम्भमाणगौरदीधिती
रतिस्वहस्तनिर्मितः कलाकुतूहलेन चारुचम्पकैरनङ्गशेखरः किमु ॥
इतिप्रमोदकारिणीं प्रियाप्रसादलक्षणां गिरं, समुद्गिरन्मुरारिरद्भुतां
प्रदोषकालसङ्गमोल्लसन्मना मनोज्ञकेलिकौतुकी करोतु नः कृतार्थताम् ॥

इति छन्दोमञ्जर्यां समवृत्ताख्यो द्वितीयः स्तबकः ।

## तृतीयः स्तबकः ।

विषमे यदि सौ सलगा दले
भौ युजि भाद्गुरूकावुपचित्रम् ॥ १ ॥

द्विरावृत्त्या श्लोकः पूरयितव्यः ॥

मुरवैरिवपुस्तनुतां मुदं हेमनिभांशुकचन्दनलिप्तम् ॥
गगनं चपलामिलितं यथा शारदनीरधरैरुपचित्रम् ॥

विषमे प्रथमाक्षरहीनं दोधकमेव हि वेगवती स्यात् ॥ २ ॥

स्मरवेगवती व्रजरामा केशववंशरवैरतिमुग्धा ॥
रभसान्न गुरून्गणयन्ती केलिनिकुञ्जगृहाय जगाम ॥

अयुजि प्रथमेन विवर्जिता द्रुतविलम्बितता हरिणप्लुता ॥ ३ ॥

स्फुटफेनचया हरिणप्लुता बलिमनोज्ञतटा तरणेः सुता ॥
कलहंसकुलारवशालिनी विहरतो हरति स्म हरेर्मनः ॥

अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ ॥ ४ ॥

स्फुटसुमधुरवेणुगीतिभिस्तमपरवक्त्रमवेत्य माधवम् ॥
मृगयुवतिगणैः समं स्थिता व्रजवनिता धृतचित्तविभ्रमा ॥

अयुजि नयुगरेफतो यकारो-
युजि तु नजौ जरगाश्च पुष्पिताग्रा ॥ ५ ॥

वैतालीयं पुष्पिताग्रां चेच्छन्त्यपरवक्त्रकम् ।

करकिसलयशोभया विभान्ती कुचफलभारविनम्रदेहयष्टिः ॥
स्मितरुचिरविलासपुष्पिताग्रा व्रजयुवतिव्रततिर्हरेर्मुदेऽभूत् ॥

अयुजोर्यदि सौ जगौ युजोः सभरागौ यदि सुन्दरी तथा ॥ ६ ॥

यदवोचदुदीक्ष्य सुन्दरी परितः स्नेहमयेन चक्षुषा ॥
अपि कंसहरस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥
यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा ॥
अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम् ॥

इति भारवौ ।

इति छन्दोमञ्जर्यामर्धसमाख्यस्तृतीयः स्तबकः ।

# चतुर्थः स्तबकः ।

प्रथमे सजौ यदि सलौ च
नसजगुरुकाण्यनन्तरम् ॥
यद्यथ भनभगाः स्युरथो
सजसा जगौ च भवतीयमुद्गता ॥ १ ॥

विललास गोपरमणीषु तरलितनया प्रभोद्गता ॥
कृष्णनयनचकोरयुगे दधती सुधांशुकिरणोर्मिविभ्रमम् ॥

प्रथमे सजौ यदि सलौ च
नसजगुरुकाण्यनन्तरम् ॥
यद्यथ भनजलगाः स्युरथो
सजसा जगौ च भवतीयमुद्गता ॥ २ ॥

अथ वासवस्य वचनेन रुचिरवदनस्त्रिलोचनम् ॥
क्लान्तिरहितमभिराधयितुं विधिवत्तपांसि विदधे धनञ्जयः ॥

इति भारवावुद्गताभेदः ॥

अयमुद्गतासदृशमेव
पदमिह तृतीयमन्यथा ॥
जायते रनभगैर्ग्रथितं
कथयन्ति सौरभमिदं तदीदृशम् ॥ ३ ॥

परिभूतफुल्लशतपत्रवनविसृतगन्धविभ्रमा ।
कस्य ह्यन्न हरतीह हरे ! मुखपद्मसौरभकला तवाद्भुता ॥

नयुगं सकारयुगलं च
भवति यदि चेत्तृतीयके ॥
तदुदितमुरुमतिभिर्ललितं
यदि शेषमस्य सकलं यथोद्गता ॥ ४ ॥

व्रजसुन्दरीसमुदयेन मुदितमनसा स्म पीयते ।
हिमकरगलितमिवामृतकं ललितं मुरारिमुखचन्द्रविद्रुतम् ॥

भवत्यर्धसमं वक्त्रं विषमं च कदाचन ॥
तयोर्द्वयोरुपान्तेऽत्र छन्दस्तदधुनोच्यते ॥

वक्त्रं युग्भ्यां मगौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम् ॥ ५ ॥

अत्रापि द्विरावृत्त्या श्लोकः पूरयितव्यः ।

वक्त्राम्भोजं सदा स्मेरं चक्षुर्नीलोत्पलं फुल्लम् ।
वल्लवीनां मुरारातेश्चेतोभृङ्गं जहारोच्चैः ॥

युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ॥ ६ ॥

रासकेलिसतृष्णस्य कृष्णस्य मधुवासरे ।
आसीद्गोपमृगाक्षीणां पथ्या वक्त्रमधुस्रुतिः ॥

पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः ॥
गुरु षष्ठं च पादानां शेषेष्वनियमो मतः ॥ ७ ॥
प्रयोगे प्रायिकं प्राहुः केऽप्येतद्वक्त्रलक्षणम् ॥
लोकेऽनुष्टुबिति ख्यातं तस्याष्टाक्षरता कृता ॥ ८ ॥

इति छन्दोमञ्जर्यां विषमवृत्ताख्यश्चतुर्थः स्तबकः ।

---

## पञ्चमः स्तबकः ।

अथार्या ।

लक्ष्मैतत्सप्त गणा गोपेता भवति नेह विषमे जः ॥
षष्ठो जश्च नलघु वा प्रथमार्धे नियतमार्यायाः ॥ १ ॥
षष्ठे द्वितीयलात्परके न्ले मुखलाच्च सयतिपदनियमः ॥
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः ॥ २ ॥

कृष्णः शिशुः सुतो मे बल्लवकुलटाभिराहृतो न गृहे ।
क्षणमपि वसत्यसाविति जगाद गोष्ठ्यां यशोदार्या ॥
वृन्दावने सलीलं वल्गुद्रुमकाण्डनिहिततनुयष्टिः ।
स्मेरमुखार्पितवेणुः कृष्णो यदि मनसि कः स्वर्गः ॥

पथ्या विपुला चपला मुखचपला जघनचपला च ॥
गीत्युपगीत्युद्गीतय आर्यागीतिश्च नवधाऽऽर्या ॥ ३ ॥
प्रथमगणत्रयविरतिर्दलयोरुभयोः प्रकीर्तिता पथ्या ।

जय जय जगदीश ! विभो ! केशव ! कंसान्त ! माधवानन्त ! ।
कुरु करुणामिति भणितिः पथ्या भवरोगदुःस्थानाम् ॥

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः ॥४॥

यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥
पुंसां कलिकालव्यालहतानां नास्त्युपहतिरल्पापि ।
वीर्यविपुला मुखे चेत्स्याद्गोविन्दाख्यमन्त्रोक्तिः ॥
दलयोर्द्वितीयतुर्यौ गणौ जकारौ तु यत्र चपला सा ॥ ५ ॥
द्विरावृत्त्या श्लोकः पूरयितव्यः ।
चपला न चेत्कदाचिन्नृणां भवेद्भक्तिभावना कृष्णे ।
धर्मार्थकाममोक्षास्तदा करस्था न सन्देहः ॥
आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ॥
शेषः पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥
नन्दसुत ! वञ्चकस्त्वं दृढं न ते प्रेम गच्छ तत्रैव ।
यत्र भवति ते रागः कापि जगादेति मुखचपला ॥
प्राक्प्रतिपादितमर्धे प्रथमे प्रथमेतरे च चपलायाः ॥
लक्ष्माश्रयेत सोक्ता विशुद्धधीभिर्जघनचपला ॥ ७ ॥
कृष्णः शृङ्गारपटुर्यौवनमदरागचपलललिताङ्गः ।
आसीद् व्रजाङ्गनानां मनोहरो जघनचपलानाम् ॥
आर्याप्रथमार्धसमं यस्या अपरार्धमीरिता गीतिः ॥
केशववंशजगीतिर्लोकमनोहरिणहारिणी जयति ।
गोपीमानग्रन्थेर्विमोचनी दिव्यगायनाश्चर्या ॥
आर्यापरार्धतुल्ये दलद्वये प्राहुरुपगीतिम् ॥ ८ ॥
नवगोपसुन्दरीणां रासोल्लासे मुरारातिम् ।
अस्मारयदुपगीतिः स्वर्गकुरङ्गीदृशां गीतेः ॥
आर्याशकलद्वितये विपरीते पुनरिहोद्गीतिः ॥
नारायणस्य सन्ततमुद्गीतिः संस्मृतिर्भक्त्या ।
अर्चायामासक्तिर्दुस्तरसंसारसागरे तरणिः ॥
आर्याप्राग्दलमन्तेऽधिकगुरु तादृक्परार्धमार्यागीतिः ॥ ९ ॥
द्विरावृत्त्या श्लोकः पूरणीयः ।
हर्षाश्रुस्तिमितदृशः प्रमोदरोमाञ्चकञ्चुकाञ्चितदेहाः ।
आर्यागीतिं भक्ता गायन्ति श्रीपतेश्चरितसम्बद्धाम् ॥
चारुसमीरणविपिने हरिणकलङ्ककिरणावली सविलासा ।
आबद्धराममोहा वेलामूले विभावरी परिहीना ॥ इति भट्टौ ।

अथ वैतालीयम् ।

षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ॥
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ १ ॥

घुसृणेन मदेन चर्चितं तव यन्निन्दति राधिके कुचम् ।
मुदमातनुतेऽत्र पाकिमं तद्वैतालीयं फलं हरेः ॥

तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसिकं कवीन्द्रहृद्यम् ॥२॥

द्विरावृत्त्या श्लोकः पूरयितव्यः ।

आतन्वानं मुरारिकान्तास्वौपच्छन्दसिकं हृदो विनोदम् ।
कंसं यो निर्जघान देवो वन्दे तं जगतां स्थितिं दधानम् ॥

अथ पज्झटिका ।

प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा ॥
पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः ॥१॥

तरलवतंसाश्लिष्टस्कन्धश्चलतरपज्झटिकाकटिबन्धः ।
मौलिचपलशिखिचन्द्रकवृन्दः कालियशिरसि ननर्त मुकुन्दः ॥

नवमगुरुत्वं व्यभिचरति च रणधरणीजितरजनिविहारीति ॥

मात्रात्रयोदशकं यदि पूर्वं लघुकविरामि ॥
पठ पुनरेकादशं दोहडिका द्विगुणेन ॥ ३ ॥

प्राकृतभाषायां प्रचारः ।

राई दोहडि पठण सुणि हासिओ कण्णगोआल ।
बिन्दावणघणकुञ्जघरचलिओ कमण रसाल ॥

इति छन्दोमञ्जर्यां मात्रावृत्ताख्यः पञ्चमः स्तबकः ।

## षष्ठः स्तबकः ।

गद्यं पद्यमिति प्राहुर्वाङ्मयं द्विविधं बुधाः ॥
प्रागुक्तलक्षणं पद्यं गद्यं सम्प्रति गद्यते ॥ १ ॥

अपादं पदसन्तानं गद्यं तत्तु त्रिधा मतम् ॥
वृत्तकोत्कलिकाप्रायचूर्णकप्रभेदतः ॥ २ ॥

अकठोराक्षरं स्वल्पसमासं वृत्तकं मतम् ॥
तत्तु वैदर्भरीतिस्थं गद्यं हृद्यतरं भवेत् ॥ ३ ॥

भवेदुत्कलिकाप्रायं समासाढ्यं दृढाक्षरम् ॥
वृत्तैकदेशसम्बन्धाद्वृत्तगन्धि पुनः स्मृतम् ॥ ४ ॥

वृत्तकं यथा—

स हि त्रयाणामेव जगतां गतिः परमपुरुषः पुरुषोत्तमो दृप्तदानवभरेण भङ्गुराङ्गीमवनिमवलोक्य करुणार्द्रहृदयस्तस्या भारमवतारयितुं रामकृष्णस्वरूपेणांशतो यदुवंशेऽवततार । यस्तु प्रसङ्गेनापि स्मृतोऽभ्यर्चितो वा गृहीतनामा पुंसां संसारसागरपारमवलोकयति ।

उत्कलिकाप्रायं यथा—

प्रणिपातप्रवणप्रधानाशेषसुरासुरादिवृन्दसौन्दर्यप्रकटकिरीटकोटिनिविष्टस्पष्टमणिमयूखच्छटाच्छुरितचरणनखचक्रविक्रमोद्दामवामपादाङ्गुष्ठनखशिखरखण्डितब्रह्माण्डविवरनिःसरच्छरदमृतकरप्रकरभासुरसुरवाहिनीप्रवाहपवित्रीकृतविष्टपत्रितय ! कैटभारे ! क्रूरतरसंसारसागरनानाप्रकारावर्तविवर्तमानविग्रहं मामनुगृहाण ।

वृत्तगन्धि यथा—

जय जय जय जनार्दन सुकृतिमनस्तडागविकस्वरचरणपद्म पद्मपात्रनयन ! पद्मापद्मिनीविनोदराजहंस ! भास्वरयशःपटलपरिपूरितभुवनकुहर ! हरकमलासनादिवृन्दारकवृन्दवन्दनीयपदारविन्दद्वन्द्व ! द्वन्द्वनिर्मुक्त ! योगीन्द्रहृदयमन्दिराविष्कृतनिरञ्जनज्योतिःस्वरूप ! नीरदरूप ! विश्वरूप ! अनाथनाथ ! जगन्नाथ ! मामनवधिभवदुःखव्याकुलं रक्ष रक्ष रक्ष ।

व्यवहारोचितं प्रायो मया च्छन्दोऽत्र कीर्तितम् ॥
प्रस्तारादि पुनर्नोक्तं केवलं कौतुकं हि तत् ॥ ५ ॥

सर्गैः षोडशभिः समुज्ज्वलपदैर्नव्यार्थभव्याशयै-
र्येनाकारि तदच्युतस्य चरितं काव्यं कविप्रीतिदम् ॥
कंसारेः शतकं दिनेशशतकद्वन्द्वं च तस्यास्त्वसौ
गङ्गादासकवेः श्रुतौ कुतुकिनां सच्छन्दसां मञ्जरी ॥ ६ ॥

इति छन्दोमञ्जर्यां गद्यप्रदो नाम षष्ठः स्तबकः ।

समाप्तोऽयं ग्रन्थः ।

महाकविश्रीक्षेमेन्द्रकृतं

# सुवृत्ततिलकम् ।

---

प्रथमो विन्यासः ।

गणपतिगुरोर्वक्रश्चूडाशशाङ्ककलाङ्कुरः
स्फुटफणिफणारत्नच्छायाछटाछुरणारुणः ॥
गिरिपतिसुतासंसक्तेर्ष्याविलासकचग्रह-
च्युतनखशिखालेखाकान्तस्तनोतु सुखानि वः ॥ १ ॥

स्वच्छन्दलघुरूपाय त्रिजगद्गुरवे नमः ॥
स्पष्टवामनवृत्ताय मायावक्राय चक्रिणे ॥ २ ॥
नमश्छन्दोनिधानाय सुवृत्ताचारवेधसे ॥
तपःसत्यनिवासाय व्यासायामिततेजसे ॥ ३ ॥
क्षेमेन्द्रेण सुशिष्याणां सरस्वत्याः प्रसाधनम् ॥
सुवृत्ततिलकं वर्णरुचिरं क्रियते मुखे ॥ ४ ॥
दृष्ट्वा छन्दांसि सौन्दर्यं विचार्यार्यप्रियः कृतः ॥
प्रसिद्धकाव्यकर्मण्यवृत्तानामेव सङ्ग्रहः ॥ ५ ॥
दीर्घं संयोगपूर्वं च गुरुसंज्ञं प्रकीर्तिता ॥
असंयोगग्रहं ह्रस्वं लघुसंज्ञं प्रकीर्तितम् ॥ ६ ॥
त्रिगुरुः प्राग्गुरुर्मध्यगुरुरन्तगुरुस्तथा ॥
त्रिलघुः प्राग्लघुर्मध्यलघुरन्तलघुस्तथा ॥ ७ ॥
मभजाः सनया रेफतकारौ चेति संज्ञिताः ॥
ज्ञेयो लघुर्लकारोऽत्र गकारश्च गुरुर्मतः ॥ ८ ॥ ( युग्मम् )
क्वचिद्विश्लिष्टसंस्थानैः क्वचिदेकपदस्थितैः ॥
संयोगस्थैः क्वचिद्वृत्तमुदाहरणमक्षरैः ॥ ९ ॥
पूर्वाक्षरद्वयासक्तविरामेण षडक्षरा ॥
तकारेण यकारेण तनुमध्याऽभिधीयते ॥ १० ॥

यथा मम—

तेन प्रविभक्ता कामं वयसा सा ॥
येन प्रविलासं धत्ते तनुमध्या ॥

सप्ताक्षरसमायुक्तं जसाभ्यां गुरुणा तथा ॥
अविरामं विदुर्वृत्तं कुमारललिताभिधम् ॥ ११ ॥

यथा मम—

जनं स्मृतिदशाप्तं गतानुगतिकः किम् ॥
न शोचति जनोऽयं कुमारललितं तत् ॥

मकारयुगपर्यन्ते यत्संयुक्तगुरुद्वयम् ॥
विद्युन्मालाभिधं तद्धि वृत्तमष्टाक्षरं विदुः ॥ १२ ॥

यथा मम—

मौनं ध्यानं भूमौ शय्या गुर्वी तस्याः कामावस्था ॥
मेघोत्सङ्गे नृत्तासक्ता यस्मिन्काले विद्युन्माला ॥

लघोर्गुरोश्च विच्छित्त्या यत्रानन्तर्यसङ्गतिः ॥
वृत्तप्रमाणनिपुणैः सा प्रमाणीति कीर्तिता ॥ १३ ॥

यथा मम—

लघु श्रुतं मदोद्धतं गुरुश्रमाय केवलम् ॥
न यत्परोपकारकृद्वृथैव तत्प्रमाण्यपि ॥

पञ्चमं लघु सर्वेषु सप्तमं द्विचतुर्थयोः ॥
गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षणम् ॥ १४ ॥
असङ्ख्यो भेदसंसर्गादनुष्टुप्छन्दसां गणः ॥
तत्र लक्ष्यानुसारेण श्रव्यतायाः प्रधानता ॥ १५ ॥

यथा भगवतो व्यासस्य—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ॥
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥

नवाक्षराऽपि ननभैरन्तैरुपलक्षिता ॥
भुजगाग्रा शिशुसृता कथिता वृत्तकोविदैः ॥ १६ ॥

यथा मम—

न नमति चरणौ भक्त्या किमिति जडमतिर्लोकः ॥
भवभयशमनौ शम्भोर्भुजगशिशुसृतावग्रे ॥

संयुक्तं भमसैरन्ते गुरुणा च दशाक्षरम् ॥
वृत्तं रुक्मवती नाम कथितं वृत्तशालिभिः ॥ १७ ॥

यथा मम—

भ्रमभसत्यैः कायसहस्रैर्मोहमयी गुर्वी भवमाया ॥
स्वप्नविलासा योगवियोगा रुक्मवती हा कस्य कृते श्रीः ॥

तकाराभ्यां जकारेण युक्तं गुरुयुगेन च ॥
इन्द्रवज्राभिधं प्राहुर्वृत्तमेकादशाक्षरम् ॥ १८ ॥

यथा मम—

तौ जन्मगूढौ चरणेन यस्य कष्टौ निविष्टौ हृदि कामकोपौ ॥
तं दुःसहास्ता ज्वलदिन्द्रवज्रपातोपमाः क्लेशदशा विशन्ति ॥

**जतजैर्गुरुयुग्मेन संसक्तैरुपलक्षितम् ॥**
**वदन्त्युपेन्द्रवज्राख्यं वृत्तमेकादशाक्षरम् ॥ १९ ॥**

यथा मम—

जितो जगत्येष भवभ्रमस्तैर्गुरूदितं ये गिरिशं स्मरन्ति ॥
उपास्यमानं कमलासनाद्यैरुपेन्द्रवज्रायुधवारिनाथैः ॥

**पदानन्तरविन्यासयोगैर्बहुभिरेतयोः ॥**
**वैचित्र्यजातिरुचिरा भवन्त्येवोपजातयः ॥ २० ॥**
**भकारत्रयसंयुक्तमन्ते गुरुयुगान्वितम् ॥**
**कथितं दोधकं नाम वृत्तमेकादशाक्षरम् ॥ २१ ॥**

यथा मम—

भो भवविभ्रमभङ्गुरभोगा गच्छत नास्त्यधुना मम मोहः ॥
तिष्ठति चेतसि चन्द्रकलाभृद्भक्तजनाभयदोऽथ कपाली ॥

**पूर्वाक्षरचतुष्कान्तविरतिर्मतलान्विता ॥**
**गुरुद्वितययुक्ता च शालिन्येकादशाक्षरा ॥ २२ ॥**

यथा मम—

मत्ता गोष्ठीगर्भमूढप्रलापा प्रौढा गाढालिङ्गिता यौवनेन ॥
मध्वाताम्रस्वेदमीलत्कपोला लोला लीलाशालिनी कस्य नेष्टा ॥

**रनरैरन्वितं युक्तं लघुना गुरुणा तथा ॥**
**ख्यातं रथोद्धतानाम वृत्तमेकादशाक्षरम् ॥ २३ ॥**

यथा मम—

रम्यनर्मकलभोगतर्जनी भ्रूलतेव तरलारियोषिताम् ॥
वैजयन्त्यभिमुखी रणे रणे भाति ते नरपते रथोद्धता ॥

**गुरुद्वययुतैरन्तेरनभैरुपलक्षिता ॥**
**गदिता स्वागतानाम वृत्तमेकादशाक्षरम् ॥ २४ ॥**

यथा मम—

रत्नभङ्गविमलैर्गुणतुङ्गैरर्थिनामभिमतार्पणसक्तैः ॥
स्वागताभिमुखनम्रशिरस्कैर्जीव्यते जगति साधुभिरेव ॥

**सकारैरन्वितं वृत्तं चतुर्भिर्युगपत्स्थितैः ॥**
**उदितं तोटकं नाम वृत्तमेकादशाक्षरम् ॥ २५ ॥**

यथा मम--

सरसः स्मरसारतरो वयसः समयः स्मृतिशेषदशापतितः ॥
गलिताखिलरागरुचिर्विजने परितोऽट कपालकरः सुमेत ! ॥

**संल्लक्षितं जतजरैर्द्वादशाक्षरमक्षरैः ॥**
**छन्दोविचक्षणा वृत्तं वंशस्थाख्यं प्रचक्षते ॥ २६ ॥**

यथा मम--

जनस्य तीव्रातपजार्तिवारणा जयन्ति सन्तः सततं समुन्नताः ॥
सितातपत्रप्रतिमा विभान्ति ये विशालवंशस्थतया गुणोचिताः ॥

**अभिव्यक्तं नभभरैरक्षरैर्द्वादशाक्षरम् ॥**
**वदन्ति वृत्तजातिज्ञा वृत्तं द्रुतविलम्बितम् ॥ २७ ॥**

यथा मम--

नभसि भर्गगलच्छविभिर्घनैर्द्रुतविलम्बितगैः परिवारितः ॥
सितकरः कलहंस इवाभितस्तरति संवलितो यमुनोर्मिभिः ॥

**समन्वितं मनजरैश्छिन्नं पूर्वाक्षरैस्त्रिभिः ॥**
**त्रयोदशाक्षरं नाम्ना कीर्तयन्ति प्रहर्षिणीम् ॥ २८ ॥**

यथा मम--

मानौजःसुरभिगुणैर्यशःसितानां निर्व्याजा निजभुजविक्रमक्रमाप्ता ॥
सर्वाशाप्रणयिजनोपजीव्यमाना भव्यानां भवति परप्रहर्षिणी श्रीः ॥

**अभिज्ञातं तभजजैरन्तासक्तगुरुद्वयम् ॥**
**चतुर्दशाक्षरं वृत्तं वसन्ततिलकं विदुः ॥ २९ ॥**

यथा मम--

तद्भ्राजि जन्मसचिवे भगवत्यनङ्गे
प्राप्ते लसत्कुसुममण्डलपाण्डुरेण ॥
भृङ्गावलीकुटिलकुन्तलसन्निवेशा
कान्ता वसन्ततिलकेन विभूषिता भूः ॥

**अष्टाक्षरविरामेण युक्ता ननमयैः सयः ॥**
**वदन्ति मालिनीनाम वृत्तं पञ्चदशाक्षरम् ॥ ३० ॥**

यथा मम--

ननननमयवाणी मेखलाकृष्टिकाले
प्रविचलदिव शीलं नोत्सृजन्ती दुकूलम् ॥
तृणलवचलनेऽपि स्वैरिणी शङ्कमाना
दिशि दिशि कृतदृष्टिर्मालिनी कस्य नेष्टा ॥

**नजभैर्जजलैरन्तगुरुभिर्नर्कुटाभिधम् ॥**
**वृत्तं चानष्टविच्छेदं विदुः सप्तदशाक्षरम् ॥ ३१ ॥**

यथा मम—

निजभुजजैर्विशालगुणविक्रमकीर्तिभरैः
प्रविदधता सुधांशुधवलं भवता भुवनम् ॥
कथय कथं कृतेयमतिरागवती जनता
चरितमपूर्वमेव तव कस्य न नर्कुटकृत् ॥

**जसजैः सयलैर्गेन युताष्टनवसंहतिः ॥**
**दशसप्ताक्षरा पृथ्वी कथिता वृत्तवेदिभिः ॥ ३२ ॥**

यथा मम—

जवात्स रजसा युतः श्रमविसंस्थुलाङ्गः पथा
व्रजन्सततसेवकः पिशुनधाम वेश्म प्रभोः ॥
कदाचिदवलोकनैः फलविवर्जितैर्मन्यते
जडः करसमर्पितामिव मदेन पृथ्वीमिमाम् ॥

**नसमै रसलैर्गेन युक्ता सप्तदशाक्षरा ॥**
**विच्छिन्ना हरिणी षड्भिश्चतुर्भिः सप्तभिस्तथा ॥ ३३ ॥**

यथा मम—

'न समरसनाः काले भोगाश्चलं धनयौवनं
कुरुत सुकृतं यावन्नेयं तनुः प्रविशीर्यते ॥
किमपि कलना कालस्येयं प्रधावति सत्वरा
तरुणहरिणी सन्त्रस्तेव प्लवप्रविसारिणी ॥

**यमनैः सभलैर्गेन युक्ता सप्तदशाक्षरा ॥**
**षडेकादशविच्छेदवती शिखरिणी मता ॥ ३४ ॥**

यथा मम—

यथा मन्युर्लीनः स च विभवमग्नः स्मरमद-
स्तथा जाने जाता शमसमयरम्या परिणतिः ॥
इदानीं संसारव्यतिकरहरा तीव्रतपसे
विविक्ता युक्ता मे गिरिवरमही सा शिखरिणी ॥

**चतुःषट्सप्तविरतिर्वृत्तं सप्तदशाक्षरम् ॥**
**मन्दाक्रान्ता मभनतैस्तगगैश्चाभिधीयते ॥ ३५ ॥**

यथा मम—

मध्येभङ्गीवलनाविततापाङ्गसंसङ्गभाजः
स्मर्यन्ते ते यदि धृतिमुषः पक्ष्मलाक्षीकटाक्षाः ॥
तत्किं मिथ्या नियमनिभृतैः कानने धीयते धी-
र्मन्दाक्रान्ता दशति निशिता पन्नगी पाणिसक्ता ॥

**मसजैः सततैर्गेन युक्तमेकोनविंशवत् ॥**
**शार्दूलक्रीडितं प्राहुश्छिन्नं द्वादशसप्तभिः ॥ ३६ ॥**

यथा मम—

माद्यत्सज्जसमाततोग्रसुभटोद्भिन्नेभकुम्भस्थल-
श्लिष्यन्मौक्तिकदन्तुरः सरभसोद्वेल्लद्यशःकेसरः ॥
जृम्भारम्भभयङ्करव्यतिकरत्रस्तैः समुद्वीक्षितः
शत्रूणां त्वदसिः करोति समरे शार्दूलविक्रीडितम् ॥

**युक्तं मरभनैर्यैश्च त्रिभिः सप्ताक्षरैस्त्रिभिः ॥**
**छेदैश्च स्रग्धरावृत्तमेकविंशाक्षरं विदुः ॥ ३७ ॥**

साराम्भानुभावप्रियपरिचयया स्वर्गरङ्गाङ्गनानां
लीलाकर्णावतंसश्रियमतनुगुणश्लेषया संश्रयन्त्या ॥
आभाति व्यक्तमुक्ताविचकिलवलीवृन्दकुन्देन्दुकान्त्या
त्वत्कीर्त्या भूषितेयं भुवनपरिवृढ ! स्रग्धरेव त्रिलोकी ॥

**इति सरलतरत्वात्सर्वकाव्योचितत्वा-**
**त्सुकविपरिचितत्वात्कीर्णकर्णामृतत्वात् ॥**
**परुषविषममात्रादुर्विरामोज्झितेयं**
**प्रचुररुचिरवृत्तव्यक्तिरुक्ता हिताय ॥ ३८ ॥**

**इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनामश्रीक्षेमेन्द्र-**
**विरचिते सुवृत्ततिलके वृत्तावचयो नाम**
**प्रथमो विन्यासः ।**



## द्वितीयो विन्यासः ।

**कृते प्रसिद्धवृत्तानां लक्ष्यलक्षणसङ्ग्रहे ॥**
**अधुना क्रियते तेषां गुणदोषप्रदर्शनम् ॥ १ ॥**
**न षट्सप्ताक्षरे वृत्ते विश्राम्यति सरस्वती ॥**
**भृङ्गीव मल्लिकाबालकलिकाकोटिसङ्कटे ॥ २ ॥**
**समासैर्लघुवृत्तानामसमासैर्महीयसाम् ॥**
**शोभा भवति भव्यानामुपयोगवशेन वा ॥ ३ ॥**
**अनुष्टुप्छन्दसां भेदे कैश्चित्सामान्यलक्षणम् ।**
**यदुक्तं पञ्चमं कुर्याल्लघु षष्ठं तथा गुरु ॥ ४ ॥**
**तत्राप्यनियमो दृष्टः प्रबन्धे महतामपि ॥**
**तस्माद्व्यभिचारेण श्रव्यतैव गरीयसी ॥ ५ ॥**

यथा कालिदासस्य—

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ॥
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव ॥

**उपजातिविकल्पानां सिद्धो यद्यपि सङ्करः ॥**
**तथापि प्रथमं कुर्यात्पूर्वपादाक्षरं लघु ॥ ६ ॥**

यथा श्रीमदुत्पलराजस्य—

हृताञ्जनश्यामरुचस्तवैते
स्थूलाः किमित्यश्रुकणाः पतन्ति ॥
भृङ्गा इव व्यायतपङ्क्तयो ये
तनीयसीं रोमलतां श्रयन्ति ॥

**सूत्रस्येवात्र तीक्ष्णाग्रं श्लोकस्य लघुना मुखम् ॥**
**कर्णं विशति निर्विघ्नं सरलत्वं च नोज्झति ॥ ८ ॥**
**गुर्वक्षरेण संरुद्धं ग्रन्थियुक्तमिवाऽग्रतः ॥**
**करोति प्रथमं स्थूलं किंचित्कर्णकदर्थनाम् ॥ ८ ॥**

यथा कालिदासस्य—

अस्त्युत्तरस्यां दिशि देवतात्मा
हिमालयो नाम नगाधिराजः ॥
पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः ॥

**त्र्यक्षरैस्त्र्यक्षरैरेव च्छेदैराभाति दोधकम् ॥**
**अतोऽल्पैरधिकैर्वापि यतिं तालमिवोज्झति ॥ ९ ॥**

यथा मम—

सज्जनपूजनशीलनशोभा-
मर्जय वर्जय दुर्जनसङ्गम् ॥
दुस्तरसंसृतिसागरवेगे
मज्जनकारणवारणमेतत् ॥

अतोऽल्पाधिकैर्यथा तुञ्जीरस्य—

त्वन्मुखचन्द्रनिरीक्षणवर्त्यो
यः सुतरामिह निर्मलनेत्रः ॥
सर्वजनस्य पुरः स्थितमेत-
त्सोऽन्तकवर्त्म न पश्यति चित्रम् ॥

**शालिनी श्लथबन्धेव स्वभावेन विभाव्यते ॥**
**उत्तेजयेत्तां यत्नेन मन्ददीपशिखामिव ॥ १० ॥**

श्लथा यथा मम—

> ऊोषक्लेशं प्रोषितानां दिशन्ती
>
> मानम्लानिं मानिनीनां दधाना ॥
>
> गाढं सक्ता सद्गुणग्लानिदाने
>
> चन्द्रस्य श्रीर्दुर्जनस्येव जाता ॥

**अत्रन्तान्तरसंयोगैः किञ्चित्कार्कश्यकारिभिः ॥**
**अन्ते विसर्जनीयैश्च शालिनी याति दीप्तताम् ॥ ११ ॥**

यथा मम—

> लज्जामज्जल्लोलतारान्तकान्ता-
>
> स्तिर्यङ्निर्यत्केतकीपत्रतीक्ष्णाः ॥
>
> मग्नाश्चित्ते कस्य निर्यान्ति भूयः
>
> प्रेमोन्मीलत्पक्ष्मलाक्षीकटाक्षाः ॥

**श्लथस्वभावान्माधुर्यं शालिन्याः परिवर्ज्यते ॥**
**रुचिः प्रयाति मन्दाग्नेः क्षीरेणात्यन्तमन्दताम् ॥ १२ ॥**
**विसर्गयुक्तैः पादान्तैर्विराजति रथोद्धता ॥**
**कलापरिचयैर्याता लटभेव प्रगल्भताम् ॥ १३ ॥**

यथा मम—

> अत्र चैत्रसमये निरन्तराः
>
> प्रोषिताहृदयकीर्णपावकाः ॥
>
> वान्ति कामुकमनोविमोहना
>
> व्याललोलमलयाचलानिलाः ॥

**अविसर्गैस्तु पादान्तैर्निष्प्रभैव रथोद्धता ॥**
**अप्रार्थनाप्रणयिनी म्लानमानेव मानिनी ॥ १४ ॥**

यथा कलशकस्य—

> अञ्जलौ जलमधीरलोचना
>
> लोचनप्रतिशरीरशारितम् ।
>
> आतमात्तमपि कान्तमुक्षितुं
>
> कातरा शफरशङ्किनी जहौ ॥

**साकाराद्यैर्विसर्गान्तैः सर्वपादैः सविभ्रमा ॥**
**स्वागता स्वागता भाति कविकर्मविलासिनी ॥ १५ ॥**

> व्यावलन्ति तरला जलधाराः
>
> पान्थसङ्गमधृतेः परिहाराः ॥
>
> प्रान्तरत्ननिभविद्युदुदाराः
>
> प्रावृषः पृथुपयोधरहाराः ॥

न तु यथा ममैव—

अम्बरेऽम्बुभरलम्बिपयोदे
मत्तबर्हिरुचिरेऽद्रिनितम्बे ॥
पुष्पधामनि कदम्बकदम्बे
का गतिः पथिक कालविलम्बे ॥

**द्रुततालयैरेव व्यक्तं रूक्षाक्षरैः पदैः ॥**
**प्रनर्तयति यच्चित्तं तत्तोटकमभीप्सितम् ॥ १६ ॥**

यथा मम—

मदघूर्णितलोचनषट्चरणं
घनरागमनङ्गकराभरणम् ॥
कमलद्युति मुग्धवधूवदनं
सुकृती पिबतीह सुधासदनम् ॥

**असमस्तपदैः पादसन्धिविच्छेदसुन्दरम् ॥**
**सर्वपादैर्विसर्गान्तैर्वंशस्थं यात्यनर्घताम् ॥ १७ ॥**

यथा भट्टबाणस्य—

जयन्ति बाणासुरमौलिलालिता
दशास्यचूडामणिचक्रचुम्बिनः ॥
सुरासुराधीशशिखान्तशायिन-
स्तमश्छिदस्त्र्यम्बकपादपांसवः ॥

विपरीतं यथास्यैव—

नमामि भर्वोश्चरणाम्बुजद्वयं
सशेखरैर्मौखरिभिः कृतार्चनम् ॥
समस्तसामन्तकिरीटवेदिका-
विटङ्कपीठोल्लुठितारुणाङ्गुलि ॥

**प्रारम्भे द्रुतविन्यासं पर्यन्तेषु विलम्बितम् ॥**
**विच्छित्त्या सर्वपादानां भाति द्रुतविलम्बितम् ॥ १८ ॥**

यथा मम—

कमलपल्लववारिकणोपमं
किमिव पासि सदा निधनं धनम् ॥
कलभकर्णचलाश्चलचञ्चलै
स्थिरतराणि यशांसि न जीवितम् ॥

द्रुतहीनं विलम्बितं यथा मम—

निपततां भ्रमतां विनिमज्जतां
प्रविशतां परिवारशतैरधः ॥

तनुभृतां भव एव भवार्णवे
भयमये भगवानवलम्बनम् ॥

**आकारमन्थरैः प्रायः पादे पादेऽक्षरैस्त्रिभिः ॥**
**शेषाक्षरैर्द्रुततरैः प्रहर्षाय प्रहर्षिणी ॥ १९ ॥**

यथा श्रीहर्षदेवस्य—

दुर्वारां कुसुमशरव्यथां वहन्त्या
कामिन्या यदभिहितं पुरः सखीनाम् ॥
तद् भूयः शिशुशुकसारिकाभिरुक्तं
धन्यानां श्रवणपथातिथित्वमेति ॥

विपरीतं यथा मम—

सङ्कोचव्यतिकरबद्धभीतिलोलै-
र्निर्यद्भिर्भ्रमरभरैः सरोरुहेभ्यः ॥
आरब्धः क्षणमिव सन्ध्यया जगत्या-
मुत्पत्त्यै घनतिमिरस्य बीजवापः ॥

**वसन्ततिलकस्याग्रे साकारे प्रथमाक्षरे ॥**
**ओजसा जायते कान्तिः सविकासविलासिनी ॥ २० ॥**

यथा विद्याधिपत्यपरनाम्नो रत्नाकरस्य—

कण्ठश्रियं कुवलयस्तबकाभिराम-
दामानुकारिविकटच्छविकालकूटाम् ॥
बिभ्रत्सुखानि दिशतादुपहारपीत-
धूपोत्थधूममलिनामिव धूर्जटिर्वः ॥

**आकारेऽपि कृते पूर्वं बन्धेऽल्पपदपेशले ॥**
**वसन्ततिलकं धत्ते निर्ग्रन्थि रमणीयताम् ॥ २१ ॥**

यथा परिमलस्य—

अच्छासु हंस इव बालमृणालिकासु
भृङ्गो नवास्विव मधुद्रुममञ्जरीषु ॥
कोऽवन्तिभर्तुरपरो रसनिर्भरासु
पृथ्वीपतिः सुकविसूक्तिषु बद्धभावः ॥

**विसर्गहीनपर्यन्ता मालिनी न विराजते ॥**
**चमरी छिन्नपुच्छेव वल्लीवालूनपल्लवा ॥ २२ ॥**

यथा भट्टवल्लटस्य—

वरमिह रवितापैः किं न शीर्णासि गुल्मे
किमु दवदहनैर्वा सर्वदाहं न दग्धा ॥

यदहृदयजनौघैर्वृन्तपर्णानभिज्ञै-

रितरकुसुममध्ये मालति ! प्रोज्झितासि ॥

सम्पूर्णा सा यथा कालिदासस्य—

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं

रतिवलयपदाङ्के चापमासज्य कण्ठे ॥

सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः

शतमखमुपतस्थे प्राञ्जलिः पुष्पकेतुः ॥

**द्वितीयार्धे समस्ताभ्यां पादाभ्यां मालिनी वरा ॥**

**प्रथमार्धे समस्ताभ्यां पादाभ्यामवरा मता ॥ २३ ॥**

द्वितीयार्धे समस्तपादा यथा नन्दिनकस्य—

करतरलितबन्धं कञ्चुकं कुर्वतीनां

प्रतिफलितमिदानीं दैपमाताम्रमर्चिः ॥

स्तनतटपरिणाहे भामिनीनां भविष्य-

न्नखपदलिपिलीलासूत्रपातं करोति ॥

प्रथमार्धे समस्तपादा यथा राजशेखरस्य—

इह हि नववसन्ते मञ्जरीपुञ्जरेणु-

च्छुरणधवलदेहा बद्धहेलं सरन्ति ॥

तरलमलिसमूहा हारिहुङ्कारकण्ठा

बहुलपरिमलालीसुन्दरं सिन्दुवारम् ॥

**अत्रोऽप्यलक्ष्यं मालिन्यां वीणायामिव विस्वरम् ॥**

**श्रुत्वैवोद्वेगमायाति वाचा वक्तुं न वेत्ति तम् ॥ २४ ॥**

यथा भट्टेन्दुराजस्य—

रहसि हृतदुकूला शीलिता तैलदीपे

त्वदुपगतसमृद्धेः प्रेयसी श्रोत्रियस्य ॥

विकिरति पटवासैर्हन्ति कर्णावतंसैः

शमयति मणिदीपं पाणिफूत्कानिलेन ॥

**गुरुलघ्वादिनियमादविभ्रष्टेऽपि लक्षणात् ॥**

**दोषस्त्वदुपगेत्यत्र श्रोत्रग्राह्योऽस्ति विस्वरः ॥ २५ ॥**

**प्रथमं द्व्यक्षरैश्छेदैस्ततस्त्रिचतुरक्षरैः ॥**

**पञ्चाक्षरैश्च पर्यन्ते नर्कुटं याति चारुताम् ॥ २६ ॥**

यथा वीरदेवस्य—

तव शतपत्रपत्रमृदुताम्रतलश्चरण-

श्चलकलहंसनूपुरकलध्वनिना मुखरः ॥

महिषमहासुरस्य शिरसि प्रसभं निहितः
सकलमहीधरेन्द्रगुरुतां कथमम्ब ! गतः ॥

विपरीतं यथास्यैव—

सशिखिशिखेव धूमनिचिताञ्जनशैलगुहा
सकपिशपन्नगेव यमुनोन्नतनीलशिला ॥
महिषमहासुरोपहितभासुरशूलकरा
बहुलनिशेव भासि सतडिद्घनमेघयुता ॥

**असमासः पदर्भाति पृथ्वी पृथ्वी पृथक्स्थितैः ॥**
**समासग्रन्थिभिः सैव याति सङ्कोचखर्वताम् ॥ २७ ॥**

पृथक्पदा यथा साहिलस्य—

कचग्रहमनुग्रहं दशनखण्डनं मण्डनं
दृगञ्चनमवञ्चनं मुखरसार्पणं तर्पणम् ॥
नखार्दनमतर्दनं दृढमपीडनं पीडनं
करोति रतिसङ्गरे मकरकेतनः कामिनाम् ॥

समासवती यथा मम—

कचग्रहसमुल्लसत्कमलकोषपांडाजड-
द्विरेफकलकूजितानुकृतसीत्कृतालङ्कृताः ॥
जयन्ति सुरतोत्सवव्यतिकरे कुरङ्गीदृशां
प्रमोदमदनिर्भरप्रणयचुम्बिनो विभ्रमाः ॥

**पृथ्वी साकारगम्भीरैरोजःसर्जिभिरक्षरैः ॥**
**समासग्रन्थियुक्तापि याति प्रत्युत दीर्घताम् ॥ २८ ॥**

यथा भट्टनारायणस्य—

महाप्रलयमारुतक्षुभितपुष्करावर्तक-
प्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः ॥
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः श्रुतः ॥

**त्वरातरलविच्छेदैर्विभाति हरिणी पदैः ॥**
**मन्थरैर्ग्रन्थिबद्धेव याति निःस्पन्दसङ्गताम् ॥ २९ ॥**

तरलपदा यथा दीपकस्य—

तनुधनहरक्रूरस्तेनोत्कटां विकटाटवीं
तरति तरसा शौर्योत्सेकात्स्वसार्थवशाज्जनः ॥
पुरवरवधूलीलावल्गत्कटाक्षबलाकुले
नगरनिकटे पन्थाः पान्थ ! स्फुटं दुरतिक्रमः ॥

मन्थरैर्यथा भट्टेन्दुराजस्य--

गुणपरिचयस्तीर्थे वासः स्थिरोभयपक्षता
वपुरतिदृढं वृत्तं सम्यक्सखे ! तव किं पुनः ॥
सरति सुमते यस्त्वां पातुं दृशा विनिमेषया
बडिश विषमं तस्याक्षेपं करोषि सहासुभिः ॥

**त्रिषु पादेषु विश्रान्तविलासैर्ललिता पदैः ॥**
**अन्ते तरङ्गितगतिर्हरिणी हारिणी तराम् ॥ ३० ॥**

यथास्यैव--

उपपरिसरं गोदावर्याः परित्यजताध्वगाः !
सरणिमपरो मार्गस्तावद्भवद्भिरवेक्ष्यताम् ॥
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥

**शिखरिण्याः समारोहात्सहजैवौजसः स्थितिः ॥**
**सैव लुप्तविसर्गान्तैः प्रयात्यत्यन्तमुन्नतिम् ॥ ३१ ॥**

यथा मुक्ताकणस्य--

यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ॥
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुखण्डे स्मरदवः ॥

विपरीता यथा भट्टश्यामलस्य--

धृतो गण्डाभोगे मधुप इव बद्धोऽञ्जविवरे
विलासिन्या मुक्तो बकुलतरुमापुष्पयति यः ॥
विलासो नेत्राणां तरुणसहकारप्रियसखः
स गण्डूषः सीधोः कथमिव शिरः प्राप्स्यति मधोः ॥

**शिखरिण्याः पदैश्छिन्नैः स्वरूपं परिहीयते ॥**
**मुक्तालताया निःसूत्रमुक्तैर्मुक्ताफलैरिव ॥ ३२ ॥**

यथा भट्टभवभूतेः--

असारं संसारं परिमुषितरत्नं त्रिभुवनं
निरालोकं लोकं मरणशरणं बान्धवजनम् ॥
अदर्पं कन्दर्पं जननयननिर्माणमफलं
जगज्जीर्णारण्यं कथमसि विधातुं व्यवसितः ॥

**श्लोकेऽस्मिन्सचमत्कारसरसास्वादशालिनि ॥**
**केवलं शिखरिण्यत्र स्वरूपमपहारितम् ॥ ३३ ॥**

**मन्थराक्रान्तविस्रब्धैश्चतुर्भिः प्रथमाक्षरैः ॥**
**मध्यषट्केऽतिचतुरे मन्दाक्रान्ता विराजते ॥ ३४ ॥**

यथा कालिदासस्य—

ब्रह्मावर्तं जनपदमधश्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ॥
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारासारैस्त्वमिव कमलान्यभ्यषिञ्चन्मुखानि ॥

आदिमध्ये तुल्या यथास्यैव—

कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः ॥
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥

**साकाराद्यक्षरैः पादपर्यन्तः सविसर्गकैः ॥**
**शार्दूलक्रीडितं धत्ते तेजोजीवितमूर्जितम् ॥ ३५ ॥**

यथा भट्टश्यामलस्य—

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः ॥
सङ्ग्रामामृतसागरप्रमथनक्रीडाकृतौ मन्दरो
राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥

विपरीतं यथा लाटडिण्डीरस्य—

चित्रं तावदिदं सुरेन्द्रभवनान्मन्दाकिनीपाथसा
केनाप्युत्तमतेजसा नृपतिना क्ष्मामण्डलं मण्डितम् ॥
नातश्चित्रतरं निशाकरकलालावण्यदुग्धोदधे !
भूमेर्यद्भवता विरिञ्चिनगरी कीर्तिप्लवैः प्लाव्यते ॥

**विसर्जनीयस्योत्वेन पदैर्निम्नोन्नतैरिव ॥**
**शार्दूलक्रीडितं याति पाठे सायासतामिव ॥ ३६ ॥**

यथा मुक्ताकणस्य—

लीलाचामरडम्बरो रतिपतेर्बालाम्बुदश्रेणयो
रागोद्दण्डशिखण्डिनो मुखविधूद्धूतास्तमोविभ्रमाः ॥
सौगन्ध्योद्धतधावदाकुलवलन्मत्तालिमालाकुलो
धम्मिल्लो हरिणीदृशो विजयते स्रस्तो रतिव्यत्यये ॥

**विच्छिन्नपादं पूर्वार्धे द्वितीयार्धे समासवत् ॥**
**शार्दूलक्रीडितं भाति विपरीतमतोऽधमम् ॥ ३७ ॥**

पूर्वार्धे यथा भट्टभवभूतेः—

अज्ञानाद्यदि वाधिपत्यरभसादस्मत्परोक्षं हृता
सीतेयं प्रविमुच्यतां शठ ! मरुत्पुत्रस्य हस्तेऽधुना ॥
नो चेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
च्छत्रच्छन्नदिगन्तमन्तकपुरं पुत्रैर्वृतो यास्यसि ॥

विपरीतं यथा रिस्सोः—

स्नातुं वाञ्छसि किं मुधैव धवलक्षीरोदफेनच्छटा-
छायाहारिणि वारिणि द्युसरितो डिण्डीरविस्तारिणि ॥
आस्ते ते कलिकालकल्मषमषीप्रक्षालनैकक्षमा
कीर्तिः सन्निहितैव सप्तभुवनस्वच्छन्दमन्दाकिनी ॥

**आद्यन्तयोर्गुणोत्कर्षकान्त्या सर्वातिशायिनोः ॥**
**शार्दूलक्रीडितं धत्ते मध्ये तद्गौरवोन्नतिम् ॥ ३८ ॥**

यथा कालिदासस्य—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ॥
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥

**आद्यन्ताकारविरहात्पर्यन्ते चाविसर्गतः ॥**
**शार्दूलक्रीडितं स्वस्य रूपं नैवोपलभ्यते ॥ ३९ ॥**

यथा श्रीयशोवर्मणः—

यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी ॥
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

**सुकुमाररसस्यात्र रक्षायै वृत्तमुद्धतम् ॥**
**वाक्पाकेनैव गलितं कविना नीतमल्पताम् ॥ ४० ॥**
**आकारगुरुयुक्तादिपर्यन्तान्तविसर्गिणी ॥**
**असंस्यूतविरामा च स्रग्धरा राजते तराम् ॥ ४१ ॥**

यथा राजशेखरस्य—

ताम्बूलीनद्धमुग्धक्रमुकतरुतलप्रस्तरे सानुगाभिः
पायं पायं कलायीकृतकदलिदलं नारिकेलीफलाम्भः ॥
सेव्यन्तां व्योमयात्राश्रमजलजयिनः सैन्यसीमन्तिनीभि-
र्दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः ॥

विपरीतं यथा चक्रस्य--

सत्यं पातालकुक्षिम्भरि चिरविलसद्दिकरि प्रीणिताभ्रं
श्रीगर्भस्वभ्रमभ्रंलिहलहरि हरिस्थानमप्येव किंचित् ॥
कल्पान्ते व्याप्तविश्वं परिरटति सरिन्नाथ ! पाथस्त्वदीयं
किं त्वेतत्कुम्भयोनेः करकुहरदरीपूरमाचामतोऽभूत् ॥

**आद्यन्ताकारविरहाद्बन्धदोषः स्फुटोऽपि यः ॥**
**अविलुप्तैर्विसर्गान्तैः स्रग्धरायां समीहते ॥ ४२ ॥**

यथा मम--

शौर्यश्रीकेशपाशः करिदलनमिलन्मौक्तिकव्यक्तपुष्पः
क्षोणीरक्षाभुजङ्गः कुलशिखरिलुठत्कीर्तिनिर्मोकपट्टः ॥
शत्रुव्रातप्रतापप्रलयजलधरस्फारधाराकरालः
प्रीत्यै लक्ष्मीकटाक्षः कुवलयविजयी यस्य पाणौ कृपाणः ॥

**एवमुद्देशलेशेन वृत्तानां दर्शितः क्रमः ॥**
**अनयैव दिशा सर्वं ज्ञेयं तज्ज्ञैर्यथोचितम् ॥ ४३ ॥**
**मन्दाक्रान्ता भवेन्मध्ये शालिनी पूरिताक्षरा ॥**
**उपेन्द्रवज्रा वंशस्थं पर्यन्तैकाक्षराधिकम् ॥ ४४ ॥**
**इत्यादि दर्शितं नेह स्वतः सिद्धो ह्ययं क्रमः ॥**
**न वेत्ति तद्वृत्तज्ञस्तज्ज्ञस्य क्वोपयुज्यते ॥ ४५ ॥**
**इति परिचितनानारूपवर्णागुणानां**
**विदितविविधदोषोद्देशलेशान्तराणाम् ॥**
**इदमतिशयसूक्ष्मैर्वृत्तचर्चाविचारै-**
**रभिहितमभिगम्यं योगितुल्याशयानाम् ॥ ४६ ॥**

**इति श्रीप्रकाशेन्द्रात्मजव्यासदासापरनामश्रीक्षेमेन्द्र-विरचिते सुवृत्ततिलके गुणदोषदर्शनं नाम द्वितीयो विन्यासः ।**

## तृतीयो विन्यासः ।

**प्रबन्धः सुतरां भाति यथास्थानं विवेचकः (निवेशितैः) ॥**
**निर्दोषैर्गुणसंयुक्तैः सुवृत्तैर्मौक्तिकैरिव ॥ १ ॥**
**शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रं च भेदतः ॥**

चतुष्प्रकारः प्रसरः सतां सारस्वतो मतः ॥ २ ॥
शास्त्रं काव्यविदः प्राहुः सर्वकाव्याङ्गलक्षणम् ॥
काव्यं विशिष्टशब्दार्थसाहित्यसदलङ्कृति ॥ ३ ॥
शास्त्रकाव्यं चतुर्वर्गप्रायं सर्वोपदेशकृत् ॥
भट्टिभौमककाव्यादि काव्यशास्त्रं प्रचक्षते ॥ ४ ॥
तत्र केवलशास्त्रेऽपि केचित्काव्यं प्रयुञ्जते ॥
तिक्तौषधरसोद्वेगे गुडलेशमिवोपरि ॥ ५ ॥

यथा वैद्यके वाग्भटस्य—

मधु मुखमिव सोत्पलं प्रियायाः कलरणना परिवादिनी प्रियेव ॥
कुसुमचयमनोहरा च शय्या किसलयिनी लतिकेव पुष्पिताग्रा ॥

शास्त्रं कुर्यात्प्रयत्नेन प्रसन्नार्थमनुष्टुभा ॥
येन सर्वोपकाराय याति सुस्पष्टसेतुताम् ॥ ६ ॥
काव्ये रसानुसारेण वर्णनानुगुणेन च ॥
कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥ ७ ॥
शास्त्रकाव्येऽतिदीर्घाणां वृत्तानां न प्रयोजनम् ॥
काव्यशास्त्रेऽपि वृत्तानि रसायत्तानि काव्यवित् ॥ ८ ॥
पुराणप्रतिबिम्बेषु प्रसन्नोपायवर्त्मसु ॥
उपदेशप्रधानेषु कुर्यात्सर्वेष्वनुष्टुभम् ॥ ९ ॥
नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात् ॥
यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम् ॥ १० ॥
उग्रगोग्रहसङ्ग्रामे तत्कालसदृशोपमाः ॥
दृष्टास्त एव वैराटैस्त एवाश्वाः किरीटिनः ॥ ११ ॥
तथाप्यवस्थासदृशैः साधुशब्दपदस्थिताः ॥
सुवृत्तैरेव शोभन्ते प्रबन्धाः सज्जना इव ॥ १२ ॥
वृत्तरत्नावली कामादस्थाने विनिवेशिता ॥
कथयत्यज्ञतामेव मेखलेव गले कृता ॥ १३ ॥
नहि नाम नवोन्मेषिकुचायाश्चारुचक्षुषः ॥
चिरत्यक्तस्मराचारे जराजीर्णकचे रुचिः ॥ १४ ॥
तस्मादत्र यथास्थाने विनियोगाय सङ्गतिः ॥
उदाहरणदिङ्मात्रैर्दर्शिताभिमता सताम् ॥ १५ ॥
आरम्भे सर्गबन्धस्य कथाविस्तरसङ्ग्रहे ॥
शमोपदेशवृत्तान्ते सन्तः शंसन्त्यनुष्टुभम् ॥ १६ ॥

आरम्भे यथा भर्तृमेण्ठस्य—

आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः ॥
प्रथयन्ति बलं बाह्वोः सितच्छत्रस्मिताः श्रियः ॥

कथाप्रसङ्गे यथाभिनन्दस्य—

तस्यां निजभुजोद्योगविजितारातिमण्डलः ॥
आखण्डल इव श्रीमान्राजा शूद्रक इत्यभूत् ॥

शमोपदेशे यथा मम—

पृथुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ॥
अन्वेष्टव्यं प्रयत्नेन तत्त्वज्ञैर्ज्योतिरान्तरम् ॥

**शृङ्गारालम्बनोदारनायिकारूपवर्णनम् ॥**
**वसन्तादि तदङ्गं च सच्छायमुपजातिभिः ॥ १७ ॥**

रूपवर्णनं यथा कालिदासस्य—

मध्येन सा वेदिविलग्नमध्या
वलित्रयं चारु बभार बाला ॥
आरोहणार्थं नवयौवनेन
कामस्य सोपानमिव प्रयुक्तम् ॥

वसन्तवर्णनं यथास्यैव—

बालेन्दुवक्राण्यविकासभावा-
द्बभुः पलाशान्यतिलोहितानि ॥
सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम् ॥

**रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु ॥**
**षाड्गुण्यप्रगुणा नीतिर्वंशस्थेन विराजते ॥ १८ ॥**

चन्द्रोदये यथास्यैव—

अङ्गुलीभिरिव केशसञ्चयं
सन्नियम्य तिमिरं मरीचिभिः ॥
कुड्मलीकृतसरोजलोचनं
चुम्बतीव रजनीमुखं शशी ॥

नीतिर्यथा भारवेः—

श्रियः कुरूणामधिपस्य पालनीं
प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ॥
स वर्णिलिङ्गी विदितः समाययौ
युधिष्ठिरं द्वैतवने वनेचरः ॥

**वसन्ततिलकं भाति सङ्करे वीररौद्रयोः ॥**
**कुर्यात्सर्गस्य पर्यन्ते मालिनीं द्रुततालवत् ॥ १९ ॥**

वीररौद्रयोर्यथा रत्नाकरस्य—

जृम्भाविकासितमुखं नखदर्पणान्त-
रविष्कृतप्रतिमुखं गुरुरोषगर्भम् ॥
रूपं पुनातु जनितारिचमूविमर्श-
मुद्वृत्तदैत्यवधनिर्वहणं हरेर्वः ॥

सर्गान्ते यथा कालिदासस्य—

अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
नियमविधिजलानां बर्हिषां चोपनेत्री ॥
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥

**उपपन्नपरिच्छेदकाले शिखरिणी मता ॥**
**औदार्यरुचिरौचित्यविचारे हरिणी वरा ॥ २० ॥**

उपपन्नपरिच्छेदे यथा भर्तृहरेः—

भवन्तो वेदान्तप्रणिहितधियामत्र गुरवो
विचित्रालापानां वयमपि कवीनामनुचराः ॥
तथाप्येवं ब्रूमो न हि परहितात्पुण्यमपरं
न चास्मिन्संसारे कुवलयदृशो रम्यमपरम् ॥

औदार्येऽप्यस्यैव—

विपुलहृदयैरन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ॥
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ।

**साक्षेपक्रोधधिक्कारे परं पृथ्वी भरक्षमा ॥**
**प्रावृट्प्रवासव्यसने मन्दाक्रान्ता विराजते ॥ २१ ॥**

साक्षेपे यथा यशोवर्मणः—

स यस्य दशकन्धरं कृतवतोऽपि कक्षान्तरे
गतः स्फुटमवन्ध्यतामधिपयोधि सान्ध्यो विधिः ॥
तदात्मज इहाङ्गदः प्रहित एष सौमित्रिणा
क स क स दशाननो ननु निवेद्यतां राक्षसः ॥

प्रावृट्प्रवासे यथा कालिदासस्य—

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ॥

आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥

**शौर्यस्तवे नृपादीनां शार्दूलक्रीडितं मतम् ॥**
**सावेगपवनादीनां वर्णने स्रग्धरा मता ॥ २२ ॥**

शौर्यस्तवे यथा श्रीचक्रस्य—

नेतुं नौभिरिभा न यान्ति दृतिभिस्तार्याः कियन्तो हया-
स्तज्जानुद्वयसेन देव ! पयसा सैन्यं समुत्तार्यताम् ॥
नो चेद्भङ्गभयद्रुतारिवनितानेत्रप्रणालीलुठ-
द्बाष्पाम्भःप्लवपूरितोभयतटी द्राग्वर्त्स्यतीरावती ॥

सावेगपवने यथा मम पवनपञ्चाशिकायाम्—

प्रेङ्खच्छङ्खाभिघातस्फुटदखिलचलच्छुक्तिनिर्मुक्तमुक्ता-
मुक्तव्यक्ताट्टहासाः स्मरनृपसकलद्वीपसञ्चारचाराः ॥
सर्पत्कर्पूरपूरप्रवणकरचिता दिग्वधूकर्णपूरा
धावन्त्याध्मातविश्वा रतविधुतवधूबन्धवो गन्धवाहाः ॥

**दोधकतोटकनर्कुटयुक्तं**
**मुक्तकमेव विराजति सूक्तम् ॥**
**निर्विषयस्तु रसादिषु तेषां**
**निर्नियमश्च सदा विनियोगः ॥ २३ ॥**

**शेषाणामप्यनुक्तानां वृत्तानां विषयं विना ॥**
**वैचित्र्यमात्रपात्राणां विनियोगो न दर्शितः ॥ २४ ॥**
**इत्येष वश्यवचसां सर्ववृत्तप्रसङ्गिनाम् ॥**
**उक्तो विभागः सद्वृत्तविनिवेशे विशेषवान् ॥ २५ ॥**
**एकस्मिन्नेव यैर्वृत्ते कृतो द्वित्रेषु वा श्रमः ॥**
**न नाम विनियोगार्हास्ते दरिद्रा इवोत्सवे ॥ २६ ॥**
**वृत्ते यस्य भवेद्यस्मिन्नभ्यासेन प्रगल्भता ॥**
**स तेनैव विशेषेण स्वसन्दर्भं प्रदर्शयेत् ॥ २७ ॥**
**एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते ॥**
**तत्रैवातिचमत्कारादन्यत्रारब्धपूरणात् ॥ २८ ॥**
**अनुष्टुप्सततासक्ता साभिनन्दस्य नन्दिनी ॥**
**विद्याधरस्य वदने गुलिकेव प्रभावभूः ॥ २९ ॥**
**स्पृहणीयत्वचरितं पाणिनेरुपजातिभिः ॥**
**चमत्कारैकसाराभिरुद्यानस्येव जातिभिः ॥ ३० ॥**
**वृत्तच्छत्रस्य सा कापि वंशस्थस्य विचित्रता ॥**

